"सूरिं श्रीविजयानन्दं, विजयानन्दकारकम् । "आत्माराम" इति ख्यातं, वन्दे सद्गुणलब्धये ॥ १ ॥"

# ॥ इति श्रीकल्पसूत्रं सुबोधिकावृत्तिसहितम् ॥

"वल्लभविजयस्त्वेष, शिष्यशिष्यस्य शिष्यकः । नित्यं स्मरति यं भक्त्या, स ददातु सदा सुखम् ॥ १ ॥"

भवदप्रमत्तः ॥ ११ ॥ तस्य स्फुरदुरुकीर्त्ते–र्वाचकवरकीर्त्तिविजयपूज्यस्य ॥ विनयविजयो विनेयः, सुबोधिकां व्यरचयत्कल्पे ॥ १२ ॥ [ चतुर्भिः कलापकम् ] समशोधयंस्तथैनां । पण्डितसंविग्नसहृदय-वतंसाः ॥ श्रीविमलहर्षवाचक–वंशे मुक्तामणिसमानाः ॥ १३ ॥ धिषणानिर्जितधिषणाः, सर्वत्र प्रसृतकीर्त्तिकर्पूराः ॥ श्रीभावविजयवाचक–कोटीराः शास्त्रवसुनिकषाः ॥ १४ ॥ [ युग्मम् ] रसनिधिरसशशिवर्षे । ज्येष्ठे मासे समुज्वले पक्षे ॥ गुरुपुष्ये यत्नोऽयं । सफलो जज्ञे द्वितीयायाम् ॥१५॥ श्रीरामविजयपण्डित–शिष्यश्रीविजयविबुधमुख्यानाम् । अभ्यर्थनापि हेतु–र्विज्ञेयोऽस्याः कृतौ विवृतेः ॥ १६ ॥ यावद्धात्रीमृगाक्षीधरणिधरभरश्रीफलैः पूर्णगर्भं । चञ्चद्वृक्षौघदर्भं निषधगिरिमहाकुङ्कुमामत्रचित्रम् ॥ जम्बूद्वीपाभिधानं हिमगिरिरजतं मङ्गलस्थालमेत–द्धत्ते तावत् सुबोधा विबुधपरिचिता नन्दतात् कल्पवृत्तिः ॥१७॥ यावद्व्योमतरङ्गिणीजलमिलत्कल्लोलमालाकुला । दिग्दन्तावलकीर्णपुष्करकणासेकप्रणष्टश्रमम् ॥ ज्योतिश्चक्रमनुक्रमेण नभसि भ्राम्यत्यजस्रं क्षितौ । तावन्नन्दतु कल्पसूत्रविवृतिर्विद्वज्जनैराश्रिता ॥१८॥ प्रत्यक्षरं गणनया । ग्रंथमानं शताः स्मृताः । चतुःपंचाशदेतस्यां । वृत्तौ सूत्रसमन्वितम् ॥१९॥

---

क्षितीश्वरततिस्तुत्यांह्रिपङ्केरुहः, सूरिर्दूरितदुःखवृन्दविजयानन्दः क्षमाभृद्विभुः ॥ यो गौरैर्गुरुभिर्गुणैर्गणिवरं श्रीगौतमं स्पर्द्धते । लब्धीनामुदधिर्द्धीयितयशाः शास्त्राब्धिपारं गतः ॥ ६ ॥ यच्चारित्रमखिन्नकिन्नरगणैर्जेगीयमानं जग—ज्जाग्रज्जन्मजराविपत्तिहरणं श्रुत्वा जयन्ती पितुः ॥ वाञ्छापूर्त्तिमियर्त्ति युग्ममथ तल्लेभे सहस्तं स्पृहा—वैयग्र्यं गुणरागिणोऽग्रिमगुणग्रामाभिरामात्मनः ॥ ७ ॥

[ किञ्च ] श्रीहीरसूरिसुगुरोः प्रवरौ विनेयौ । जातौ शुभौ सुरगुरोरिव पुष्पदन्तौ ॥ श्रीसोमसोमविजयाभिधवाचकेन्द्रः । सत्कीर्त्तिकीर्त्तिविजयाभिधवाचकश्च ॥ ८ ॥ सौभाग्यं यस्य भाग्यं कलयितुममलं कः क्षमः सक्षमस्य । नो चित्रं यच्चरित्रं जगति जनमनः कस्य चित्रीयते स्म ॥ चक्राणा मूर्खमुख्यानपि विबुधमणीन् हस्तसिद्धिर्यदीया । चिन्तारत्नेन भेदं शिथिलयति सदा यस्य पादप्रसादः ॥ ९ ॥ आबाल्यादपि यः प्रसिद्धमहिमा वैरङ्गिकग्रामणीः । प्रष्ठः शाब्दिकपङ्क्तिषु प्रतिभटैर्जय्यो न यस्तार्किकैः ॥ सिद्धान्तोदधिमन्दरः कविकलाकौशल्यकीर्त्युद्भवः । शश्वत्सर्वपरोपकाररसिकः संवेगवारांनिधिः ॥ १० ॥ विचाररत्नाकरनामधेय—प्रश्नोत्तराद्यद्भुतशास्त्रवेधाः ॥ अनेकशास्त्रार्णवशोधकश्च । यः सर्वदैवाऽ

## ॥ अथ प्रशस्तिः ॥

सौरभ्योपहृतप्रबुद्धमधुपः श्रीहीरसूरीश्वरः । शा-
आसीद्धीरजिनेन्द्रपट्टपदवीकल्पद्रुमः कामदः । सौरभ्योपहृतप्रबुद्धमधुपः श्रीहीरसूरीश्वरः । शा-
खोत्कर्षमनोरमस्फुरदुरुच्छायः फलप्रापक-श्चञ्चन्मूलगुणः सदातिसुमनाः श्रीमान् मरुत्पूजितः ॥ १ ॥
योजीवाभयदानडिण्डिममभिपात् स्वीयं यशोडिण्डिमं । षण्मासान् प्रतिवर्षमुग्रमखिले भूमण्डलेऽवी-
वदत् ॥ भेजे धार्मिकतामधर्मरसिको म्लेच्छाग्रिमोऽकब्बरः । श्रुत्वा यद्वदनादनाविलमतिर्धर्मोपदेशं
शुभम् ॥ २ ॥ तत्पट्टोन्नतपूर्वपर्वतशिरःस्फूर्त्तिक्रियाहर्मणिः । सूरिः श्रीविजयादिसेनसुगुरुर्भव्येष्टचि-
न्तामणिः ॥ शुभ्रैर्यस्य गुणैरिवानघघनैरावेष्टितः शोभते । भूगोलः किल यस्य कीर्तिसुदृशः क्रीडाकृते
कन्दुकः ॥ ३ ॥ येनाकब्बरपर्षदि प्रतिभटान्निर्जित्य वाग्वैभवैः । शौर्याश्चर्यकृता वृता परिवृता लक्ष्म्या
जयश्रीकनी ॥ चित्रं मित्र किमत्र चारुमहसस्तेनास्य वृद्धा सती । कीर्त्तिः पत्यपमानशङ्कितमना याता
दिगन्तानितः ॥ ४ ॥ विजयतिलकसूरिर्भूरिसूरिप्रशस्यः । समजनि मुनिनेता तस्य पट्टेऽच्छचेताः ॥
हरहसितहिमानीहंसहारोज्ज्वलश्री—स्त्रिजगति वरिवर्ति स्फूर्त्तियुक् यस्य कीर्त्तिः ॥ ५ ॥ तत्पट्टे जयति

पृष्टार्थकथनं तेन सहितं सव्याकरणं भुज्जो भुज्जो भूयो भूय उपदर्शयति, इत्यहं ब्रवीमीति श्रीभद्रबा-

**सवागरणं भुज्जो भुज्जो उवदंसेइत्ति बेमि ॥ ६४ ॥ इति पज्जोसवणा कप्पो दसासुअक्खंधस्स अट्ठमं अज्झयणं सम्मत्तं ॥ ८ ॥ [ग्रं. १२१५]**

हुस्वामी स्वशिष्यान्प्रतीदमुवाचेति पर्युषणाकल्पो नाम दशाश्रुतस्कंधस्याष्टममध्ययनं समर्थितम् ॥६४॥

॥ इति श्रीजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्यरत्नमहोपाध्यायश्रीकीर्त्तिविजय-
गणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां
सामाचारीव्याख्यानं संपूर्णम् ॥ ९ ॥

इति नवमः क्षणः समाप्तः तत्समाप्तौ समाप्तश्चायं सामाचारीव्याख्याननामा तृतीयोऽधिकारः ॥ ३ ॥

इत्यादितः बेमि इति यावत् , तत्र तेणं तस्मिन् काले चतुर्थारकपर्यन्ते, तस्मिन्समये राजगृहनगरसमवसरणावसरे, श्रमणो भगवान्महावीरो बहूनां श्रमणादीनां ६ मध्यगत एव, न तु कोणके प्रविश्य प्रच्छन्नतयेति भावः, एवमाख्याति कथयति, एवं भाषते वाग्योगेन, एवं प्रज्ञापयति फलकथनेन, एवं प्ररूपयति दर्पणे इव श्रोतृहृदये संक्रमयति, पर्युषणा कल्पो नाम अध्ययनं सअट्ठंति अर्थेन

चेव एवमाइक्खइ, एवं भासइ, एवं पण्णवेइ, एवं परूवेइ, पज्जोसवणाकप्पो नाम अज्झयणं, सअट्ठं, सहेउअं, सकारणं, ससुत्तं, सअत्थं, स उभयं,

प्रयोजनेन सहितं, न तु निष्प्रयोजनं सहेउअं सहेतुकं, हेतवो निमित्तानि, यथा गुरून् पृष्ट्वा सर्वं कर्तव्यं तत्केन हेतुना ? यत आचार्याः प्रत्यपायं जानंतीत्यादयो हेतवस्तैः सहितं सकारणंति कारणं अपवादो यथा 'अंतराविअ से कप्पइ' इत्यादिस्तेन सहितं, सूत्रसहितं, अर्थसहितं, उभयसहितं, च व्याकरणं

भवग्रहणे भवे सिद्ध्यंति कृतार्था भवंति, बुध्यंते केवलज्ञानेन, मुच्यंते कर्मपंजरात्, परिनिर्वान्ति कर्मकृतसर्वतापोपशमनात् शीतीभवंति, सर्वदुःखानां शारीरमानसानां अंतं कुर्वंति, उत्तमया तु तत्-

मुचंति परिणिव्वायंति सव्वदुक्खाणमंतं करेंति, अत्थेगइया दुच्चे णं भवग्गहणे णं सिज्झंति जाव अंतं करेंति, अत्थेगइया तच्चे णं जाव अंतं करेंति, सत्तट्ठभवग्गहणाइं पुण नातिक्कमंति ॥ ६२ ॥ ते णं काले णं ते णं समए णं समणे भगवं महावीरे रायगिहे नगरे गुणसिले चेइए बहूणं समणाणं बहूणं समणीणं, बहूणं सावयाणं, बहूणं सावियाणं, बहूणं देवाणं, बहूणं देवीणं, मज्झगए

पालनया द्वितीयभवग्रहणे, मध्यमया तृतीयभवे, जघन्ययाऽपि एतदाराधनया सप्ताष्टभवांस्तु नातिक्रामंतीति भावः ॥ ६२ ॥ अथैतन्न स्वबुद्ध्या प्रोच्यते, किंतु भगवदुपदेशपारतंत्र्येणेत्याह। तेणं कालेणं

अहासुत्तंति यथा सूत्रे भणितं तथा, न तु सूत्रविरुद्धं, अहाकप्पंति यथा अत्रोक्तं तथाकरणे कल्पोऽन्यथा त्वकल्प इति यथाकल्पं, एतत्कुर्वतश्च अहामग्गंति ज्ञानादित्रयलक्षणो मार्ग इति यथामार्गं, अहातच्चंति अत एव याथातथ्यं सत्यमित्यर्थः सम्मंति सम्यग् यथावस्थितं काएणंति उपलक्षणत्वात्कायवाङ्मानसैः फासित्ता स्पृष्ट्वा आसेव्य पालित्ता पालयित्वा अतिचारेभ्यो रक्षयित्वा सोभित्ता

फासित्ता पालित्ता सोभित्ता तीरित्ता किट्टित्ता आराहित्ता आणाए अणुपालित्ता अत्थेगइया समणा निग्गंथा तेणेव भवग्गहणे णं सिज्झंति बुज्झंति

शोभयित्वा विधिवत्करणेन तीरित्ता तीरयित्वा यावज्जीवं आराध्य किट्टित्ता कीर्तयित्वा अन्येभ्य उपदिश्य आराहित्ता आराध्य यथोक्तकरणेन आणाएत्ति आज्ञया जिनोपदेशेन अणुपालित्ता यथा पूर्वं पालितं तथा पश्चात्परिपाल्य अत्थेगइआ संत्येके ये अत्युत्तमया तत्पालनया श्रमणा निर्ग्रन्थाः तस्मिन्नेव

अकथयित्वा गतांस्तु कुत्र गवेषयंति ? ॥६१॥ वासावासं इत्यादितः उवायणावित्तए इति पर्यंतं, तत्र जाव इत्यादि—वर्षाकल्पौषधवैद्यार्थं ग्लानसारकरणार्थं वा यावच्चत्वारि पंच योजनानि गत्वा प्रतिनिवर्तितुं कल्पते, न तु तत्र स्थातुं कल्पते, स्वस्थानं प्राप्तुमक्षमश्चेत्तदा तस्याऽन्तराऽपि वस्तुं कल्पते, न पुनस्त-

जाव चत्तारि पंच जोयणाइं गंतुं पडिणियत्तए, अंतरावि य से कप्पइ वत्थ-
वए, नो से कप्पइ तं रयणिं तत्थेव उवायणावित्तए ॥ ६२ ॥ इच्चेइयं संव-
च्छरियं थेरकप्पं अहासुत्तं अहाकप्पं अहामग्गं अहातच्चं सम्मं काएणं

त्रैव, एवं हि वीर्याचाराराधनं स्यादिति, यत्र दिने वर्षाकल्पादि लब्धं तद्दिनरात्रिं तत्रैव नातिक्रमयितुं कल्पते, कार्ये जाते सद्य एव बहिर्निर्गत्य तिष्ठेदिति भावः ॥६२॥ इच्चेइयं इत्यादितः नाइक्कमंति इति यावत्, तत्र इच्चे इयं इतिरुपप्रदर्शने तं पूर्वोपदर्शितं सांवत्सरिकं वर्षारात्रिकं स्थविरकल्पं

अनुदिशं आग्नेय्यादिकां विदिशं, अवगिज्झिय अवगृह्य उद्दिश्य अहमेनां दिशं अनुदिशं वा यास्यामीत्यन्यसाधुभ्यः कथयित्वा भक्तपानं गवेषयितुं कल्पते, सेकिमाहुभंते तत्कुतः ? इति शिष्यप्रश्ने गुरुराह, ओसण्णंति प्रायः श्रमणा भगवंतो वर्षासु तपःसंप्रयुक्ताः प्रायश्चित्तवहनार्थं संयमार्थं, स्निग्ध-

दिसिं वा अवगिज्झिय अवगिज्झिय भत्तं पाणं गवेसित्तए, से किमाहु भंते! ओसण्णं समणा भगवंतो वासासु तवसंपउत्ता भवंति, तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा, तामेव दिसिं वा अणुदिसिं वा समणा भगवंतो पडिजागरंति ॥ ६१ ॥ वासावासं प०कप्पइ निग्गंथाण वा निग्गंथीण वा

काले मोहजयार्थं वा, षष्ठादितपश्चारिणो भवंति, ते च तपस्विनो दुर्वलास्तपसैव कृशांगाश्च अत एव क्लांताः संतः कदाचिन्मूर्च्छेयुः प्रपतेयुर्वा ततः श्रमणास्तान् तत्रैव दिगादौ प्रतिजाग्रति गवेषयंति,

दुष्कृतं ददौ ॥ ५९ ॥ वासवासं इत्यादितः पमज्जणा इति यावत्, तत्र वर्षासु त्रय उपाश्रया ग्राह्या जंतुसंसक्त्यादिभयात् 'तमिति पदं' तत्रेत्यर्थे, तत्र त्रिषु उपाश्रयेषु वेउव्वियापडिलेहा द्वौ पुनः पुनः प्रतिलेख्यौ, द्रष्टव्यौ इति भावः, साइज्जिया पमज्जणा 'साइज्जि' धातुरास्वादने, ततः उपभुज्यमानो य उपाश्रयस्तत्संबंधिनी प्रमार्जना कार्या, यतो यस्मिन्नुपाश्रये साधवस्तिष्ठंति तं प्रातः प्रमार्जयंति,

उवस्सया गिण्हित्तए, तं–वेउव्विया पडिलेहा, साइज्जिया पमज्जणा ॥ ६० ॥

वासावासं प० निग्गंथाण वा निग्गंथीण वा कप्पइ अण्णयरिं दिसिं वा अणु-

पुनर्भिक्षागतेषु साधुषु, पुनस्तृतीयप्रहरांते चेति वारत्रयं, ऋतुबद्धे च वारद्वयं, असंसक्तेऽयंविधिः, संसक्ते च पुनः पुनः प्रमार्जयंति। शेषोपाश्रयद्वयं तु प्रतिदिनं दृशा पश्यंति, कोऽपि तत्र ममत्वं मा कार्षीदिति, तृतीयदिने च पादप्रोंच्छनेन प्रमार्जयंतीति, अत उक्तं 'वेउव्वियापडिलेहत्ति' ॥ ६० ॥ वासावासं इत्यादितः पडिजागरंति इति यावत्, तत्र अण्णयरिं इत्यादि–अन्यतरां दिशं पूर्वादिकां,

राधकत्वं, तथा हि—अन्यदा कौशाम्ब्यां सूर्याचंद्रमसौ स्वविमानेन श्रीवीरं वंदितुं समागच्छतः स, चंदना च दक्षास्तत्समयं विज्ञाय स्वस्थानं गता, मृगावती च सूर्यचंद्रगमनात्तमसि विस्तृते सति रात्रिं विज्ञाय भीता उपाश्रयमागत्येर्यापथिकीं प्रतिक्रम्य निद्राणां चंदनां प्रवर्त्तिनीं क्षम्यतां ममापराध इ-त्युक्तवती, चंदनाऽपि भद्रे! कुलीनायास्तवेदृशं न युक्तमित्युवाच, साप्यूचे भूयो नेदृशं करिष्ये इति पादयोः पतिता, तावता प्रवर्तिन्या निद्रागात्, तया च तथैव क्षमणेन केवलं प्राप्तं, सर्पसमीपात्करा-

खु सामण्णं ॥५९॥ वासावासं प०कप्पइ निग्गंथाण वा निग्गंथीण वा तओ

पसारणव्यतिकरेण प्रबोधिता प्रवर्तिन्यपि कथं सर्पोऽज्ञायीति पृच्छंती तस्याः केवलं ज्ञात्वा मृगावतीं क्षमयंती केवलमाससाद, तेनेदृशं मिथ्यादुष्कृतं देयं, न पुनः कुंभकारक्षुल्लकदृष्टांतेन, तथाहि—कश्चि-त्क्षुल्लको भांडानि काणीकुर्वन् कुंभकारेण निवारितो मिथ्यादुष्कृतं दत्ते, न पुनस्ततो निवर्तते, ततः स कुंभकारोऽपि कर्करैः क्षुल्लककर्णमोटनं कुर्वन् पुनः पुनः क्षुल्लेन पीड्येऽहमित्युक्तोऽपि मुधा मिथ्या-

राधना, तस्मात् आत्मना उपशमितव्यं। सेकिमाहुत्ति तत्कुतः? इति प्रश्ने गुरुराह—उवसम सारं खु सामण्णं उपशमप्रधानं खु निश्चये श्रामण्यं श्रमणत्वं। अत्र दृष्टांतो यथा—सिंधुसौवीरदेशाधिपतिर्दशमुकुटबद्धभूपसेव्य उदयनराजो विद्युन्मालिसमर्पितश्रीवीरप्रतिमार्चनागतनीरोगीभूतगंधारश्राद्धार्पितगुटिकाभक्षणतो जाताद्भुतरूपायाः सुवर्णगुलिकाया देवाधिदेवप्रतिमायुतायाः अपहर्तारं मालवदेशभूपं चतुर्दशभूपसेव्यं चंडप्रद्योतराजं देवाधिदेवप्रतिमाप्रत्यानयनोत्पन्नसंग्रामे बद्ध्वा पश्चादागच्छन् दशपुरे

**आराहणा, तम्हा अप्पणा चेव उवसमियव्वं, से किमाहु भंते! उवसमसारं**

वर्षासु तस्थौ, वार्षिकपर्वणि च स्वयमुपवासं चक्रे, भूपादिष्टसूपकारेण भोजनार्थं पृष्टेन चंडप्रद्योतेन विषभिया श्राद्धस्य ममाप्यद्योपवास इति प्रोक्ते धूर्तसाधर्मिकेऽप्यस्मिन्नक्षमिते मम प्रतिक्रमणं न शुद्ध्यतीति तत्सर्वस्वप्रदानतस्तत्काले मम दासीपतिरित्यक्षराच्छादनाय स्वमुकुटपट्टदानतश्च श्रीउदयनराजेन चंडप्रद्योतः क्षमितोऽत्र श्रीउदयनराजस्यैवाराधकत्वं, तस्यैवोपशांतत्वात्। कश्चिच्चोभयोरप्या-

णीयो व्यवहारात् , अथापरिणतधर्मत्वाल्लघुर्ज्येष्ठं न क्षमयति तदा किं कर्तव्यमित्याह। रायणिएवि सेहं खामिज्जा ज्येष्ठोऽपि शैक्षं क्षमयति, ततः क्षंतव्यं स्वयमेव, क्षमयितव्यः परः, उपशमितव्यं स्वयं, उपशमयितव्यः परः, सुमइ संपुच्छणाबहुलेण होयव्वं शोभना मतिः सुमती रागद्वेषरहिता तत्पूर्वं या

सेहे रायणियं खामिज्जा, रायणिएवि सेहं खामेज्जा, [ ग्रं०१२०० ]
खमियव्वं, खमावियव्वं, उवसमियव्वं, उवसमावेयव्वं, सुमइसंपुच्छणाबहुलेण
होयव्वं, जो उवसमइ तस्स अत्थि आराहणा, जो न उवसमइ तस्स नत्थि

संपृच्छना सूत्रार्थविषया समाधिप्रश्नो वा, तद्बहुलेन भवितव्यं, येन सहाधिकरणमुत्पन्नमासीत्तेन सह निर्मलमनसा आलापादिकार्यमिति भावः, अथ द्वयोर्मध्ये यद्येकः क्षमयति नापरस्तदा का गतिरित्याह । जोउवसमइ इत्यादि—य उपशाम्यति अस्ति तस्याराधना, यो नोपशाम्यति नास्ति तस्या-

भाव. । तथाऽन्योऽपि दृष्टांतो यथा—खेटवास्तव्यो रुद्रनामा द्विजो वर्षाकाले केदारान् कर्ष्टुं हलं लात्वा क्षेत्रं गतो हलं वाहयतस्तस्य गलिर्बलीवर्द उपविष्टस्तोत्रेण ताड्यमानोऽपि यावन्नोत्तिष्ठति तदा क्रुद्धेन तेन केदारत्रयमृत्खडैरेवाहन्यमानो मृत्खंडस्थगितमुखः श्वासरोधान्मृतः, पश्चात्स पश्चात्तापं विद् धानो महास्थाने गत्वा स्ववृत्तांतं कथयन्नुपशांतो न वेति तैः पृष्टो नाद्यापि ममोपशांतिरिति वदन् द्विजैरपां-

वणाओ अहिगरणं वयइ से निज्जूहियवे सिया ॥ ५८ ॥ वासावासं प०इह खलु निग्गंथाण वा निग्गंथीण वा अज्जेव कक्खडे कडुए विग्गहे समुप्पज्जिज्जा,

क्तेयश्चक्रे, एवं अनुपशांतकोपतया वार्षिकपर्वणि अकृतक्षामणः साध्वादिरपि । उपशांतोपस्थितस्य च मूलं दातव्यं ॥ ५८ ॥ वासावासं इत्यादितः सामण्णं इति यावत्, तत्र अज्जेव अद्यैव पर्युषणादिने एव कक्खडे इत्यादि—कक्खड उच्चैःशब्दरूपः, कटुको जकारमकारादिरूपो, विग्रहः कलहः समुत्पद्येत तदा सेहेत्ति शैक्षो लघुः, रात्निकं ज्येष्ठं क्षमयति, यद्यपि ज्येष्ठः सापराधस्तथापि लघुना ज्येष्ठः क्षम-

वासावासं इत्यादितः निज्जूहियव्वे सिया इति पर्यंतं, तत्र अहिगरणं इत्यादि—अधिकरणं राटिस्तत्करं वचनमपि अधिकरणं तत् निर्ग्रंथानां निर्ग्रंथीनां वा वक्तुं न कल्पते, अथ यः कोप्यज्ञानादधिकरणं वदति स एवं वक्तव्यः स्यात्, यत् हेआर्य! त्वं अकल्पेन अनाचारेण वदसि, यतः पर्युषणादिनतोऽर्वाग् तद्दिने एव वा यदधिकरणं उत्पन्नं तत्पर्युषणायां क्षमितं, यच्च त्वं पर्युषणातः परं अपि अधिकरणं

निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ अहिगरणं वइत्तए, जे णं निग्गंथो वा निग्गंथी वा परं पज्जोसवणाओ अहिगरणं वयइ से णं अकप्पे णं अज्जो वयसीति वत्तव्वं सिया, जे णं निग्गंथो वा निग्गंथी वा परं पज्जोस-

वदसि सोऽयमकल्प इति भावः, यश्चैवं निवारितोऽपि पर्युषणातः परमधिकरणं वदति स निज्जूहिय-व्वे सिआ निर्यूहितव्यस्तांबूलिकपत्रदृष्टांतेन संघाद्बहिः कर्तव्यः स्यात्, यथा तांबूलिकेन विनष्टं पत्रं अन्यपत्रविनाशभयाद्बहिः क्रियते, तद्वदयमप्यनंतानुबंधिक्रोधाविष्टो विनष्ट एवेत्यतो बहिः कर्तव्य इति

क्षुरेणाऽपि कारयितुमसमर्थो व्रणादिमच्छिरा वा तस्य केशाः कर्त्तर्या कल्पनीयाः पक्खिआ आरोवणा कोऽर्थः? पक्षे २ संस्तारकदवरकाणां बंधा मोक्तव्याः प्रतिलेखितव्याश्चेत्यर्थः, अथवा आरोपणा प्रायश्चित्तं पक्षे २ ग्राह्यं सर्वकालं, वर्षासु विशेपतः मासिए खुरमुंडेत्ति असहिष्णुना मासि २ मुंडनं कारणीयं, अद्धमासिए कत्तरिमुंडेत्ति यदि कर्त्तर्या कारयति तदा पक्षे २ गुप्तं कारणीयं, क्षुरकर्त्तर्योश्च लोचे प्राय-

होयव्वं सिया, पक्खिया आरोवणा, मासिए खुरमुंडे, अद्धमासिए कत्तरिमुंडे, छम्मासिए लोए। संवच्छरिए वा थेरकप्पे ॥५७॥ वासावासं प०नो कप्पइ

श्चित्तं निशीथोक्तं यथासंख्यं लघुगुरुमासलक्षणं ज्ञेयं, छम्मासिए लोएत्ति पाण्मासिको लोचः संवच्छरिए वा थेरकप्पेत्ति स्थविराणां वृद्धानां जराजर्जरत्वेनाऽसामर्थ्याद् दृष्टिरक्षार्थं च, संवच्छरिए वा थेरकप्पेत्ति सांवत्सरिको वा लोचः स्थविरकल्पे स्थितानामिति, अर्थात्तरुणानां चातुर्मासिक इति ॥ ५७ ॥

लोओ उ जिणाणं,निच्चं थेराण वासवासासु" इतिवचनात्। यावत्तां रजनीं भाद्रसितपंचमीरात्रिं सांप्रतं-चतुर्थीरात्रिं नातिक्रमयेच्चतुर्थ्या अर्वागेव लोचं कारयेत्, अयंभावः—यदि समर्थस्तदा वर्षासु नित्यं लोचं कारयेदसमर्थोऽपि तां रात्रिं नोल्लंघयेत्पर्युषणापर्वणि लोचं विना प्रतिक्रमणस्यावश्यमकल्प्यत्वात्, केशेषु हि अप्कायविराधना तत्संसर्गाच्च यूकाः संमूर्च्छंति, ताश्च कंडूयमानो हंति, शिरसि नखक्षतं वा स्यात्, यदि क्षुरेण मुंडापयति कर्त्तर्या वा तदाऽऽज्ञाभंगाद्या दोषाः, संयमात्मविराधना, यूकाश्छिद्यंते,

केसे तं रयणिं उवायणावित्तए, अज्जेणं खुरमुंडेण वा, लुक्कसिरएण वा

नापितश्च पश्चात्कर्म करोति, शासनापभ्राजना च, ततो लोच एव श्रेयान्। यदि चाऽसहिष्णोर्लोचे कृते ज्वरादिर्वा स्यात् कस्यचित्, बालो वा रुद्याद्धर्मं वा त्यजेत्ततो न तस्य लोच इत्याह अज्जेणं इत्यादि—आर्येण साधुना लुक्कसिरएण उत्सर्गतो लुंचितशिरोजेन, अपवादतो बालग्लानादिना मुंडितशिरोजेन भवितव्यं स्यात्,तत्र केवलं प्रासुकोदकेन शिरः प्रक्षाल्य नापितस्यापि तेन करौ क्षालयति, यस्तु

स्यादयस्तृणानि प्रतीतानि, बीजानि तत्तद्वनस्पतीनां नवोद्भिन्नानि किशलयानि, पनका उल्लयो, हरितानि बीजेभ्यो जातानि वर्षासु बाहुल्येन भवन्तीति। तओमत्तगाइंति त्रीणि मात्रकाणि, उच्चार १ प्रश्रवण २ श्लेष्मार्थं ३। मात्रकाभावे वेलातिक्रमेण वेगधारणे आत्मविराधना, वर्षति च बहिर्गमने संयम-

पाणा य तणा य बीया य पणगा य हरियाणि य भवंति ॥ ५५ ॥ वासावासं प०कप्पइ निग्गंथाण वा निग्गंथीण वा तओ मत्तगाइं गिण्हित्तए, तंजहा-उच्चारमत्तए (१) पासवणमत्तए (२) खेलमत्तए (३) ॥ ५६ ॥ वासावासं प०नो कप्पइ निग्गंथाण वा निग्गंथीण वा परं पज्जोसवणाओ गोलोमप्पमाणमित्तेवि



विराधनेति ॥५५॥५६॥ वासावासं इत्यादितः संवच्छरिए थेरकप्पे इति यावत् तत्र परं पज्जोसवणाओत्ति पर्युषणातः परं आषाढचतुर्मासकादनंतरं गोलोमप्रमाणा अपि केशा न स्थापनीया आस्तां दीर्घाः "धुव-

मितासनिकस्य आतापिनो वस्त्रादेरातपे दातुः समितस्य समितिषु दत्तोपयोगस्य अभीक्ष्णं प्रतिलेखनाशीलस्य प्रमार्जनाशीलस्य ईदृशस्य साधोस्तथा तथा तेन २ प्रकारेण संयमः सुखाराध्यो भवति ॥५४॥ वासावासं इत्यादितः मत्तए इति यावत् सूत्रद्वयी, तत्र उच्चारपासवणभूमीओत्ति अनधिसहिष्णोस्ति-

सीलस्स तहा तहाणं संजमे सुआराहए भवइ ॥ ५४ ॥ वासावासं प०कप्पइ निग्गंथाण वा निग्गंथीण वा तओ उच्चारपासवणभूमीओ पडिलेहित्तए, न तहा हेमंतगिम्हासु जहा णं वासावासासु, से किमाहु भंते ! वासासु णं ओसन्नं

स्रोऽन्तः, अधिसहिष्णोश्च बहिस्तिस्रो, दूरव्याघाते मध्या भूमिस्तद्व्याघाते चासन्नेति आसन्नमध्यदूरभेदात्त्रिधा भूमिः प्रतिलेखितव्या, न तहा इत्यादि—न तथा हेमंतग्रीष्मयोर्यथा वर्षासु सेकिमाहुभंतेत्ति तत्कुतः ? इति प्रश्ने गुरुराह—वासासुणं इत्यादि—वर्षासु ओसन्नंति प्रायेण प्राणाः शंखनकेंद्रगोपकु-

वाच्यं आङा प्रतिना च व्यवधानात्खलु न भविष्यतीति उपसर्गो न व्यवधायीति न्यायात्, किं च समागच्छतीत्यत्र आङा व्यवधानेन समोगमृच्छिपृच्छीत्यादिनात्मनेपदाप्राप्तेरस्य न्यायस्यानित्यत्वादत्रोपसर्गस्य व्यवधायकत्वं भविष्यतीत्यपि न वाच्यं, न हि खल्विषये उपसर्गस्य व्यवधायकत्वं, उपसर्गात्खल्घञोश्चेति सूत्रेण ईषत्प्रलंभं दुष्प्रलंभं इत्यादि प्रयोगज्ञापनादिति दिक् ] ॥ ५२ ॥

पमज्जणासीलस्स तहातहाणं संजमे दुराराहए भवइ ॥ ५३ ॥ अणायाणमेयं अभिग्गहियसिज्जासणियस्स उच्चाकुइयस्स अट्ठाबंधिस्स मियासणियस्स आयाविअस्स समियस्स अभिक्खणं २ पडिलेहणासीलस्स पमज्जणा-

आदानमुक्त्वा अनादानमाह। अणायाणमेयं इत्यादितः सुआराहए भवइ इति यावत्, तत्र कर्मणां दोषाणां वा अनादानं अकारणमेतत् अभिगृहीतशय्यासनिकत्वं उच्चाकुचशय्यावत्त्वं सप्रयोजनं पक्षमध्ये सकृच्च शय्याबंधकत्वमिति, तदेव द्रढयति, अभिगृहीतशय्यासनिकस्य उच्चाकुचिकस्य अर्थाय बंधिनो-

स्योकस्तस्य, अणट्ठाबंधियस्स अनर्थकबंधिनः पक्षमध्ये अनर्थकं निष्प्रयोजनं एकवारोपरि द्वौ त्रींश्चतुरो वारान् कंबासु बंधान् ददाति, चतुरुपरि बहूनि अङ्कानि वा बध्नाति, तथा च स्वाध्यायविघ्नपलिमंथादयो दोषाः, यदि चैकांगिकं चंपकादिपट्टं लभ्यते तदा तदेव ग्राह्यं, बंधनादिपलिमंथपरिहारात्, अमियासणियस्स अमितासनिकस्य अबद्धासनस्य मुहुर्मुहुः स्थानात्स्थानांतरं गच्छतो हि सत्त्ववधः स्यात्, अनेकानि वा आसनानि सेवमानस्य, अणातावियस्स संस्तारकपात्रादीनां आतपे

## सणियस्स अणातावियस्स असमियस्स अभिक्खणं२अपडिलेहणासीलस्स

अदातुः असमियस्स ईर्यादिसमितिषु अनुपयुक्तस्य अभिक्खणंति वारं २ अप्रतिलेखनाशीलस्य दृष्ट्या, अप्रमार्जनाशीलस्य रजोहरणादिना, ईदृशस्य साधोः संयमो दुराराधो भवति, [ अत्र किरणावलीदीपिकाकाराभ्यां दुराराध्यो दुष्प्रतिपाल्य इति प्रयोगौ लिखितौ तौ चिंत्यौ! दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात्खल् इतिसूत्रेण खल्प्रत्ययागमनेन दुराराध इति दुष्प्रतिपाल इति च भवनात्, न च

भवइ इति यावत्, तत्र अणभिग्गहियसिज्जासणिएणं न अभिगृहीते शय्यासने येन सः अनभिगृहीतशय्यासनः, अनभिगृहीतशय्यासन एव अनभिगृहीतशय्यासनिकः, स्वार्थे इकप्रत्ययस्तथाविधेन साधुना हुत्तए त्ति भवितुं न कल्पते, वर्षासु मणिकुट्टिमेऽपि पीठफलकाभिग्रहवतैव भाव्यं, अन्यथा शीतलायां भूमौ शयने उपवेशने च कुंथ्वादिविराधनोत्पत्तेः, आयाणमेयंति कर्मणां दोषाणां वा आ-

थाण वा निग्गंथीण वा अणभिग्गहियसिज्जासणिएणं हुत्तए आयाणमेयं अणभिग्गहियसिज्जासणियस्स अणुच्चाकुइअस्स अणट्ठाबंधिस्स अमिआ-

दानमुपादानकारणं, एतद् अनभिगृहीतशय्यासनिकत्वं, तदेव द्रढयति, अणभिग्गहिय इत्यादि—अनभिगृहीतशय्यासनिक इति प्राग्वत् तस्य, अणुच्चाकुइयस्स उच्चा हस्तादियावत् येन पीपिलिकादेर्बधो न स्यात्सर्पादेर्वा दंशो न स्यात्, अकुचा 'कुच' परिस्पंदे इति वचनात् परिस्पंदरहिता निश्चलेति यावत्, ततः कर्मधारये उच्चाकुचा शय्या कंबादिमयी सा न विद्यते यस्य स अनुच्चाकुचिकोऽनीचसपरिस्पंदश-

दत्ते सति एकं वा अनेकं वा साधुं अप्रतिज्ञाप्य गोचरादौ गंतुं यावत्कायोत्सर्गेऽपि स्थातुं न कल्पते, वृष्टिभयात्, अस्त्यत्र कोऽपि यथासन्निहितस्तमेवं वक्तुं कल्पते, यत् आर्य! इमं उपधिं तावन्मुहूर्तमात्रं जानीहि विभावय जावताव इति यावदर्थे से अ पडिसुणेज्जा स प्रतिशृणुयात् अंगीकुर्यात्तद्वस्त्रादि-

इमं ता अज्जो! मुहुत्तगं जाणाहि जावताव अहं गाहावइकुलं जाव काउस्सग्गं वा ठाणं वा ठाइत्तए, से अ पडिसुणेज्जा एवं से कप्पइ गाहावइकुलं तं चेव सव्वं भाणियव्वं, से य नो पडिसुणेज्जा एवं से नो कप्पइ गाहावइकुलं जाव काउस्सग्गं वा ठाणं वा ठाइत्तए ॥ ५२ ॥ वासावासं प०नो कप्पइ निग्गं-

सत्यापनं तदा कल्पते गोचरादौ गंतुं अशनाद्याहारयितुं, विहारभूमिं विचारभूमिं वा गंतुं, स्वाध्यायं वा कायोत्सर्गं वा कर्तुं, स्थानं वा वीरासनादिकं स्थातुम् ॥ ५२ ॥ वासावासं इत्यादितः

धर्मजागरिका तां अपि जागर्तुं गुर्वाज्ञयैव कल्पते ॥ ५१ ॥ वासावासं इत्यादितः ठाइत्तए इति पर्यंतं, तत्र वत्थं वा इत्यादि–पादप्रोंछनं रजोहरणं, ततो वस्त्रादिकं उपधि आतापयितुं एकवारं आतपे दातुं,

जागरित्तए, नो से कप्पइ अणापुच्छित्ता, तं चेव ॥ ५१ ॥ वासावासं प० भिक्खू इच्छिज्जा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा अण्णयरं वा उवहिं आयावित्तए पयावित्तए वा, नो से कप्पइ एगं वा अणेगं वा अपडिण्णवित्ता गाहा०भ०पा०नि०प०असणं वा४आहारित्तए, बहिया विहारभूमिं वा वियारभूमिं वा सज्झायं वा करित्तए, काउस्सग्गं वा ठाणं वा ठाइत्तए, अत्थि अ इत्थ केइ अहासण्णिहिए एगे वा अणेगे वा कप्पइ से एवं वइत्तए।

प्रतापयितुं पुनः पुनरातपे दातुं इच्छति, अनातापने कुत्सापनकादिदोषोत्पत्तेः, तदा उपधौ आतपे

तत् तथा ॥ ५० ॥ संलेखनासूत्रे अपच्छिममारणं इत्यादि—अपश्चिमं चरमं मरणं अपश्चिमं मरणं, न पुनः प्रतिक्षणमायुर्दलिकानुभवलक्षणं आवीचिकमरणं, अपश्चिममरणमेवांतस्तत्र भवा अपश्चिममारणांतिकी, संलिख्यते कृशीक्रियते शरीरकषायाद्यनयेति संलेखना, सा च द्रव्यभावभेदभिन्ना "च-

> जूसणाझूसिए भत्तपाणपडियाइक्खिए पाओवगए कालं अणवकंखमाणे
> विहरित्तए वा निक्खमित्तए वा पविसित्तए वा असणंवा ४ आहारित्तए वा
> उच्चारं पासवणं वा परिट्ठावित्तए सज्झायं वा करित्तए धम्मजागरियं वा

त्तारिविचित्ताइं" इत्यादिका तस्याः जूसणा जोषणं सेवा तया झूसिएत्ति क्षपितशरीरः अत एव प्रत्याख्यातभक्तपानः अत एव पादपोपगतः कृतपादपोपगमोऽत एव कालं जीवितकालं मरणकालं वा अनवकांक्षन्ननभिलषन्विहर्तुमिच्छेत्तदपि गुर्वाज्ञयेति तत्त्वं, धम्मजागरियंति धर्मध्यानेन जागरिका

आज्ञां ददति तदा अन्यतरां विकृतिं आहारयितुं कल्पते, नान्यथा ॥ ४८ ॥ तृतीये चिकित्सासूत्रे अन्नयरं तेगिच्छं आउट्टित्तएत्ति 'आउट्टि' धातुः करणार्थे सैद्धांतिकस्ततः अन्यतरां चिकित्सां कार-

भंते ! आयरिया पच्चवायं जाणंति ॥४८॥ वासावासं प०भिक्खू इच्छिज्जा अण्णयरिं तेगिच्छिअं आउट्टित्तए, तं चेव सव्वं भाणियव्वं ॥४९॥ वासावासं प०भिक्खू इच्छिज्जा अण्णयरं ओरालं कल्लाणं सिवं धन्नं मंगल्लं सस्सिरियं महाणुभावं तवोकम्मं उवसंपज्जित्ता णं विहरित्तए, तं चेव सव्वं भाणियव्वं ॥ ५० ॥ वासावासं प०भिक्खू इच्छिज्जा अपच्छिममारणंतिअसंलेहणा-

यितुं आज्ञयैव कल्पते ॥ ४९ ॥ एवं तपः सूत्रेऽपि, नवरं-ओरालं प्रशस्तं कल्लाणं कल्याणकारि सिवं उपद्रवहरं धन्नं धन्यकरणीयं मंगल्लं मंगलकारणं सस्सिरियं सश्रीकं महाणुभावं महान् अनुभावो यस्य

सर्वमापृच्छ्यैव कर्तव्यमिति तत्वं, एवं गामाणुगामं दूइज्जित्तएत्ति ग्रामानुग्रामं हिंडितुं भिक्षाद्यर्थं ग्लानादिकारणे वा, अन्यथा वर्षासु ग्रामानुग्रामहिंडनमनुचितमेव ॥ ४७ ॥ द्वितीये विकृत्याहारसूत्रे

वासावासं प० भिक्खू इच्छिज्जा अण्णयरिं विगइं आहारित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छित्ता आयरियं वा जाव आहारित्तए । इच्छामि णं भंते! तुब्भेहिं अब्भणुण्णाए समाणे अण्णयरिं विगइं आहारित्तए, तं एवइयं वा एवइखुत्तो वा, ते य से वियरिज्जा, एवं से कप्पइ अण्णयरिं विगइं आहारित्तए, ते य से नो वियरेज्जा, एवं से नो कप्पइ अण्णयरिं विगइं आहारित्तए, से किमाहु ?

तं एवइयंति तां विकृतिं एतावतीं एवइखुत्तोत्ति एतावतो वारान् तेअ से इत्यादि— यदा ते तस्य वितरंति

सन् भक्तपानाद्यर्थं गंतुं ते असे वियरिज्जा ते आचार्यादयः 'से' तस्य वितरेयुरनुज्ञां दद्युस्तदा कल्पते, अथ न वितरेयुस्तदा न कल्पते, सेकिमाहुभंते तत्कुतो हेतोरिति शिष्यप्रश्ने गुरुराह–आयरिआ इत्यादि–आचार्यादयः प्रत्यपायं अपायं तत्परिहारं च जानंतीति ॥४६॥ एवं इत्यादीनि तंचेव इत्यंतानि पंच

गा०भ०पा०नि०प०ते य से विय्यरिज्जा, एवं से कप्पइ गाहा०भ०पा०नि०प०। ते य से नो वियरिज्जा एवं से नो कप्पइ गा० भ० पा० नि० प० । से किमाहु भंते ! आयरिया पच्चवायं जाणंति ॥ ४६ ॥ एवं विहारभूमिं वा, विआरभूमिं वा, अण्णं वा जं किंचि पओयणं, एवं गामाणुगामं दूइज्जित्तए ॥ ४७ ॥

सूत्राणि सुबोधानि, तत्र प्रथमसूत्रे विहारभूमिर्जिनचैत्ये गमनं, 'विहारो जिनसद्मनीति वचनात्' विचारभूमिः शरीरचिंताद्यर्थं गमनं, अण्णंवा इत्यादि–अन्यद्वा लेपसीवनलिखनादिकं उच्छ्वासादिवर्जं

इत्यादितः जाणंति इति पर्यंतं सूत्रं, तत्र आयरियंवा इत्यादि-आचार्यः सूत्रार्थदाता, दिगाचार्यो वा, उपाध्यायः सूत्राध्यापकः, स्थविरो ज्ञानादिषु सीदतां स्थिरीकर्ता उद्यतानामुपबृंहकश्च, प्रवर्तको ज्ञानादिषु प्रवर्तयिता, गणी यस्य पार्श्वे आचार्याः सूत्राद्यभ्यसंति, गणधरस्तीर्थकृच्छिष्यः, गणावच्छेदको

आयरियं वा, उवज्झायं वा, थेरं वा, पवित्तं वा, गणिं गणहरं गणावच्छेययं, जं वा पुरओ काउं विहरइ, कप्पइ से आपुच्छिउं आयरियं वा जाव जं वा पुरओ काउं विहरइ, "इच्छामि णं भंते" ! तुब्भेहिं अब्भणुण्णाए समाणे

यः साधून् गृहीत्वा बहिः क्षेत्रे आस्ते, गच्छार्थं क्षेत्रोपधिमार्गणादौ प्रधावनादिकर्ता सूत्रार्थोभयवित्, यं चाऽन्यं वयःपर्यायाभ्यां लघुमपि पुरतः कृत्वा गुरुत्वेन कृत्वा विहरंति तं आपृच्छ्यैव भक्तपानाद्यर्थं गंतुं कल्पते, न त्वनापृच्छ्य, केनोल्लेखेन? इत्याह-इच्छामिणं इत्यादि-इच्छाम्यहं भवद्भिरनुज्ञातः

तालमूलाकारं अधः पृथु, उपरि च सूक्ष्मं विलं तालमूलम् (४) संबुकावट्टेत्ति शंबूकावर्त्तं भ्रमरगृहं नाम पंचमम् (५) (७)। स्नेहसूक्ष्मे उस्सा अवश्यायो यो गगनात्पतति (१) हिमं स्त्यानो जलविंदुः (२)

क्कावट्टे नामं पंचमे ५, जे छउमत्थेणं जाव पडिलेहियव्वे भवइ, से त्तं लेण-सुहुमे (७)। से किं तं सिणेहसुहुमे ? सिणेहसुहुमे पंचविहे पण्णत्ते, तंजहा—उस्सा १, हिमए २, महिआ ३, करए ४, हरतणुए ५, जे छउमत्थेणं जाव पडिलेहियव्वे भवइ, से त्तं सिणेहसुहुमे (८)॥ ४५॥ वासावासं पज्जोसविए भिक्खू इच्छिज्जा गाहा॰भ॰पा॰नि॰प॰नो से कप्पइ अणापुच्छित्ता

महिका धूमरी (३) करका घनोपलाः (४) हरतनुर्भूमिनिःसृततृणाग्रविंदुरूपो यो यवांकुरादौ दृश्यते (५) (८) ॥ ४५ ॥ अथ ऋतुबद्धवर्षाकालयोः सामान्या सामाचारी वर्षासु विशेषेणोच्यते वासावासं

वटोदुंबरादीनां, तच्चोच्छ्वासेनापि विराध्यते (५)। अंडसूक्ष्मे उद्दंसंडे इत्यादि–उद्दंशा मधुमक्षिका मत्कुणाद्यास्तेषां अंडं उद्दंशांडं (१) उत्कलिकांडं लूतापुतांडं (२) पीपिलिकांडं कीटिकांडं (३) हलिका गृहकोलिका ब्राह्मणी वा, तस्या अंडं हलिकाण्डम् (४) हल्लोहलिआ अहिलोडि सरडी कक्किंडी इत्येकार्थास्तस्या अंडं हल्लोहलिकाण्डम् (५) एतानि सूक्ष्माणि स्युः (६)। लेणसुहुमेत्ति लयनं आश्रयः

उक्कलिअंडे २, पीपिलिअंडे ३, हलिअंडे ४, जे निग्गंथेण वा जाव पडिलेहियव्वे भवइ, से त्तं अंडसुहुमे (६)। से किं तं लेणसुहुमे? लेणसुहुमे पंचविहे पण्णत्ते, तंजहा–उत्तिंगलेणे १, भिंगुलेणे २, उज्जुए ३, तालमूलए ४, संबु-

सत्त्वानां, यत्र कीटिकाद्यनेकसूक्ष्मसत्त्वा भवंति तल्लयनसूक्ष्मं, तत्र उत्तिंगलेणेत्ति उत्तिंगा भूअका गर्दभाकृतयो जीवास्तेषां लयनं, भूमौ उत्कीर्णं गृहं उत्तिंगलयनं (१) भिंगुलेणेत्ति भृगुः शुष्कभूरेखा जलशोषानंतरं जलकेदारादिषु स्फुटिता दालिरित्यर्थः (२) उज्जुएत्ति ऋजु बिलं (३) तालमूलएत्ति

काशाल्यादिबीजानां मुखमूले 'नही' इति प्रसिद्धा, नखिका, तत्समाकारम् (३)। हरितसूक्ष्मं नवोद्भिन्नं

पंचविहे पण्णत्ते, तंजहा—किण्हे जाव सुक्किल्ले। अत्थि हरियसुहुमे पुढवीसमाणवण्णए णामं पण्णत्ते, जे निग्गंथेण वा निग्गंथीए वा जाव पडिलेहियव्वे भवइ, से त्तं हरियसुहुमे (४)। से किं तं पुप्फसुहुमे? पुप्फसुहुमे पंचविहे पण्णत्ते, तंजहा—किण्हे जाव सुक्किल्ले। अत्थि पुप्फसुहुमे रुक्खसमाणवण्णए नामं पण्णत्ते, जे छउमत्थेणं जाव पडिलेहियव्वे भवति, से त्तं पुप्फसुहुमे (५) से किं तं अंडसुहुमे? अंडसुहुमे पंचविहे पण्णत्ते, तंजहा—उद्दंसंडे १,

पृथ्वीसमवर्णं हरितं, तच्चाल्पसंहननत्वात् स्तोकेनापि विनश्यति (४)। पुष्पसूक्ष्मं वृक्षसमानवर्णं

न्धरी कुंथुः, स हि चलन्नेव विभाव्यते नहि स्थानस्थः (१) पंनक उल्ली, स च प्रायः प्रावृषि भूकाष्ठा-

अभिक्खणं अभिक्खणं जाणियव्वा पडिलेहियव्वा भवइ, से त्तं पाणसुहुमे (१)। ॥४४॥ से किं तं पणगसुहुमे ? पणगसुहुमे पंचविहे पण्णत्ते, तंजहा-किण्हे जाव सुक्किल्ले। अत्थि पणगसुहुमे तद्दव्वसमाणवण्णए नामं पण्णत्ते, जे छउमत्थेणं निग्गंथेण वा निग्गंथीए वा जाव पडिलेहियव्वे भवइ,से त्तं पणगसुहुमे (२)। से किं तं बीयसुहुमे ? बीयसुहुमे पंचविहे पण्णत्ते, तंजहा-किण्हे जाव सुक्किल्ले । अत्थि बीअसुहुमे कणियासमाणवण्णए नामं पण्णत्ते, जे छउमत्थेणं जाव पडिलेहियव्वे भवइ, से त्तं बीयसुहुमे (३) । से किं तं हरिअसुहुमे ? हरिअसुहुमे

दिषु जायते, यत्रोत्पद्यते तद्द्रव्यसमवर्णश्च, नामं पण्णत्ते इत्यत्र नाम प्रसिद्धौ (२)। बीजसूक्ष्मं कणि-

ज्ञात्वा दृष्ट्वा च प्रतिलेखितव्यानि परिहर्तव्यतया विचारणीयानि तंजहा तद्यथा पाणसुहुमं इत्यादि— तत्र प्राणसूक्ष्मं पंचविधं प्रज्ञप्तं तीर्थंकरगणधरैः कृष्णादिवर्णभेदात् , एकस्मिन्वर्णे सहस्रशो भेदा बहुप्र-

भवंति, तंजहा—पाणसुहुमं (१) पणगसुहुमं (२) बीयसुहुमं (३) हरियसुहुमं (४) पुप्फसुहुमं (५) अंडसुहुमं (६) लेणसुहुमं (७) सिणेहसुहुमं (८)। से किं तं पाणसुहुमे ? पाणसुहुमे पंचविहे पण्णत्ते, तंजहा—किण्हे(१) नीले (२) लोहिए (३) हालिद्दे (४) सुक्किल्ले (५)। अत्थि कुंथू अणुद्धरी नामं, जा ठिया अचलमाणा छउमत्थाणं निग्गंथाण वा निग्गंथीण वा नो चक्खुफासं हव्वमागच्छइ, जाव छउमत्थेणं निग्गंथेण वा निग्गंथीए वा

काराश्च संयोगास्ते सर्वे पंचसु कृष्णादिवर्णेष्वेव अवतरंति, प्राणसूक्ष्मं तु द्वींद्रियादयः प्राणा यथाऽनु-

ह—सत्त इत्यादि—सप्त स्नेहायतनानि जलावस्थानस्थानानि प्रज्ञप्तानि, जिनैर्येषु चिरेण जलं शुष्यति, तद्यथा—पाणी हस्तौ, (१) पाणिरेखा आयूरेखादयस्तासु हि चिरं जलं तिष्ठति (२) नखा अखंडाः (३) नखशिखास्तदग्रभागाः (४) भमुहा भ्रूर्नेत्रोर्द्ध्वरोमाणि (५) अहरुट्ठा दाढिका (६) उत्तरुट्ठा श्मश्रूणि (७)। अथ

उत्तरुट्ठा (७)। अह पुण एवं जाणिज्जा, विगओदए मे काए छिण्णसिणेहे एवं से कप्पइ असणं वा ४ आहारित्तए ॥४३॥ वासावासं प॰इह खलु निग्गंथाण वा निग्गंथीण वा इमाइं अट्ठ सुहुमाइं जाइं छउमत्थेणं निग्गंथेण वा निग्गंथिए वा अभिक्खणं अभिक्खणं जाणियव्वाइं पासियव्वाइं पडिलेहियव्वाइं

पुंनरेवं जानाति, यत् विगतोदको बिंदुरहितः छिन्नस्नेहः सर्वथा निर्जलो मम कायः संजातस्तदा कल्पते अशनाद्याहारयितुम् ॥ ४३ ॥ अट्ठसुहुमाइं इत्यादि—अष्ट सूक्ष्माणि अभिक्खणंति वारं २ यत्रावस्थानादि करोति तत्र २ ज्ञातव्यानि, सूत्रोपदेशेन, पासियव्वाइंति चक्षुषा द्रष्टव्यानि पडिलेहियव्वाइंति

नीतं स भुंजीत, इच्छा न चेत्तदा न भुंजीत, प्रत्युतैवं वदति केनोक्तमासीत् ? यत्त्वया आनीतं, किं च अनिच्छया दाक्षिण्यतश्चेद्भुंक्ते तदा अजीर्णादिना बाधा स्यात्परिष्ठापने च वर्षासु स्थंडिलदौर्लभ्याद्दोषः स्यात्तस्मात्पृष्ट्वा आनेयम् ॥ ४१ ॥ वासावासं इत्यादितः सेत्तं सिणेहसुहुमे इति पर्यंतं सूत्रचतुष्टयं, तत्र

अपरिण्णए भुंजिज्जा, इच्छा परो न भुंजिज्जा ॥ ४१ ॥ वासावासं प॰नो कप्पइ निग्गंथाणवा निग्गंथीण वा उदउल्लेण वा ससिणिद्धेण वा काएणं असणं वा ४ आहारित्तए ॥ ४२ ॥ से किमाहु भंते ! सत्त सिणेहाययणा पण्णत्ता, तंजहा– पाणी (१) पाणिलेहा (२) नहा (३) नहसिहा (४) भमुहा (५) अहरुट्ठा ( ६ )

उदउल्लेण इत्यादि–उदकार्द्रेण गलद्बिंदुयुक्तेन सस्निग्धेन ईषदुदकयुक्तेन कायेन अशनादिकं आहारयितुं न कल्पते ॥ ४२ ॥ से किमाहु भंतेत्ति तत्र स तीर्थंकरः किं कारणमाह ? इति शिष्येण पृष्टे गुररा-

कोऽपि स्थविरः स्थविरा वा साक्षी भवति तदा स्थातुं कल्पते, तथा एकाकित्वं च साधोः संघाटिके उपोषितेऽसुखिते वा कारणाद्भवति, अन्यथा हि उत्सर्गतः साधुरात्मनः द्वितीयः साध्व्यस्तु त्र्यादयो विहरन्ति ॥३९॥ वासावासं इत्यादितः न भुंजिज्जा इति यावत्सूत्रद्वयं, तत्र अपरिण्णएणं इत्यादि- त्वं

कप्पइ एगओ चिट्ठित्तए। एवं चेव निग्गंथीए अगारिस्स य भाणियव्वं ॥ ३९ ॥ वासावासं प०नो कप्पइ निग्गंथाण वा निग्गंथीण वा अपरिण्णए णं अपरिण्णयस्स अट्ठाए असणं वा ४ जाव पडिगाहित्तए ॥ ४० ॥ से किमाहु भंते! इच्छा परो

मम योग्यं अशनं आनयेः इति अपरिज्ञसेन अज्ञापितेन साधुना, अहं तव योग्यं अशनादि आनेष्ये इत्यपरिज्ञसस्य अज्ञापितस्य साधोः अट्ठाएत्ति अर्थाय कृते अशनादि परिग्रहीतुं न कल्पते॥४०॥ अत्र शिष्यः पृच्छति से किमाहु भंतेत्ति तत्कुतो भदंत! गुरुराह—"इच्छेत्यादि"—इच्छा चेदस्ति तदा परो यदर्थं आ-

एकस्य साधोर्द्वाभ्यां साध्वीभ्यां सह, द्वयोः साध्वोरेकया साध्व्या सह, द्वयोः साध्वोर्द्वाभ्यां साध्वीभ्यां सह स्थातुं न कल्पते, यदि चात्र पंचमः कोऽपि क्षुल्लकः क्षुल्लिका वा साक्षी स्यात्तदा कल्पते, अथवा अन्येषां ध्रुवकर्मिकलोहकारादीनां वर्षत्यप्यमुक्तस्वकर्मणां संलोके, तत्रापि सपडिदुवारेत्ति

अत्थि इत्थ केइ पंचमे खुड्डए वा, खुड्डिआ वा, अन्नेसिं वा संलोए सपडिदुवारे एवंण्हं कप्पइ एगओ चिट्ठित्तए ॥ ३८ ॥ वासावासं प० निग्गंथस्स गाहावइकुलं पिंडवायपडियाए जाव उवागच्छित्तए, तत्थ नो कप्पइ एगस्स निग्गंथस्स य एगाए अ अगारीए एगओ चिट्ठित्तए, एवं चउभंगो। अत्थि इत्थ केइ पंचमे थेरे वा, थेरिया वा, अन्नेसिं वा संलोए सपडिदुवारे, एवं से

सप्रतिद्वारे सर्वतो द्वारे सर्वगृहाणां वा द्वारे एवंण्हंति अत्र ण्हमिति वाक्यालंकारे तत एवं पंचमं विनापि स्थातुं कल्पते ॥ ३८ ॥ एवं साध्वीश्रावकसाधुश्राविकयोरपि सूत्रे ज्ञेयं, नवरं—अत्र पंचमः

साध्वागमात्पूर्वमेव स्वार्थं गृहस्थैः पक्तुमारब्धः स कल्पते दोषाभावात्, साध्वागमनानंतरं च यः पक्तुमारब्धः स पश्चादायुक्तः स न कल्पते उद्गमादिदोषसंभवात्, एवं शेषालापकद्वयमपि भाव्यम्।

हित्तए, नो से कप्पइ चाउलोदणे पडिगाहित्तए ॥३४॥ तत्थ से पुव्वागमणे णं दोवि पच्छा उत्ताइं, एवं नो से कप्पंति दोवि पडिगाहित्तए, जे से तत्थ पुव्वागमणे णं पुव्वाउत्ते से कप्पइ पडिगाहित्तए, जे से तत्थ पुव्वागमणे णं पच्छाउत्ते नो से कप्पइ पडिगाहित्तए ॥३५॥ वासावासं प० निग्गंथस्स गाहावइकुलं पिंडवायपडियाए अणुपविट्ठस्स निगिज्झिय निगिज्झिय वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा जाव अहे रुक्खमूलंसि वा उवागच्छित्तए,

॥ ३३ ॥ ३४ ॥ ३५ ॥ वासावासं इत्यादितः उवायणावित्तए इति पर्यंतं, तत्र वेलं उवायणावित्तएत्ति

अहे वियडगिहंसि विकटगृहं मंडपिका यत्र ग्राम्यपर्षदुपविशति तस्याधो वा अहे रुक्खमूलंसि वा वृक्षमूलं निर्गलकरीरादिमूलं तस्य वा अधः उवागच्छित्तएत्ति तत्रोपागंतुं कल्पते ॥ ३२ ॥ तत्थ इत्यादित पडिगाहित्तए इति यावत् सूत्रत्रयं सुगमं, नवरं—'तत्थेति' तत्र विकटगृहवृक्षमूलादौ स्थितस्य

अहे रुक्खमूलंसि वा उवागच्छित्तए ॥३२॥ तत्थ से पुव्वागमणे णं पुव्वाउत्ते चाउलोदणे पच्छाउत्ते भिलिंगसूवे, कप्पइ से चाउलोदणे पडिगाहित्तए, नो से कप्पइ भिलिंगसूवे पडिगाहित्तए ॥ ३३ ॥ तत्थ से पुव्वागमणे णं पुव्वाउत्ते भिलिंगसूवे पच्छाउत्ते चाउलोदणे, कप्पइ से भिलिंगसूवे पडिगा-

से तस्य साधोः पुव्वागमणेणंति आगमनात्पूर्वकाल पूर्वायुक्तस्तंदुलोदनः कल्पते, पश्चादायुक्तो भिलिंगसूवेत्ति भिलिंगसूपो मसूरदालिर्माषदालिः सस्नेहसूपो वा न कल्पते, अयमर्थः—तत्र यः पूर्वायुक्तः

भित्त्वाऽन्तः कायं आर्द्रयति या वृष्टिस्तत्र विहर्त्तुं न कल्पते, अपवादे तु तत्रापि तपस्विनः क्षुदसहाश्च भिक्षार्थं पूर्वपूर्वाभावे और्णिकेन औष्ट्रिकेन तार्णेन सौत्रेण वा कल्पेन तथा तालपत्रेण पलाशछत्रेण वा प्रावृता विहरंत्यपि, संतरुत्तरंसि आंतरः सौत्रः कल्पः, सह तेन वर्तते यः सः सांतरः, स चासावुत्तरश्च सांतरोत्तरस्तत्र उत्तर और्णिकस्ताभ्यां प्रावृतस्याल्पवृष्टौ गंतुं कल्पते ॥ ३१ ॥ वासावासं इत्यादितः

प० ॥ ३१ ॥ ( ग्रं.११०० ) वासावासं प० निग्गंथस्स निग्गंथीए वा गाहा० पिंडवायपडियाए अणुप्पविट्ठस्स निगिज्झिय निगिज्झिय वुट्ठिकाए निवइज्जा, कप्पइ से अहे आरामंसि वा, अहे उवस्सयंसि वा, अहे वियडगिहंसि वा,

उवागच्छित्तए इति यावत्, तत्र पिंडवायपडिआएत्ति पिंडपातो भिक्षालाभस्तत् प्रतिज्ञया अत्राहं लप्स्ये इति धियाऽनुप्रविष्टस्य गोचरचर्यायां गतस्य साधोः निगिज्झिय २ त्ति स्थित्वा २ घनो वर्षति तदा अहे आरामंसि वा आरामस्याधः अहे उवस्सयंसि वा सांभोगिकानां इतरेषां वा उपाश्रयस्याधस्तद्भावे

त्वात्कदाचिदनुपयोगोऽपि भवति ॥ २९ ॥ उक्तमेवार्थं निगमयन्नाह—वासावासं इत्यादितः पविसित्तए इति यावत्, तत्र कणगफुसियमित्तंपि कणो लेशस्तन्मात्रं कं पानीयं कणकं तस्य फुसिआ फुसारमात्रं तस्मिन्नपि निपतति जिनकल्पिकादेर्भिक्षायै गंतुं न कल्पते ॥३०॥ उक्तः पाणिपात्रविधि. ॥ अथ पात्र

वासं प०पाणिपडिग्गहियस्स भिक्खुस्स जं किंचि कणगफुसिअमित्तंपि निवडइ नो से कप्पइ गा०भ०पा०नि०प० ॥ ३० ॥ वासावासं प०पडिग्गहधारिस्स भिक्खुस्स नो कप्पइ वग्घारिअवुट्ठिकायंसि गाहावइकुलं भ० पा०नि०प०। कप्पइ से अप्पवुट्ठिकायंसि संतरुत्तरंसि गाहा०भ०पा०नि०

धारिणो विधिमाह— वासावासं इत्यादितः पविसित्तए इति यावत्, तत्र पडिग्गहधारिस्स पात्रधारिणः स्थविरकल्पिकादेः वग्घारिअवुट्ठिकायंसि अछिन्नधारावृष्टिर्यस्यां वर्षाकल्पो नीव्रं वा श्रवति, कल्पं वा

स्यात्तदा पिंडपातस्य देशं भुक्त्वा देशं चादाय पाणिं आहारैकदेशसहितं हस्तं पाणिना द्वितीयहस्तेन परिपिधायाच्छाद्य उरसि निलीयेत निक्षिपेद्वा 'णं' इति तं साहारं पाणिं कक्षायां वा समाहरेत् अंतर्हितं कुर्यात्, एवं च कृत्वा यथाछन्नानि गृहिभिः स्वनिमित्तमाच्छादितानि लयनानि गृहाणि उपाग-

सहसा वुट्ठिकाए निवइज्जा देसं भुच्चा देसमादाय से पाणिणा पाणिं परिपि-
हित्ता उरंसि वा णं निलिज्जा, कक्खंसि वा णं समाहडिज्जा, अहाछन्नाणि
वा लेणाणि वा उवागच्छिज्जा, रुक्खमूलाणि वा उवागच्छिज्जा, जहा से तत्थ
पाणिंसि दगे वा दगरए वा दगफुसिया वा णो परियावज्जइ ॥ २९ ॥ वासा-

च्छेत्, वृक्षमूलानि वा, यथा 'से' तस्य पाणौ दकादीनि न पर्यापद्यंते न विराध्यंते न पतंति वा, तत्र दकं वहवो विंदवो, दकरजो विंदुमात्रं दगफुसिआ फुसारं अवश्याय इत्यर्थः, यद्यपि जिनकल्पिकादेर्देशोनदशपूर्वधरत्वेन प्रागेव वर्षोपयोगो भवति तथाचार्द्धभुक्ते गमनं न संभवति तथापि छद्मस्थ-

॥ २७ ॥ वासावासं इत्यादितः पविसित्तए इति पर्यंतं, तत्र पाणिपडिग्गहिअस्स पाणिपात्रस्य जिन-कल्पिकादेः कणगफुसिआ फुसारमात्रं एतावत्यपि वृष्टिकाये निपतति गोचरचर्यायां गंतुं न कल्पते ॥ २८ ॥ वासावासं इत्यादितः परियावज्जइ इति यावत्, तत्र जिनकल्पिकादेः पाणिपात्रस्य साधोः

चारिस्स एत्तए ॥ २७ ॥ वासावासं प०नो कप्पइ पाणिपडिग्गहियस्स भिक्खुस्स कणगफुसियमित्तमवि वुट्ठिकायंसि निवयमाणंसि गाहावइकुलं भ०पा०नि०प० ॥ २८ ॥ वासावासं प०पाणिपडिग्गहिअस्स भिक्खुस्स नो कप्पइ अगिहंसि पिंडवायं पडिगाहित्ता पज्जोसवित्तए,पज्जोसवेमाणस्स

पिंडवायंति पिंडपात भिक्षां प्रतिगृह्य अगिहंसि अनाच्छादिते आकाशे पज्जोसवित्तए पर्युषितुं आहा-रयितुं न कल्पते पज्जोसवेमाणस्स कदाचित् आकाशे भुंजानस्य यदि सहसाऽर्द्धभुक्तेऽपि वृष्टिपातः

वासावासं इत्यादितः एत्तए इति यावत्, तत्रोपाश्रयादारभ्य, सत्तघरंतरंति सप्तगृहमध्ये संखडिंति संस्कृतिरोदनपाकस्तां गंतुं साधोर्न कल्पते, भिक्षार्थं तत्र न गच्छेदित्यर्थः। एतावता शय्यातरगृहं, अन्यानि च षड् गृहाणि वर्जयेदिति, तेषां आसन्नत्वेन साधुगुणानुरागितया उद्गमादिदोषसंभवात्, कथंभूतस्य साधोः? सणिणअट्टचारिस्स निषिद्धगृहेभ्यः सन्निवृत्तः संश्चरति यस्तस्य प्रतिषिद्धवर्जकस्ये-

**नो कप्पइ जाव उवस्सयाओ परेणं संखडिं सण्णियट्टचारिस्स एत्तए। एगे पुण एवमाहंसु, नो कप्पइ जाव उवस्सयाओ परंपरेणं संखडिं सण्णिअट्ट-**

त्यर्थः। बहवस्त्वेवं व्याचक्षते, सप्तगृहांतरे संखडिं जनसंकुलजेमनवारलक्षणां गंतुं न कल्पते, अत्रार्थे सूत्रकृन्मतांतराण्याह। एगेपुण इत्यादि–द्वितीयमते परेणंति शय्यातरगृहं, अन्यानि च सप्त गृहाणि वर्जयेत्। तृतीयमते परंपरेणंति शय्यातरगृहं, तत एकं गृहं, ततः परं सप्त गृहाणि वर्जयेदिति भावः

अल्पं बहु वा यदेकवारेण दीयते तदुच्यते इत्याह, लोणासायणत्ति लवणं किल स्तोकं दीयते, यदि तावन्मात्रं भक्तपानस्य गृह्णाति सापि दत्तिर्गण्यते, पंचेत्युपलक्षणं, तेन चतस्रस्तिस्रो द्वे एका षट् सप्त

णस्स, पंच पाणगस्स। अहवा पंच भोअणस्स, चत्तारि पाणगस्स। तत्थ णं एगा दत्ती लोणासायणमित्तमवि पडिगाहिया सिआ, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए। नो से कप्पइ दुच्चंपि गाहा॰भ॰पा॰नि॰प॰ ॥ २६ ॥ वासावासं प॰नो कप्पइ निग्गंथाण वा निग्गंथीण वा जाव उवस्सयाओ सत्तघरंतरं संखडिं सण्णियट्टचारिस्स एत्तए। एगे पुण एवमाहंसु,

वा यथाभिग्रहं वाच्याः, समग्रस्य च सूत्रस्य अयं भावः, यावत्योऽन्नस्य पानकस्य वा दत्तयो रक्षिता भवंति तावत्य एव तस्य कल्पंते, न तु परस्परं समावेशं कर्तुं कल्पते, न च दत्तिभ्योऽतिरिक्त ग्रहीतुं कल्पते॥२६॥

क्खियस्स प्रत्याख्यातभक्तस्य अनशनिन इत्यर्थस्तस्यापि एकं उष्णोदकं कल्पते,तदपि असिक्थं तदपि परिपूतं वस्त्रगलितं,अपरिपूते तृणादेर्गले लगनात्, तदपि परिमितं,अन्यथाऽजीर्णं स्यात्, तदपि बहुसंपूर्ण-

वियडे पडिगाहित्तए, सेविय णं असित्थे, नो चेव णंससित्थे, सेविय णं परिपूए, नो चेव णं अपरिपूए, सेविय णं परिमिए, नो चेव णं अपरिमिए, सेविय णं बहुसंपण्णे,नो चेव णं अबहुसंपण्णे॥२५॥वासावासं प०संखादत्तियस्स भिक्खुस्स कप्पंति पंच दत्तीओ भोयणस्स पडिगाहित्तए,पंच पाणगस्स। अहवा चत्तारि भोअ-

मीषदपरिसमाप्तं संपूर्णं,अतिस्तोके हि तृणमात्रस्यापि नोपशम इति॥२५॥वासावासं इत्यादितःपविसित्तए इति यावत् तत्र संखादत्तियस्स दत्तिसंख्याकारिणो भिक्षोः, दत्तिपरिमाणवत इत्यर्थः, तत्र दत्तिशब्देन

चाउलोदगं तंदुलधावनजलं ३, तिलोदगं निस्त्वचिततिलधावनजलं ४, तुपोदकं व्रीह्यादिधावनजलं ५, यवोदकं यवधावनजलं ६, आयामकोऽवश्रावणं ७, सोवीरं कांजिकं ८, शुद्धविकटं उष्णोदकं ९, एषु चतुर्थभक्तिकस्य उत्स्वेदिमसंस्वेदिमतंदुलोदकाख्यानि त्रीणि पानकानि कल्पते, षष्ठभक्तिकस्य ति-

अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए,तंजहा–आयामं, सोवीरं, सुद्धवियडं । वासावासं०विकिट्ठभत्तियस्स भिक्खुस्स कप्पंति एगे उसिणवियडे पडिगाहित्तए, सेविय णं असित्थे, नोविय णं ससित्थे। वासावासं०भत्तपडियाइक्खियस्स भिक्खुस्स कप्पइ एगे उसिण-

लतुपयवोदकानि, अष्टमभक्तिकस्य आयामकसोवीरशुद्धविकटानि, ततः परं विकृष्टभक्तिकानां तु एकं उष्णोदकं कल्पते, तदप्यसिक्थं, यतः प्रायेणाऽष्टमोर्द्ध्वं तपस्विन० शरीरं देवोऽधितिष्ठति भत्तपडियाइ

वासावासं इत्यादितः संपण्णे इति यावत्, तत्र नित्यभक्तिकस्य सर्वाणि पानकानि कल्पंते, सर्वाणि च आचारांगोक्तानि एकविंशतिः, अत्र वक्ष्यमाणानि नव वा, तत्राचारांगोक्तानि इमानि—"उस्सेइम १ संसेइम २, तंदुल ३ तुस ४ तिल ५ जवोदगा ६ यामं। सोवीर ८ सुद्धवियडं ९, अंबय १० अंबाडग ११

भिक्खुस्स कप्पंति सव्वाइं पाणगाइं पडिगाहित्तए। वासावासं प० चउत्थभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तंजहा—उस्सेइमं, संसेइमं, चाउलोदगं। वासावासं प० छट्ठभत्तियस्स भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तंजहा—तिलोदगं, तुसोदगं, जवोदगं। वासावासं०

कविट्ठं १२।१। मउलिंग १३ दक्ख १४ दाडिम १५, खज्जूर १६ नालिअर १७ कयर १८ बोरजलं १९। आमलगं २० चिंचापा—णगाइं २१ पढमंगभणियाइं ॥२॥" एषु पूर्वाणि नव तु अत्रोक्तानि, तत्र उत्स्वेदिमं पिष्टभृतहस्तादिक्षालनजलं १, संस्वेदिमं यत्पर्णाद्युत्काल्य शीतोदकेन सिच्यते तज्जलं २,

कत्वात्तदा द्वितीयवारमपि भिक्षेतेत्यर्थः ॥ २१ ॥ वासावासं इत्यादिका सूत्रत्रयी सुगमा, नवरं—षष्ठभिक्षुकस्य द्वौ गोचरकालौ, अष्टमभक्तिकस्य त्रयो गोचरकालाः, विकृष्टभक्तिकस्य चतुःपंचाद्युपवास-

पाणाए वा निक्खमित्तए वा पविसित्तए वा ॥२१॥ वासावासं प०छट्ठभत्तियस्स भिक्खुस्स कप्पंति दो गोयरकाला गाहा०भ०पा०नि०प० ॥ २२ ॥ वासावासं प०अट्ठमभत्तियस्स भिक्खुस्स कप्पंति तओ गोयरकाला,गाहा० भ०पा०नि०प० ॥ २३ ॥ विगिट्ठभत्तियस्स भिक्खुस्स कप्पंति सव्वेवि गोयरकाला, गाहा०भ०पा०नि०प० ॥२४॥ वासावासं प०निच्चभत्तियस्स

कारिणः सर्वेऽपि गोचरकालाः, यदा इच्छा भवति तदा भिक्षते, न तु प्रातर्गृहीतमेव धारयेत्, संचयजीवसंसक्तिसर्पाघ्राणादिदोषसंभवात् ॥ २२ ॥ २३ ॥ २४ ॥ एवमाहारविधिं उक्त्वा पानकविधिमाह ।

तद्वैयावृत्यकराणां च द्विर्भोजनेऽपि नदोष इत्यर्थो जातः ॥ २० ॥ वासावासं इत्यादितः पविसित्तए इति यावत्, चउत्थभत्तियस्स एकांतरोपवासिनः साधोरयमेतावान्विशेषो यत्सः पाओ निक्खम्म प्रातर्निष्क्रम्य गोचरचर्यार्थं पुव्वामेव प्रथममेव वियडगंति विकटं प्रासुकाहारं भुक्त्वा पिच्चा तक्रादिकं

वा ॥ २० ॥ वासावासं० चउत्थभत्तियस्स भिक्खुस्स अयं एवइए विसेसे–
जं से पाओ निक्खम्म पुव्वामेव वियडगं भुच्चा पिच्चा पडिग्गहगं संलिहिय
संपमज्जिय से य संथरिज्जा, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवि-
त्तए। से य नो संथरिज्जा, एवं से कप्पइ दुच्चंपि गाहावइकुलं भत्ताए वा

पीत्वा पडिग्गहंति पात्रं संलिहिय संलिख्य निर्लेपीकृत्य संपमज्जिय संप्रमृज्य प्रक्षाल्य से अ संथरिज्जा स च साधुर्यदि संस्तरेन्निर्वहेत्तर्हि तेनेव भोजनेन तस्मिन्दिने परिवसेत्, अथ यदि न संस्तरेत् स्तो-

भत्ताएत्ति भक्तार्थं पाणाएत्ति पानार्थं नि:क्रमितुं प्रवेष्टुं कल्पते, न तु द्वितीयवारं, परं–णण्णत्थ इत्यादि–णकारो वाक्यादौ अलंकारार्थः, अन्यत्र आचार्यादिवैयावृत्यकरेभ्यस्तान् वर्जयित्वेत्यर्थः, ते तु यदि एकवारं भुक्तेन वैयावृत्यं कर्तुं न शक्नुवंति तदा द्विरपि भुंजते, तपसो हि वैयावृत्यं गरीय इति।

कप्पति एगं गोयरकालं, गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा। णण्णत्थ आयरियवेयावच्चेण वा, उवज्झायवेयावच्चेण वा, तवस्सिगिलाणवेयावच्चेण वा, खुड्डुएण वा खुड्डियाए वा अवंजणजायएण

अवंजणजायएण यावत् व्यंजनानि वस्तिकूर्चकक्षादिरोमाणि न जातानि तावत् क्षुल्लकक्षुल्लिकयोरपि द्विर्भुंजानयो र्न दोषः, यद्वा वैयावृत्यमस्यास्तीति वैयावृत्यो वैयावृत्यकर इत्यर्थः, आचार्यश्च वैयावृत्यश्च आचार्यवैयावृत्यौ, एवं च उपाध्यायादिष्वपि, ततश्च आचार्योपाध्यायतपस्विग्लानक्षुल्लकानां

भवंति अनुमतानि दानं अनुज्ञातानि, अथवा अणुरपि क्षुल्लकोऽपि मतो येषु सर्वसाधुसाधारणत्वान्न तु मुखं दृष्ट्वा तिलकं कुर्वंतीति अनुमतानि अणुमतानि वा भवंति, तत्थ से इत्यादि–तत्र तेषु गृहेषु 'से' तस्य साधोः अदक्खुत्ति याच्यं वस्तु अदृष्ट्वा, इति वक्तुं न कल्पते, यथा हे आयुष्मन्! इदं २ वा वस्तु तव अस्ति? इत्यदृष्टं वस्तु प्रष्टुं न कल्पते इत्यर्थः, से किमाहु भंते तत्कुतो भगवन्! इति शिष्य-

वइत्तए, अत्थि ते आउसो! इमं वा इमं वा, से किमाहु भंते! सड्ढी गिही गिण्हइ वा, तेणियंपि कुज्जा ॥१९॥ वासावासं० निच्चभत्तियस्स भिक्खुस्स

प्रश्ने गुरुराह, यतस्तथाविधः सड्ढित्ति श्रद्धावान् गृही मूल्येन गृह्णीत, यदि च मूल्येनापि न प्राप्नोति तदा स श्रद्धातिशयेन तेणियंपि चौर्यमपि कुर्यात्, कृपणगृहे तु अदृष्ट्वापि याचने न दोषः ॥ १९ ॥ वासावासं इत्यादितः अवंजणजाएण वा इति यावत्, तत्र निच्चभत्तियस्स भिक्खुस्स नित्यं एकाशनिनः साधोः एगं गोअरकालंति एकस्मिन् गोचरचर्याकाले गाहावइकुलं गाथापतिर्गृहस्थस्तस्य कुलं गृहं

ग्लानार्थं याचितं मंडल्यां नानेयमित्यर्थः ॥ १८ ॥ वासावासं इत्यादितः कुच्चा इति यावत् , तत्र अत्थिणं अस्त्येतत् 'ण' इति प्राग्वत् थेराणंति स्थविराणां तहप्पगाराइंति तथा प्रकाराणि अजुगुप्सितानि कुलानि गृहाणि, किं विशिष्टानि ? कडाइंति तैरन्यैर्वा श्रावकीकृतानि पत्तियाइंति प्रीतिकराणि

हित्तए, नो से कप्पइ गिलाणणीसाए पडिगाहित्तए ॥ १८ ॥ वासावासं० अत्थि णं थेराणं तहप्पगाराइं कुलाइं कडाइं, पत्तियाइं, थिज्जाइं, वेसासियाइं, सम्मयाइं, बहुमयाइं,अणुमयाइं, भवंति । तत्थ से नो कप्पइ अदक्खु

थिज्जाइंति प्रीतौ दाने वा स्थैर्यवति वेसासियाइंति निश्चितं अत्र लप्स्येऽहमिति विश्वासो येषु तानि वैश्वासिकानि सम्मयाइंति येषां यतिप्रवेशः संमतो भवति तानि सम्मतानि बहुमयाइंति बहवोऽपि साधवः सम्मता येषां,अथवा बहूनां गृहमनुष्याणां साधवः सम्मता येषु तानि बहुमतानि अणुमयाइं

जातं ततश्च होउ अलाहि तत्र 'होउत्ति' भवतु इति पदं साधुप्रसिद्ध 'इच्छ'मितिशब्दस्यार्थे 'अलाहित्ति' स्रुतं इत्यर्थे, इति पदद्वयं गृहस्थं प्रति वत्तव्वं सिआ वक्तव्यं स्यात्, ततो गृही ब्रूते से किमाहु भंते अथ किमाहुर्भदंताः? कुतो भवंतः स्रुतमितिब्रुवते ? इत्यर्थः, ततः साधुराह एवइएणं अट्ठो गिलाणस्स ग्लानस्य एतावता एव अर्थोऽस्तीति, ततः सिया इति स्यात् कदाचित् णं इति वाक्यालंकृतौ एवं वयंतं

भंते !, एवइएणं अट्ठो गिलाणस्स, सिया णं एवं वयंतं परो वइज्जा, पडिगा-
हेहि अज्जो ! पच्छा तुमं भोक्खसि वा पाहिसि वा, एवं से कप्पइ पडिगा-

एवं वदंतं साधुं परो गृहस्थः वइज्जा वदेत्, यत् अज्जो हे आर्य ! साधो ! पडिगाहेहि प्रतिगृहाण पच्छा पश्चात् ग्लानभोजनानंतरं यदधिकं तत्त्वं भोक्ष्यसे भुंजीथाः पक्वान्नादिकं, पास्यसि पिबेः क्षीरादिकं, क्वचित् 'पाहिसि' इतिस्थाने 'दाहिसि' इति दृश्यते, तदा तु स्वयं भुंजीथाः अन्येभ्यो वा दद्या इति व्याख्येयं, एवं तेनोक्ते तत् कल्पते अधिकं प्रतिग्रहीतुं, न पुनर्ग्लाननिश्रया गार्ध्यात् स्वयं ग्रहीतुं,

गुरुर्वदेत् अट्ठो ग्लानस्य अर्थो वर्त्तते से अ पुच्छेयव्वो ततः स ग्लानः प्रष्टव्यः केवइएणं अट्ठो कियता विकृतिजातेन क्षीरादिना तवार्थः ? तेन ग्लानेन स्वप्रमाणे उक्ते स वैयावृत्यकरो गुरोरग्रे समागत्य ब्रूयात्, एवइएणं अट्ठो गिलाणस्स एतावताऽर्थो ग्लानस्य, ततो गुरुराह जं से पमाणं वयइ यस्स ग्लानः

अट्ठो, से अ पुच्छेयव्वो केवइएणं अट्ठो ?, से य वइज्जा एवइएणं अट्ठो गिलाणस्स, जं से पमाणं वयइ से पमाणओ घित्तव्वे, से अ विण्णवेज्जा से अ विण्णवेमाणे लभेज्जा से अ पमाणपत्ते 'होउ' 'अलाहि' इय वत्तव्वं सिआ, से किमाहु?

प्रमाणं वदति तत् प्रमाणेन 'से' इति तद्विकृतिजातं ग्राह्यं त्वया ततः से अ विण्णविज्जा स च वैयावृत्यकरादिर्विज्ञापयेत्, कोऽर्थः ? गृहस्थपार्श्वात् याचेत, विज्ञप्तिधातुरत्र याच्ञायां सेअ स वैयावृत्यकरः विण्णवेमाणे याचमानो लभेत तद्वस्तु क्षीरादि से अ पमाणपत्ते अथ च तद्वस्तु प्रमाणप्राप्तं पर्याप्तं

हाह्या ग्राह्याः, सांचयिकास्तु घृततैलगुडाख्यास्तिस्रस्ताश्च प्रतिलंभयन् गृही वाच्यो महान्कालोस्ति, ततो ग्लानादिनिमित्तं ग्रहीष्यामः, स वदेत् गृह्णीत चतुर्मासीं यावत्प्रभूताः संति, ततो ग्राह्या बाला-दीनां च देया न तरुणानां, यद्यपि मधु १ मद्य २ मांस ३ नवनीत ४ वर्जनं यावज्जीवं अस्त्येव, तथापि अत्यंताऽपवाददशायां बाह्यपरिभोगाद्यर्थं कदाचित् ग्रहणेऽपि चतुर्मास्यां सर्वथा निषेधः ॥ १७ ॥

तिल्लं ५, गुडं ६, महुं ७, मज्जं ८, मंसं ९ ॥१७॥ वासावासं पज्जोसवियाणं
अत्थेगइयाणं एवं वुत्तपुव्वं भवति, अट्ठो भंते ! गिलाणस्स ?, से अ वएज्जा

वासावासं इत्यादितः पडिगाहित्तए इति पर्यंतं, तत्र अत्थेगइआणं इत्यादि–अस्ति एतदेकेषां वै-यावृत्यकरादीनां एवमुक्तपूर्वं भवति, गुरुं प्रतीति शेषः, वैयावृत्यकरैर्गुरवे एवं उक्तं भवतीत्यर्थः, हे भदंत ! भगवन् ! अर्थो वर्तते ग्लानस्य विकृत्याः ? इति वैयावृत्यकरेण प्रश्ने कृते से अ वइज्जा स

श्चेत्युक्तं भवति, तदा दातु प्रतिग्रहीतुं चोभयमपि कल्पते ॥ १४ ॥ १५ ॥ १६ ॥ वासावासं इत्यादितः मंसं इति पर्यंतं, तत्र हट्ठाणंति हृष्टानां तारुण्येन समर्थानां, तरुणा अपि केचिद्रोगिणो निर्बलशरीराश्च भवंति, अत उक्तं आरोग्गाणं बलिअसरीराणंति अरोगानां बलिकशरीराणां ईदृशानां साधूनां

दावित्तए॥१५॥वासावासं०दावे भंते पडिगाहेहि भंते,एवं से कप्पइ दावित्तएवि पडिगाहित्तएवि ॥१६॥ वासावासं०नो कप्पइ निग्गंथाण वा निग्गंथीण वा हट्ठाणं आरुग्गाणं बलियसरीराणं इमाओ नव रसविगईओ अभिक्खणं अभिक्खणं आहारित्तए,तंजहा– खीरं१,दहिं २,नवणीअं३,सप्पिं४,

इमा नव रसप्रधाना विकृतयोऽभीक्ष्णं वारं वारं आहारयितुं न कल्पते, अभीक्ष्णग्रहणात्कारणे कल्पंतेऽपि, नव ग्रहणात्कदाचित्पक्वान्नं गृह्यतेऽपि। तत्र विकृतयो द्वेधा, सांचयिका असांचयिकाश्च, तत्राऽसांचयिका या बहुकालं रक्षितुमशक्या, दुग्धदधिपक्वान्नाख्या, ग्लानत्वे गुरुबालाद्युपग्रहार्थं श्राद्धाग्-

पोपरि, नाभेरुपरि जलसद्भावे ?॥ १३ ॥ वासावासं इत्यादितः पडिगाहित्तए इतिपर्यंतस्य सूत्रत्रयस्य शब्दार्थः सुगमो भावार्थस्त्वयं, चतुर्मासीस्थितानां अत्थेगइयाणंति अस्ति एतत् यत् एकेषां साधूनां गुरुभिरेवं वुत्तपुव्वं भवइ पूर्वं उक्तं भवति यत् भंते हे भदंत ! कल्याणिन् ! शिष्य ! दावे त्वं ग्लानाय

सव्वओ समंता० ॥ १३ ॥ वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवइ, दावे भंते, एवं से कप्पइ दावित्तए, नो से कप्पइ पडिगाहित्तए ॥ १४ ॥ वासावासं पज्जोसवियाणं अत्थेगइयाणं एवं वुत्तपुव्वं भवति, पडिगाहेहि भंते, एवं से कप्पइ पडिगाहित्तए, नो से कप्पइ

अशनादिकं दद्यास्तदा दातुं कल्पते, न तु स्वयं प्रतिग्रहीतुं, यदि चैवमुक्तं भवति, यत्त्वं स्वयं प्रतिगृ-ह्णीया ग्लानाय अन्यो दास्यति, तदा स्वयं प्रतिग्रहीतुं कल्पते न तु दातुं, यदि च दद्याः प्रतिगृह्णीया-

द्विक्रोशवाहिनी तादृशी नदी लंघयितुं कल्प्या स्तोकजलत्वात्, यतः जत्थ चक्किया यत्र एवं कर्तुं शक्नुयात्किं तदित्याह, सिया यदि एगं पायं इत्यादि–एकं पादं जलांतः प्रक्षिप्य द्वितीयं च जलादुपरि उत्पाट्य एवं चक्किया एवं गंतुं शक्नुयात् तदा तां उत्तीर्य परतो भिक्षाचर्या कल्पते ॥ १२॥ यत्र च एवं कर्तुं न शक्नुयाज्जलं विलोड्य गमनं स्यात्तत्र गंतुं न कल्पते, यतो जंघार्द्धं यावदुदकं दकसंघट्टो, नाभिं

जत्थ चक्किया सिआ एगं पायं जले किच्चा एगं पायं थले किच्चा एवं चक्किआ एवण्हं कप्पइ सव्वओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतुं पडिणियत्तए ॥ १२ ॥ एवं च नो चक्किया एवं से नो कप्पइ

यावल्लेपो, नाभेरुपरि लेपोपरि, तत्र शेषकाले मासे मासे त्रिभिर्दकसंघट्टैः क्षेत्रं नोपहन्यते, तत्र गंतुं कल्पते इति भावः। वर्षाकाले च सप्तभिः क्षेत्रं नोपहन्यते, चतुर्थेऽष्टमे च दकसंघट्टे सति क्षेत्रं उपहन्यते एव, लेपस्तु एकोऽपि क्षेत्रं उपहंति, नाभिं यावज्जलसञ्चारे तु गंतुं न कल्पते एव, किंपुनर्लें-

तत्र गमनासंभवात्,अटवीजलादिना व्याघाते तु त्रिदिक्को द्विदिक एकदिक्को वा अवग्रहो भाव्यः॥९॥ वासावासं इत्यादितः गंतुं पडिणिअत्तए इतिपर्यंतं, वर्षावासं चतुर्मासकं पर्युषितानां स्थितानां कल्पते निर्ग्रंथानां निर्ग्रन्थीनां वा सर्वतश्चतसृषु दिक्षु समंतात् विदिक्षु च सक्रोशं योजनं भिक्षाचर्यायां गंतुं

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतुं पडिणियत्तए ॥ १० ॥ जत्थ नई निच्चोयगा निच्चसंदणा, नो से कप्पइ सव्वओ समंता सक्कोसं जोअणं भिक्खायरियाए गंतुं पडिणियत्तए ॥ ११ ॥ एरावई कुणालाए

प्रतिनिवर्त्तितुम् ॥ १० ॥ जत्थ नई इत्यादितः नियत्तए इति पर्यंतं, तत्र यत्र नदी निच्चोयगा नित्योदका नित्यं प्रचुरजला निच्चसंदणत्ति नित्यस्यंदना नित्यश्रवणशीला सततवाहिनीत्यर्थः ( शेषं पूर्ववत् )॥११॥ एरावई इत्यादितः नियत्तए इतियावत्सूत्रद्वयी, तत्र यथा ऐरावती नाम्नी नदी कुणालायां पुर्यां सदा

भावस्थापना, क्रोधादीनां विवेक इर्यादिसमितिषु चोपयोग इति (४) ॥८॥ वासावासं इत्यादितः उग्गहे इति पर्यंत, तत्र वासावासंति वर्षावासं चतुर्मासकं पज्जोसवियाणंति पर्युषितानां स्थितानां निर्ग्रंथानां निर्ग्रंथीनां वा सर्वतश्चतसृषु दिक्षु समंतात् विदिक्षु च सक्रोशं योजनं अवग्रहं अवगृह्य अहालंदमवि अथेत्यव्ययं,लंदशब्देन काल उच्यते,तत्र यावता कालेनोदकार्द्रः करः शुष्यति तावान् कालो जघन्यं लंदं,

वासावासं पज्जोसवियाणं कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सक्कोसं जोअणं उग्गहं ओगिण्हित्ता णं चिट्ठिउं अहालंदमवि उग्गहे ॥ ९ ॥

पंच अहोरात्रा उत्कृष्टं लंदं,तन्मध्ये मध्यमं लंदं,लंदमपिकालं यावत् स्तोककालमपिअवग्रहेस्थातुं कल्पते, न तु अवग्रहाद्बहिः, अपिशब्दात् अलंदमपि बहुकालमपि यावत्षण्मासानेकत्रावग्रहे स्थातुं कल्पते, न तु अवग्रहाद्बहिः, गजेंद्रपदादिगिरेर्मेखलाग्रामस्थितानां षट्सु दिक्षु उपाश्रयात्सार्द्धक्रोशद्वयगमनागमने पंचक्रोशावग्रहः, यत्तु विदिक्षु इत्युक्तं, तद्व्यावहारिकविदिगपेक्षया,नैश्चयिकविदिशां एकप्रदेशात्मकत्वेन

निवास्य विहरतमिति, ततस्तौ कृतकृत्यौ स्वपित्रोर्भरतस्य च तं व्यतिकरं निवेद्य दक्षिणश्रेण्यां नमिः उत्तरश्रेण्यां विनमिश्च तस्थतुः ॥

भगवाँश्चान्नपानादिदानाकुशलैः समृद्धिमद्भिर्जनैर्वस्त्राभरणकन्यादिभिर्निमंत्र्यमाणोऽपि योग्यां भिक्षामलभमानोऽदीनमनाः कुरुदेशे हस्तिनागपुरे प्रविष्टस्तत्र च आवश्यकवृत्त्यनुसारेण बाहुबलिसुतसोमप्रभसुतः श्रेयांसो युवराजः, स च मया श्यामवर्णो मेरुरमृतकलशैरभिषिक्तोऽतीवशोभितवानिति स्वप्नं दृष्टवान् , सुबुद्धिनामा नगरश्रेष्ठी सूर्यमंडलात् स्रस्तं किरणसहस्रं पुनः श्रेयांसेन तत्र योजितं ततस्तदतीवाशोभत इति स्वप्नमैक्षत, राजाऽपि स्वप्ने महापुरुष एको रिपुबलेन युध्यमानः श्रेयांससाहाय्याज्जयी जात इति ददर्श, त्रयोऽपि प्रातः सभायां संभूय स्वस्वस्वप्नान् परस्परं न्यवेदयन् , ततो राज्ञा कोऽपि श्रेयांसस्य महान् लाभो भावीति निर्णीय विसर्जितायां पर्षदि श्रेयांसोऽपि स्वभवने गत्वा गवाक्षस्थः स्वामी न किंचिद्गृह्णातीति जनकोलाहलं श्रुत्वा स्वामिनं वीक्ष्य च मया क्वापीदृशं नेपथ्यं दृष्टपूर्वं इतीहापोहं कुर्वन् जातिस्मरणं प्राप, अहो ! अहं पूर्वभवे भगवतः सारथिर्भग-

इतश्च कच्छमहाकच्छसुतौ भगवता पुत्रत्वेन प्रतिपन्नौ नमिविनमिनामानौ देशांतरादागतौ भरतेन दीयमानं राज्यभागमवगणय्य पितृवचसा भगवत्समीपमागत्य प्रतिमास्थिते भगवति नलिनीपत्रैर्जलमानीय सर्वतो भूमिसिंचनं जानुप्रमाणं कुसुमोच्चयं च कृत्वा पंचांगप्रणामपूर्वकं राज्यप्रदो भवेति प्रत्यहं विज्ञपयंतौ जिनं सिषेवतुः, तौ चाऽन्यदा वीक्ष्य वंदनार्थमागतो धरणेंद्रो भगवद्भक्त्या संतुष्टोऽवादीत् , भो ! भगवान्निःसंगो ! मा भगवंतं याचेथां ! भगवद्भक्त्याऽहमेव युवाभ्यां दास्यामीति भणित्वाऽष्टचत्वारिंशत्सहस्रसंख्याकाः (४८०००) विद्यास्तत्र 'गौरी' 'गांधारी' 'रोहिणी' 'प्रज्ञप्ति' लक्षणाश्चतस्रो महाविद्याश्च पाठसिद्धा एव दत्तवान् , [ "यच्चोक्तं किरणावलीकारेण अष्टचत्वारिंशत्संख्याकाः (४८) इति तदयुक्तं, आवश्यकवृत्तौ अष्टचत्वारिंशत्सहस्राणां (४८०००) उक्तत्वात्" ] अथ विद्या दत्वा उक्तवांश्चेमाभिर्विद्याधरर्द्धिप्राप्तौ संतौ स्वजनं जनपदं च गृहीत्वा यातं युवां वैताढ्ये नगे दक्षिणविद्याधरश्रेण्यां गौरेयगांधारप्रमुखानष्टौ निकायान् रथनूपुरचक्रवालप्रमुखाणि पंचाशन्नगराणि, उत्तरश्रेण्यां च पंडकवंशालयप्रमुखानष्टौ निकायान् गगनवल्लभप्रमुखाणि च षष्ठिनगराणि

तत्र एगं वाससहस्सं णिच्चं वोसट्ठकाए अथ प्रव्रज्यां प्रतिपद्य गृहीतघोराभिग्रहो भगवान् ग्रामानुग्रामं विहरतिस्म, तदानीं लोकस्याऽतिसमृद्धत्वात्का भिक्षा ? कीदृशा वा भिक्षाचराः ? इति कोऽपि वार्तां न जानाति, ततस्ते सहप्रव्रजिताः क्षुधादिपीडिता भगवन्तमाहारोपायं पृच्छंति, भगवांस्तु मौनी न किमपि प्रतिवक्ति, ततस्ते कच्छमहाकच्छौ प्रति विज्ञप्तिं चक्रुः, तौ अपि ऊचतुर्यत् वयमपि

वाससहस्सं णिच्चं वोसट्ठकाए चियत्तदेहे जाव अप्पाणं भावेमाणस्स एगं वाससहस्सं वइक्कंतं, तओ णं जे से हेमंताणं चउत्थे मासे, सत्तमे पक्खे,

आहारविधिं न जानीमः, पूर्वं तु भगवान्न पृष्टः, इदानीमाहारं विना तु स्थातुं न शक्यते, भरतलज्जया गृहेऽपि गन्तुमयुक्तं, ततो विचार्यमाणो वनवास एव श्रेयान्। इति विचार्य भगवन्तमेव ध्यायंतो गंगातटे परिशाटितपत्राद्युपभोगिनोऽसंस्कृतकेशकूर्चा जटिलास्तापसा जज्ञिरे ॥

महाचीण (१३) गुर्जर (१४) बंगाल (१५) श्रीमाल (१६) नेपाल (१७) जहाल (१८) कौशल (१९) मालव (२०) सिंहल (२१) मरुस्थला दीनि (२२)। चउमुट्ठिअंति चतसृभिर्मुष्टिभिर्लोचे कृते सति अवशिष्टां एकां मुष्टिं सुवर्णवर्णयोः स्कंधयोरुपरि लुठंतीं कनककलशोपरि विराजमानां नील-

असोगवरपायवस्स अहे, जाव सयमेव चउमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं आसाढाहिं णक्खत्ते णं जोगमुवागए णं, उग्गाणं भोगाणं राइन्नाणं खत्तियाणं चउहिं सहस्सेहिं सद्धिं एगं देव दूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ २११ ॥ उसभे णं अरहा कोसलिए एगं

कमलमालामिव विलोक्य हृष्टचित्तस्य शक्रस्य आग्रहेण रक्षितवान्, शेषं प्राग्वत्, नवरं– चउहिं-सहस्सेहिंति कच्छमहाकच्छादिभिश्चतुर्भिः सहस्रैर्यथा स्वामी करिष्यति तथा वयमपि करिष्याम इति कृतनिर्णयैः सह दीक्षां गृहीतवान् ॥ २११ ॥ उसभेणं इत्यादितः पासमाणे विहरइ इति यावत्,

दीर्घबाहुः (७३) मेघः (७४) सुघोषः (७५) विश्वः (७६) वराहः (७७) सुसेनः (७८) सेनापतिः (७९) कपिलः (८०) शैलविचारी (८१) अरिंजयः (८२) कुंजरबलः (८३) जयदेव. (८४) नागदत्तः (८५) काश्यपः (८६) बलः (८७) धीरः (८८) शुभमतिः (८९) सुमतिः (९०) पद्मनाभः (९१) सिंहः

**चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमी पक्खे णं, दिवसस्स पच्छिमे भागे, सुदंसणाए सिबियाए, सदेवमणुयासुराए परिसाए समणुगम्ममाण-मग्गे, जाव विणीयं रायहाणिं मज्झं मज्झेणं णिग्गच्छइ, णिगच्छित्ता जेणेव सिद्धत्थवणे उज्जाणे, जेणेव असोगवरपायवे, तेणेव उवागच्छइ, उवागच्छित्ता**

(९२) सुजातिः (९३) संजयः (९४) सुनाभः (९५) नरदेवः (९६) चित्तहरः (९७) सुरवरः (९८) दृढ-रथः (९९) प्रभंजनः (१००) इति । राज्यदेशनामानि तु—अंग (१) वंग (२) कलिंग (३) गौड (४) चौड (५) कर्णाट (६) लाट (७) सौराष्ट्र (८) काश्मीर (९) सौवीर (१०) आभीर (११) चीण (१२)

वान् , नंदननामानि चेमानि—भरतः (१) वाहुवालिः (२) शंखः (३) विश्वकर्मा (४) विमलः (५) सुलक्षणः (६) अमलः (७) चित्रांगः (८) ख्यातकीर्तिः (९) वरदत्तः (१०) सागरः (११) यशोधरः (१२) अमरः (१३) रथवरः (१४) कामदेवः (१५) ध्रुवः (१६) वत्सः (१७) नंदः (१८) सूरः (१९) सुनंदः (२०) कुरुः (२१) अंगः (२२) वंगः (२३) कोशलः (२४) वीरः (२५) कलिंगः (२६) मागधः (२७) विदेहः (२८) संगमः (२९) दशार्णः (३०) गंभीरः (३१) वसुवर्मा (३२) सुवर्मा (३३) राष्ट्रः (३४) सुराष्ट्रः (३५) बुद्धिकरः (३६) विविधकरः (३७) सुयशाः (३८) यशःकीर्तिः (३९) यशस्करः (४०) कीर्तिकरः (४१) सूरणः (४२) ब्रह्मसेनः (४३) विक्रान्तः (४४) नरोत्तमः (४५) पुरुषोत्तमः (४६) चंद्रसेनः (४७) महासेनः (४८) नभःसेनः (४९) भानुः (५०) सुकांतः (५१) पुष्पयुतः (५२) श्रीधरः (५३) दुर्द्धर्षः (५४) सुसुमारः (५५) दुर्जयः (५६) अजेयमानः (५७) सुधर्मा (५८) धर्मसेनः (५९) आनंदनः (६०) आनंदः (६१) नंदः (६२) अपराजितः (६३) विश्वसेनः (६४) हरिषेणः (६५) जयः (६६) विजयः (६७) विजयंतः (६८) प्रभाकरः (६९) अरिदमनः (७०) मानः (७१) महाबाहुः (७२)

सिप्पसयं च कम्माणंति कर्मणां कृपिवाणिज्यादीनां मध्ये कुंभकारशिल्पादिकं प्रागुक्तं, शिल्पशतमेव भगवतोपदिष्टं, अतएवाऽनाचार्योपदेशजं कर्म, आचार्योपदेशजं च शिल्पमिति कर्मशिल्पयोर्विशेषमामनंति, कर्माणि च क्रमेण स्वयमेव समुत्पन्नानि तिण्णवि पयाहियाए उवदिसइ त्रीण्य-

**महिलागुणे सिप्पसयं च कम्माणं तिण्णवि पयाहियाए उवदिसइ, उवदिसइत्ता पुत्तसयं रज्जसए अभिसिंचइ, अभिसिंचइत्ता पुणरवि लोयंतिएहिं जियकप्पेहिं देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं सेसं तंचेव भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता, जे से गिम्हाणं पढमे मासे पढमे पक्खे,**

प्येतानि द्वासप्ततिपुरुषकलाचतुःषष्टिमहिलागुणशिल्पशताख्यानि वस्तूनि प्रजाहिताय भगवानुपदिशतिस्मेति, उपदिश्य च पुत्तसयं रज्जसए अभिसिंचइ इति, तत्र भरतस्य विनीतायां मुख्यराज्यं, बाहुबलेश्च बहलीदेशे तक्षशिलायां राज्यं दत्वा शेषाणामष्टनवतेर्नंदनानां पृथग् २ देशान्विभज्य दत्त-

शकुनविचारो (२५) धर्मा-चारो (२६) ऽञ्जन (२७) चूर्णयोर्योगः (२८) ॥ ३ ॥
गृहिधर्म (२९) सुप्रसादन–कर्म (३०) कनकसिद्धि (३१) वर्णिकावृद्धी (३२) ।
वाक्पाटव (३३) करलाघव (३४) –ललितचरण (३५) तैलसुरभिताकरणम् (३६) ॥ ४ ॥
भृत्योपचार (३७) गेहा–ऽऽचारौ (३८) व्याकरण (३९) परनिराकरणे (४०) ।
वीणानाद (४१) वितंडा–वादां (४२) कस्थिति (४३) जनाचाराः (४४) ॥ ५ ॥
कुंभभ्रम (४५) सारिश्रम (४६)–रत्नमणिभेद (४७) लिपिपरिच्छेदाः (४८) ।
वैद्यक्रिया च (४९) कामा–विष्करणं (५०) रंधनं (५१) चिकुरबंधः (५२) ॥ ६ ॥
शालीखंडन (५३) मुखमं–डने (५४) कथाकथन (५५) कुसुमसुग्रथने (५६) ।
वरवेष (५७) सर्वभाषा–विशेष (५८) वाणिज्य (५९) भोज्ये च (६०) ॥ ७ ॥
अभिधानपरिज्ञाना (६१)–ऽऽभरणयथास्थानविविधपरिधाने (६२) ।
अंत्याक्षरिका (६३) प्रश्न–प्रहेलिका (६४) स्त्रीकलाश्चतुःषष्टिः ॥ ८ ॥

तु– एकं, दशं, शतं, सहस्रं, अयुतं, लक्षं, प्रयुतं, कोटिः, अर्बुदं, अब्जं, खर्वं, निखर्वं, महापद्मं, शंकुः, जलधिः, अंत्यं, मध्यं, परार्द्धं चेति यथाक्रमं दशगुणं, इत्यादि संख्यानं सुन्दर्या वामकरेण, काष्ठकर्मादि रूपं कर्म भरतस्य, पुरुषादिलक्षणं च बाहुबलिन उपदिष्टमिति, चउसट्ठिं महिलागुणे चतुःषष्टिः स्त्रीकलास्ताश्चेमाः—

ज्ञेया नृत्यौ (१) चित्ये (२), चित्रं (३) वादित्र (४) मन्त्र (५) तन्त्राश्च (६)।
घनवृष्टि (७) फलाकृष्टी (८), संस्कृतजल्पः (९) क्रियाकल्पः (१०) ॥ १ ॥
ज्ञान (११) विज्ञान (१२) दम्भा–(१३) म्बुस्तम्भा (१४) गीत (१५) तालयो (१६) र्मानम्।
आकारगोपना (१७) ऽऽराम–रोपणे (१८) काव्यशक्ति (१९) वक्रोक्ती (२०) ॥ २ ॥
नरलक्षणं (२१) गज (२२) हयवर– परीक्षणे (२३) वास्तुशुद्धिलघुबुद्धी (२४)।

गणियप्पहाणाओ सउणरूअपज्जवसाणाओ बावत्तरिं कलाओ चउसट्ठि-

प्राकृत (२६) संस्कृत (२७) पैशा–चिका (२८)ऽपभ्रंशाः (२९) स्मृतिः (३०) पुराण (३१) विधी (३२)।
सिद्धान्त (३३) तर्क (३४) वैद्यक (३५)– वेदा (३६)ऽऽगम (३७) संहिते (३८) तिहासाश्च (३९)॥३॥
सामुद्रिक (४०) विज्ञाना (४१)–ऽऽचार्यकविद्या (४२) रसायनं (४३) कपटम् (४४)।
विद्यानुवाद (४५) दर्शन (४६)–संस्कारौ (४७) धूर्तशम्बलकम् (४८) ॥ ४ ॥
मणिकर्म (४९) तरुचिकित्सा (५०), खेचर्य (५१) मरी (५२) कलेंद्रजालं च (५३)।
पातालसिद्धि (५४) यंत्रक– रसवत्यः (५५) सर्वकरणी च (५६) ॥ ५ ॥
प्रासादलक्षणं (५७) पण (५८)–चित्रोपल (५९) लेप (६०) चर्मकर्माणि (६१)।
पत्रच्छेद्य (६२) नखच्छेद्य (६३)–पत्रपरीक्षा (६४) वशीकरणम् (६५) ॥ ६ ॥
काष्ठघन (६६) देशभाषा (६७)–गारुड (६८) योगाङ्ग (६९) धातुकर्माणि (७०)।
केवलिविधि (७१) शकुनरुते (७२) इति, पुरुषकला द्विसप्ततिर्ज्ञेयाः ॥ ७ ॥

अत्र लिखितं हंसलिप्याद्यष्टादशलिपिविधानं, तच्च भगवता दक्षिणकरेण ब्राह्म्या उपदिष्टं, गणितं

ततो लोहकार (१) चित्रकार (२) तन्तुवाय (३) नापित (४) शिल्पलक्षणानि चत्वारि शिल्पानि, एतेषां च पञ्चानां मूलशिल्पानां प्रत्येकं विंशत्या भेदै· शिल्पशतं, तच्चाऽऽचार्योपदेशजमिति ॥२१०॥ उसभेणं इत्यादितः पव्वइए इति यावत्, तत्र लेहाइयाओत्ति लेखादिका द्वासप्ततिः कलास्ताश्चेमाः—

लिखितं (१) गणितं (२) गीत (३), नृत्यं (४) वाद्यं च (५) पठन (६) शिक्षे च (७) ।

पक्ष्णणे पडिरूवे अल्लीणे भद्दए विणीए वीसं पुव्वसयसहस्साइं कुमारवासमज्झे वसित्ता तेवट्ठिं पुव्वसयसहस्साइं रज्जवासमज्झे वसइ, तेवट्ठिं च पुव्वसयसहस्साइं रज्जवासमज्झे वसमाणे लेहाइयाओ

ज्योति (८) श्छंदो (९)ऽलंकृति (१०)—व्याकरण (११) निरुक्ति (१२) काव्यानि (१३) ॥१॥
कात्यायनं (१४) निघंटु (१५)—र्गज ( १६) तुरगारोहणं (१७) तयोः शिक्षा (१८) ।
शस्त्राभ्यासो (१९) रस (२०) मन्त्र—(२१) यन्त्र (२२) विष (२३) खन्य (२४) गन्धवादाश्च (२५) ॥२॥

तकरा दह्यमाना भयभीताः सन्तो युगलिनो भगवन्तं विज्ञपयामासुः, भगवताचाग्नेरुत्पत्तिं विज्ञाय भो युगलिकाः! उत्पन्नोऽग्निरत्र च शाल्याद्यौषधीर्निधाय भुंग्ध्वं, यतस्ताः सुखेन जीर्यंतीत्युपाये कथितेऽप्यऽनभ्यासात्सम्यगुपायमजानाना औषधीरग्नौ प्रक्षिप्य कल्पद्रोः फलानीव याचन्ते, अग्निना च ताः सर्वतो दह्यमाना दृष्ट्वा अयं पापात्मा वेताल इवाऽतृप्तः स्वयमेव सर्वं भक्षयति नाऽस्माकं किञ्चित्प्रयच्छतीत्यतोऽस्याऽपराधं भगवते विज्ञप्य शिक्षां दापयिष्याम इति बुद्ध्या गच्छन्तः पथि भगवन्तं

तित्थंकरे इ वा (५)॥ २१० ॥ उसभे णं अरहा कोसलिए दक्खे दक्ख-

हस्तिस्कन्धारूढमभिमुखमागच्छन्तं दृष्ट्वा यथास्थितं व्यतिकरं भगवते न्यवेदयन्, भगवांश्चाह;—अत्र पिठरादिव्यवधानेन भवद्भिर्धान्यादिप्रक्षेपः कार्य इत्युक्त्वा तैरेव मृत्पिण्डमानाय्य निधाय च हस्तिकुम्भे मिण्ठेन कुम्भकारशिल्पं प्रथमं न्यदर्शयत्, उक्तवांश्च—एवंविधानि भाण्डानि विधाय तेषु पाकं कुरुध्वमिति भगवदुक्तं सम्यगुपायमुपलभ्य ते तथैव कृतवन्तोऽतः प्रथमं कुम्भकारशिल्पं प्रवर्त्तितं,

नगरीं निष्पादयेत्याज्ञासमनन्तरमेव रत्नसुवर्णमयभवनपंक्तिप्राकारोपशोभितां स नगरीमवासयत्,

ततो भगवान् राज्ये हस्त्यश्वगवादिसंग्रहपुरस्सर 'उग्र' 'भोग' 'राजन्य' 'क्षत्रिय'लक्षणानि चत्वारि कुलानि व्यवस्थापितवान्, तत्रोग्रदण्डकारित्वादुग्रा आरक्षकस्थानीयाः(१)भोगार्हत्वाद्भोगा गुरुस्थानीया. (२) समानवयस इति कृत्वा राजन्या वयस्यस्थानीया. (३) शेषा. प्रधानप्रकृतितया क्षत्रियाश्च(४) तदा च कालपरिहाण्या ऋषभकुलकरकाले कल्पद्रुमफललाभाभावेन ये इक्ष्वाकास्ते इक्षुभोजिनः, शेषास्तु प्रायः पत्रपुष्पफलभोजिनोऽग्नेरभावाच्चापकशाल्याद्योषधीभोजिनश्चाभूवन्, कालानुभावात्तदजीर्णे च स्वल्पं स्वल्पतरञ्च भुक्तवन्तस्तस्याप्यजीर्णे भगवद्वचसा हस्ताभ्यां घृष्ट्वा त्वचमपनीय भुक्तवन्तस्तथाप्यजीर्णे प्रभूपदेशात्पत्रपुटे जलेन क्लेदयित्वा तंदुलादीन् भुक्तवंतः, एवमप्यजीर्णे कियतीमपि वेलां हस्ततलपुटे संस्थाप्य, पुनरप्यजीर्णे कक्षासु स्वेदयित्वा, तथाप्यजीर्णे हस्ताभ्यां मृष्ट्वा पत्रपुटे क्लेदयित्वा हस्ततलपुटे संस्थाप्येत्यादिबहुप्रकारैरन्नभोजिनो बभूवांसः, एवं सत्येकदा द्रुमघर्षणान्नवोत्थितं प्रवृद्धज्वलज्ज्वालं तृणकलापं कवलयन्तमग्निमुपलभ्याऽभिनवरत्नबुद्ध्या प्रसारि-

नीतिस्तावत् विमलवाहनचक्षुष्मत्कुलकरकालेऽल्पापराधित्वेन 'हकार'रूपैवाऽभूत्, यशस्विनोऽभिचन्द्रस्य च काले अल्पेऽपराधे 'हकार'रूपा, महति च अपराधे 'मकार'रूपा, प्रसेनजिन्मरुदेवनाभिकुलकरकाले च जघन्यमध्यमोत्कृष्टापराधेषु क्रमेण 'हकार' 'मकार' 'धिकार'रूपा दण्डनीतयोऽभूवन्, एवमपि नीत्यतिक्रमणे ज्ञानादिगुणाधिकं भगवन्तं विज्ञाय युगलिभिर्भगवन्निवेदने कृते स्वाम्याह, नीतिमतिक्रमतां दंडं सर्वं राजा करोति, स चाऽभिषिक्तोऽमात्यादिपरिवृतो भवति, एवमुक्ते तेऽप्यूचे, अस्माकमपि ईदृशो राजा भवतु, स्वाम्याह, याचध्वं नाभिकुलकरं राजानं, तैर्याचितो नाभिर्भो ! भवतां ऋषभ एव राजेत्युक्तवान्, ततस्ते राज्याभिषेकनिमित्तमुदकानयनाय सरः प्रति गतवन्तः ॥

तदा च प्रकम्पितासनः शक्रो जीतमिति समागत्य मुकुटकुण्डलाभरणादिपरिष्क्रियापुरस्सरं भगवंतं राज्येऽभिषिञ्चति स्म, युगलिकनरास्तु नलिनपत्रस्थितजलहस्ता अलंकृतं भगवन्तं निरीक्ष्य विस्मिताः क्षणं विचार्य भगवत्पादयोर्जलं प्रक्षिप्तवन्तः, तच्च दृष्ट्वा तुष्टः शक्रोऽचिन्तयत्, अहो ! विनीता एते पुरुषा इति वैश्रमणमाज्ञापितवान्, यदिह द्वादशयोजनविस्तीर्णां नवयोजनविष्कंभां 'विनीता'नाम्नीं

प्रव्रज्यां यावत्सुरानीतोत्तरकुरुकल्पद्रुमफलान्याऽऽस्वादितवान्, अथ सञ्जाते किञ्चिदूनवर्षे च भगवति प्रथमजिनवंशस्थापनं शक्रः स्वजीतमिति विचिन्त्य कथं रिक्तपाणिः स्वामिसमीपं यामीति महतीं इक्षुयष्टिमादाय नाभिकुलकराङ्कस्थस्य प्रभोरग्रे तस्थौ, दृष्ट्वा चेक्षुयष्टिं हृष्टवदनेन स्वामिना करे प्रसारिते "इक्षुं भक्षयसि?" इति भणित्वा तां दत्वा इक्ष्वभिलाषात्स्वामिनो वंश 'इक्ष्वाकु'नामा भवतु, गोत्रमपि अस्य एतत्पूर्वजानां इक्ष्वभिलाषात् 'काश्यप'नामेति

वसुहारवासं वासिंसु, सेसं तहेव, चारगसोहण-माणुम्माणवद्धण-उस्सुक्क-

शक्रो वंशस्थापनां कृतवान्, अथ किञ्चिद्युगलं मातापितृभ्यां तालवृक्षाधोमुक्तं तस्मात्पतता तालफलेन पुरुषो व्यापादितः, प्रथमोऽयमकालमृत्युः, अथ सा कन्या मातापित्रोः स्वर्गगतयोः एकाकिन्येव वने विचचार, दृष्ट्वा च तां सुन्दरीं युगलिकनरा नाभिकुलकराय न्यवेदयन्, नाभिरपि शिष्टेयं सुनन्दानाम्नी ऋषभपत्नी भविष्यतीति लोकज्ञापनपुरस्सरं तां जग्राह, ततः

सुनन्दा सुमङ्गलाभ्यां सह प्रवर्द्धमानो भगवान् यौवनमनुप्राप्तः, इन्द्रोऽपि प्रथमजिनविवाहकृत्यमस्माकं जीतमिति अनेकदेवदेवीकोटिपरिवृतः समागत्य स्वामिनो वरकृत्यं स्वयमेव कृतवान्, वधूकृत्यं च द्वयोरपि कन्ययोर्देव्य इति, ततस्ताभ्यां विषयोपभोगिनो भगवतः षट्लक्षपूर्वेषु गतेषु भरतब्राह्मीरूपं युगलं सुमङ्गला, वाहुवलिसुन्दरीरूपं युगलं च सुनंदा प्रसुषुवे, तदनु चैकोनपंचाशत्पुत्रयुग-

माइय-ठिइवडिय-जूयवज्जं सव्वं भाणियव्वं ॥ २०९ ॥ उसभे णं अरहा कोसलिए तस्स णं पंच णामधेज्जा एवमाहिज्जंति, तंजहा—उसभे इ वा (१) पढमराया इ वा (२) पढमभिक्खायरे इ वा (३) पढमजिणे इ वा (४) पढम-

लानि क्रमात् सुमंगला प्रसूतवती ॥ २०९ ॥ उसभेणं इत्यादि—ऋषभः अर्हन् कौशलिकः काश्यपगोत्रीयः तस्य प्रभोः पंच नामधेयानि एवमाख्यायन्ते, तद्यथा—इकारः सर्वत्र वाक्यालंकारे पढमराएत्ति प्रथमराजा, सचैवं— कालानुभावात् क्रमेण प्रचुरकषायोदयात्परस्परं विवदमानानां युगलिकानां दण्ड-

वीरमाता तु सिंहमद्राक्षीत्, शेषं सूत्रं सुगमम् ॥ २०७ ॥ तेणं इत्यादितः दारगं पयाया इति पर्यन्तं प्राग्वत् ॥ २०८ ॥ तं चेव सव्वं इत्यादितः जूयवज्जं सव्वं भाणियव्वं इति यावत्, तत्र तदेव सर्वं यावत् देवा देव्यश्च वसुधारा वर्षणं चक्रुः, शेषं तथैव पूर्वोक्तप्रकारेण बन्दिमोचनमानोन्मानवर्द्धनशुल्कमोचनप्रमुखस्थितिपतितायुगवर्जं सर्वं भणितव्यम् ॥

चित्तबहुले, तस्स णं चित्तबहुलस्स अट्ठमी पक्खे णं, णवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणं जाव आसाढाहिं णक्खत्ते णं जोगमुवागए णं आरोग्गा आरोग्गं दारयं पयाया ॥२०८॥ तंचेव सव्वं जाव देवा देवीओ य

अथ देवलोकच्युतोऽद्भुतरूपोऽनेकदेवदेवीपरिवृतः सकलगुणैस्तेभ्यो युगलमनुष्येभ्यः परमोत्कृष्टः क्रमेण प्रवर्द्धमानः सन् आहाराभिलाषे सुरसंचारिताऽमृतरससरसामङ्गुलिं मुखे प्रक्षिपति, एवमन्येऽपि तीर्थङ्करा बाल्ये अवगंतव्याः, बाल्यातिक्रमे पुनरग्निपक्वाहारभोजिनः, ऋषभस्तु

इत्यादितः गब्भं वक्कंते इति पर्यंतं सुगमम् ॥ २०६ ॥ उसभेणं इत्यादितः सयमेव वागरेइ इति पर्यंतं,

भारहे वासे इक्खागभूमीए नाभिकुलगरस्स मरुदेवाए भारियाए पुव्वरत्तावरत्तकालसमयंसि आहारवक्कंतीए जाव गब्भत्ताए वक्कंते॥२०६॥उसभे णं अरहा कोसलिए तिन्नाणोवगए आविहोत्था, तंजहा– चइस्सामित्ति जाणइ जाव सुविणे पासइ, तंजहा–"गयवसह" गाहा, सव्वं तहेव णवरं पढमं उसभं मुहे णं अइंतं पासइ, सेसाओ गयं, नाभिकुलगरस्स साहेइ, सुविणपाढगा नत्थि, नाभिकुलगरो सयमेव वागरेइ ॥२०७॥ तेणं कालेणं तेणं समएणं उसभे णं अरहा कोसलिए जे से गिम्हाणं पढमे मासे, पढमे पक्खे,

तत्र मरुदेवा प्रथमं मुखेन अइंतं प्रविशन्तं वृषभं पश्यति, शेषास्तु जिनजनन्यः प्रथमं गजं पश्यन्ति,

॥अथाऽस्यामवसर्पिण्यां प्रथमधर्मप्रवर्तकत्वेन परमोपकारित्वात्किंचिद्विस्तरतः श्रीऋषभदेवचरित्रं प्रस्तौति, तेणं इत्यादितः अभीइपंचमे हुत्था इति पर्यंतं, तत्र कोसलिएत्ति कोशलायां अयोध्यायां भवः

तेणं कालेणं तेणं समएणं उसभेणं अरहा कोसलिए चउउत्तरासाढे अभीइपंचमे होत्था ॥ २०४ ॥ तंजहा—उत्तरासाढाहिं चुए चइत्ता गब्भं वक्कंते जाव अभीइणा परिणिव्वुए ॥ २०५ ॥ तेणं कालेणं तेणं समएणं उसभेणं अरहा कोसलिए जे से गिम्हाणं चउत्थे मासे, सत्तमे पक्खे, आसाढवहुले, तस्स णं आसाढवहुलस्स चउत्थी पक्खे णं, सव्वट्ठसिद्धाओ महाविमाणाओ तित्तीसं सागरोवमट्ठितीयाओ अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे

कौशलिकः, शेषं सुगमम् ॥२०४॥ तंजहा इत्यादितः परिणिव्वुए इति पर्यंतं सुगमम् ॥ २०५ ॥ तेणं

☞ हिन्दी— [ १९ ]

श्रीसंभवनाथ स्वामिके निर्वाणसे दश लाख कोटि सागरोपमे श्रीअभिनंदन स्वामिनिर्वाण, उसके वाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून दश लाख कोटि सागरोपमे श्रीमहावीर निर्वाण, उसके वाद नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ३ ॥

[ २० ]

श्रीअजितनाथ स्वामिके निर्वाणसे तीस लाख कोटि सागरोपमे श्रीसंभवनाथ निर्वाण, उसके वाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून वीस लाख कोटि सागरोपमे श्रीमहावीर निर्वाण, उसके पीछे नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ २ ॥

[ २१ ]

श्रीऋषभदेव स्वामिके निर्वाणसे पचास लाख कोटि सागरोपमे श्रीअजितनाथ निर्वाण, उसके वाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून पचास लाख कोटि सागरोपमे श्रीमहावीर स्वामिनिर्वाण, उसके पीछे नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १ ॥

☞ गुजराती— [ १९ ]

श्रीशंभव निर्वाणथी दस लाख कोडि सागरोपमइं श्रीअभिनंदन निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र वर्ष एतलइं न्यून दस लाख कोडि सागरोपमइं श्रीवीर निर्वाण, तिवारपछी नव शत अइसी वर्षे पुस्तकवाचनादि ॥ ३ ॥

[ २० ]

श्रीअजितनाथना निर्वाणथी त्रीस लाख कोटि सागरोपमइं श्रीसंभव निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र वर्ष एतले न्यून वीस लाख कोडि सागरोपमइं श्रीवीर निर्वाण, तिवारपछी नव शत अइसी वर्षे पुस्तकवाचनादि ॥ २ ॥

[ २१ ]

श्रीऋषभ निर्वाणथी पंचास लाख कोडि सागरोपमे श्रीअजित निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र वर्ष एतलइं न्यून पंचास लाख कोडि सागरोपमइं श्रीवीर निर्वाण, तिवारपछी नव शत अइसी वर्षइं पुस्तकवाचनादि ॥ १ ॥

हिन्दी—

[ १६ ]

श्रीपद्मप्रभ स्वामिके निर्वाण पीछे नव हजार कोटि सागरोपमे श्रीसुपार्श्वनाथ-निर्वाण, तत्पश्चात् ४२ हजार तीन वर्ष साढे आठ महिने न्यून एक हजार कोटि सागरोपमे श्रीमहावीरनिर्वाण, उसके बाद नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ६ ॥

[ १७ ]

श्रीसुमतिनाथ स्वामिके निर्वाणसे ९० हजार कोटि सागरोपमे श्रीपद्मप्रभस्वामि निर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून दश हजार कोटि सागरोपमे श्रीमहावीरनिर्वाण, उसके पीछे नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ५ ॥

[ १८ ]

श्रीअभिनंदनस्वामिके निर्वाणसे नव लाख कोटि सागरोपमे श्रीसुमतिनाथ निर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून एक लाख कोटि सागरोपमे श्रीमहावीरनिर्वाण, उसके पीछे नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ४ ॥

गुजराती—

[ १६ ]

श्रीपद्मप्रभ निर्वाणथी नव हजार कोडि सागरइ श्रीसुपार्श्व निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र वर्ष न्यून एक सहस्र कोटि सागरइ श्रीवीरनिर्वाण, तिवारपछी नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ ६ ॥

[ १७ ]

श्रीसुमतिनाथना निर्वाणथी नेऊ हजार कोडि सागरोपमइ श्रीपद्मप्रभ निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र एतलइ न्यून दस हजार कोडि सागरोपमइ श्रीवीरनिर्वाण, तिवारपछी नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ ५ ॥

[ १८ ]

श्रीअभिनंदनना निर्वाणथी नव लाख कोडि सागरोपमइ श्रीसुमति निर्वाण, तिवारपछी त्रीणि वर्ष साढाआठ मास बइतालीस सहस्र वर्ष न्यून एक लाख कोडि सागरोपमइ श्रीवीरनिर्वाण, तिवारपछी नवसइ अइसी वरसइ पुस्तकवाचनादि ॥ ४ ॥

हिन्दी—

[ १३ ]

श्रीसुविधिनाथ स्वामिके निर्वाण पीछे नवकोटि सागरोपमे श्रीशीतलनाथ निर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून एक कोटि सागरोपमे श्रीमहावीर-निर्वाण, उसके पश्चात् नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ९ ॥

[ १४ ]

श्रीचंद्रप्रभ स्वामिके निर्वाणसे ९० कोटि सागरोपमे श्रीसुविधिनाथ निर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून दशकोटि सागरोपमे श्रीमहावीरनिर्वाण, तिस पीछे नवसौ अस्सी वर्षे पुस्तकवाचना-दि ॥ ८ ॥

[ १५ ]

श्रीसुपार्श्वनाथस्वामिके निर्वाण बाद नवसौ कोटि सागरोपमे श्रीचंद्रप्रभ स्वामि निर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून एकसौ कोटि सागरोपमे श्रीमहा-वीरनिर्वाण, उसके पश्चात् नवसो अस्सी वर्षे पुस्तकवाचनादि ॥ ७ ॥

गुजराती—

[ १३ ]

श्रीसुविधिनाथना निर्वाणथी नव कोडि सा-गरोपमइं श्रीशीतल निर्वाण, तिवारपछी बइता-लीस सहस्र वर्ष त्रीणि वरस साढाआठ मास एतलइं न्यून एक कोडि सागरोपमइं श्रीवीर-निर्वाण, तिवारपछी नव शत अइसी वर्षइं पुस्तकवाचनादि ॥ ९ ॥

[ १४ ]

श्रीचंद्रप्रभना निर्वाणथी नेऊ कोडि साग-रोपमइं श्रीसुविधिनिर्वाण, तिवारपछी बइ-तालीस हजार वर्ष त्रीणि वर्ष साढाआठ मास एतलइं न्यून दस कोडि सागरोपमइं श्रीवीर-निर्वाण, तिवारपछी नव शत अइसी वर्षे पु-स्तकवाचनादि ॥ ८ ॥

[ १५ ]

श्रीसुपार्श्वना निर्वाणथी नवसइं कोडि सागरो-पमइं श्रीचंद्रप्रभ निर्वाण, तिवारपछी बइता-लीस हजार वर्ष त्रीणि वर्ष साढा आठ मास एतले न्यून एक शत कोटि सागरे श्रीवीर-निर्वृति, तिवारपछी नव शत अइसी वर्षइं पु-स्तकवाचनादि ॥ ७ ॥

☞ हिन्दी— [ १० ]

श्रीवासुपूज्य स्वामिके निर्वाण बाद तीस सागरोपमसे श्रीविमलनाथ निर्वाण, उसके पीछे सोला सागरोपम, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १२ ॥

[ ११ ]

श्रीश्रेयांस नाथ स्वामिके निर्वाण पीछे ५४ सागरोपमसे श्रीवासुपूज्यस्वामिनिर्वाण, उसके बाद ४६ सागरोपम, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ ११ ॥

[१२]श्रीशीतलनाथ स्वामिके निर्वाणसे एकसौ सागरोपम, ६६ लाख २६ हजार वर्षन्यून एक कोटि सागरोपमसे श्रीश्रेयांसस्वामिनिर्वाण, उसके बाद ४२ हजार तीन वर्ष साढे आठ महिने न्यून ६६ लाख २६ हजार वर्ष अधिक एकसौ सागरोपमें श्रीमहावीरनिर्वाण, उसके बाद नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १० ॥

☞ गुजराती— [ १० ]

श्रीवासुपूज्यना निर्वाणथी त्रीसइ सागरोपमइ श्रीविमलनिर्वाण, तिवारपछी सोल सागर पासठि लाख चोरासी सहस्र नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ १२ ॥

[ ११ ]

श्रीश्रेयांसना निर्वाणथी चउपन्न सागरोपमइ श्रीवासुपूज्यनिर्वाण, तिवारपछी छइतालीस सागरोपम पासठि लाख चउरासी सहस्र नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ ११ ॥

[१२]श्रीशीतलनाथना निर्वाणथी एक शत सागरोपम तथा छासठि लाख छव्वीस सहस्र वरसइ न्यून एक कोडि सागरोपमइ श्रीश्रेयांसनिर्वाण, तिवारपछी त्रीणि वर्ष साढा आठ मास अनइ बइतालीस सहस्र वर्षइ न्यून एहवां छासठि लाख छव्वीस सहस्र वरसइ अधिक एक शत सागरोपमइ श्रीवीरनिर्वाण, तिवारपछी नव शत अइसी वर्षइ पुस्तकवाचनादि ॥१०॥

हिन्दी—

[ ७ ]

श्रीधर्मनाथ स्वामिके निर्वाणसे पौना पल्योपम न्यून तीन सागरोपमे श्रीशांतिनाथ निर्वाण, उसके बाद पौना पल्योपम, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १५ ॥

[ ८ ]

श्रीअनंतनाथ स्वामिके निर्वाणसे चार सागरोपमे श्रीधर्मनाथ निर्वाण, उसके पीछे तीन सागरोपम, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १४ ॥

[ ९ ]

श्रीविमलनाथ स्वामिके निर्वाणसे नव सागरोपमे श्रीअनंतनाथ निर्वाण, उसके पश्चात् सात सागरोपम, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १३ ॥

गुजराती—

[ ७ ]

श्रीधर्मनाथना निर्वाणथी पोणइं पल्योपमइं न्यून त्रीणि सागरोपमइं श्रीशांतिनिर्वाण, तिवारपछी पोणु पल्योपम पांसठि लाख चोरासी सहस्र नव शत अइसी वर्षइं पुस्तक वाचनादि ॥ १५ ॥

[ ८ ]

श्रीअनंतनाथ निर्वाणथी च्यारइं सागरोपमइं श्रीधर्मनिर्वाण, तिवारपछी त्रीणि सागरोपम पांसठि लाख चउरासी सहस्र नव शत अइसी वर्षइं पुस्तकवाचनादि ॥ १४ ॥

[ ९ ]

श्रीविमलनाथना निर्वाणथी नव सागरोपमइं श्रीअनंतनिर्वाण, तिवारपछी सात सागर पांसठि लाख चउरासी सहस्र नव शत अइसी वर्षइं पुस्तकवाचनादि ॥ १३ ॥

| | | |
|---|---|---|
| ☞ हिन्दी— [ ४ ] श्रीअरनाथ स्वामिके निर्वाणसे कोटि सहस्र वर्षे श्रीमल्लिनाथ निर्वाण, पीछे ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १८ ॥ | [ ५ ] श्रीकुंथुनाथ स्वामिके निर्वाणसे कोटि सहस्र वर्षे न्यून एक पल्योपमके चौथे भागमें श्रीअरनाथनिर्वाण, उसके बाद कोटिसहस्र ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १७ ॥ | [ ६ ] श्रीशांतिनाथ स्वामिके निर्वाणसे अर्द्ध पल्योपमे श्रीकुंथुनाथ निर्वाण, उसके पश्चात् एक पल्योपमके चौथे भाग, ६५ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १६ ॥ |
| ☞ गुजराती— [ ४ ] श्रीअर निर्वाणथी कोटि सहस्र वर्षे श्रीमल्लि-निर्वाण, तिवारपछी पांसठि लाख चउरासी सहस्र नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ १८ ॥ | [ ५ ] श्रीकुंथुनाथ निर्वाणथी कोटि सहस्र वरसइ न्यून पल्योपमनइ चोथइ भागइ श्रीअर निर्वाण, तिवारपछी वर्षे सहस्र कोटि पासठि लाख चउरासी सहस्र नव शत अइसी वर्षे पुस्तकवाचनादि ॥ १७ ॥ | [ ६ ] श्रीशांतिनाथ निर्वाणथी अर्धपल्योपमइ श्रीकुंथुनिर्वाण, तिवारपछी पल्योपमनो चोथो भाग पासठि लाख चउरासी सहस्र नव शत अइसी वर्षइ पुस्तकवाचनादि ॥ १६ ॥ |

## [ सुखाववोधाय नृभाषया यंत्ररूपेण वर्णनम् ]

| | | |
|---|---|---|
|  हिन्दी— [ १ ] श्रीनमिनाथ स्वामिके निर्वाण वाद पांच लाख वर्षे श्रीनेमिनाथ स्वामिका निर्वाण, उसके वाद चउरासी हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ २१ ॥ | [ २ ] श्रीमुनिसुव्रतस्वामिके निर्वाण वाद छ लाख वर्षे श्रीनमिनाथ निर्वाण, उसके वाद पांच लाख चउरासी हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ २० ॥ | [ ३ ] श्रीमल्लिनाथस्वामिके निर्वाणसे ५४ लाख वर्षे श्रीमुनिसुव्रतस्वामिनिर्वाण, उसके वाद ११ लाख ८४ हजार नवसौ अस्सी वर्षे पुस्तकवाचनादि ॥ १९ ॥ |
| गुजराती— [ १ ] श्रीनमिनाथना निर्वाणथी पांचलाख वरसे श्रीनेमिनिर्वाण, तिवारपछी चोरासी सहस्र नव शत अइसी वरसइं पुस्तक वाचनादि ॥ २१ ॥ | [ २ ] श्रीमुनिसुव्रतना निर्वाणथी छलाख वरसे श्रीनमिनिर्वाण, तिवारपछी पांच लक्ष चउरासी सहस्र नव शत अइसी वर्षे पुस्तकवाचनादि ॥ २० ॥ | [ ३ ] श्रीमल्लिनाथना निर्वाणथी चउपन्न लाख वरसइं श्रीमुनिसुव्रत निर्वाण, तिवारपछी इग्यार लाख चउरासी सहस्र नव शत अइसी वर्षे पुस्तकवाचनादि ॥ १९ ॥ |

पुस्तकवाचनादि ( ३ ) ॥ २०२ ॥ श्रीअजितनिर्वाणात्सागराणां त्रिंशता कोटिलक्षैः श्रीशंभवनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनविंशतिसागरकोटिलक्षैः श्रीवीरनिर्वृतिस्ततो

अजियस्स णं अरहओ जावप्पहीणस्स पण्णासं सागरोवमकोडि-
सयसहस्सा वइक्कंता, सेसं जहा सीयलस्स, तं च इमं, तिवास-
अद्धनवममासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०३ ॥

नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (२) ॥ २०३ ॥ श्रीऋषभनिर्वाणात्सागरकोटीनां पंचाशता लक्षैः श्रीअजितनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनपंचाशत्कोटिलक्ष-सागरैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि(१) ॥

१ इद व्याख्यान (२२८) सूत्रस्य ज्ञेय, साहचर्यादत्र व्याख्यातमिति तत्रैव व्याख्याकृता लिखितमस्ति ॥

निर्वाणात्सागरकोटीनां नवभिर्लक्षैः श्रीसुमतिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैकलक्षकोटिसागरैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (४)

सागरोवमकोडिसयसहस्सा वइक्कंता सेसं जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०१ ॥ संभवस्सणं अरहओ जावप्पहीणस्स वीसं सागरोवमकोडिसयसहस्सा वइक्कंता सेसं जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहियबायालीसवाससहस्सेहिं इच्चाइयं ॥ २०२ ॥

॥ २०१ ॥ श्रीशंभवनिर्वाणात्सागरकोटीनां दशभिर्लक्षैः श्रीअभिनंदननिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनदशलक्षकोटिसागरैः श्रीवीरनिर्वृतिस्ततो नवशताशीतिवर्षातिक्रमे

र्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैककोटिसहस्रसागरैः श्रीवीरनिर्वृतिस्त-
तो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (६) ॥ १९९ ॥ श्रीसुमतिनिर्वाणान्नवतिसहस्रसागरको-

सागरोवमकोडिसहस्सा वइक्कंता सेसं जहा सीयलस्स, तं च इमं, तिवास-
अद्धनवममासाहियबायालीसवाससहस्सेहिं इच्चाइ ॥ १९९ ॥ सुमइस्स
णं अरहओ जावप्पहीणस्स एगे सागरोवमकोडिसयसहस्से वइक्कंते, सेसं
जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहियबायालीसवाससह-
स्सेहिं इच्चाइयं ॥ २०० ॥ अभिनंदणस्सणं अरहओ जावप्पहीणस्स दस-

टिभिः श्रीपद्मप्रभनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनदशकोटिसहस्रसा
गरैः श्रीवीरनिर्वाणं, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (५) ॥ २०० ॥ श्रीअभिनंदन-

श्रीसुविधिनिर्वाणं, ततोऽपि त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रैर्न्यूनासु दशसु सागरकोटिषु व्यतिक्रांतासु श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ( ८ ) ॥ १९७ ॥ श्रीसुपार्श्वनिर्वाणात्सागराणां नवशतकोटिभिः श्रीचंद्रप्रभनिर्वाणं, ततश्च वर्षत्रयसार्द्धाष्टमासा-

बायालीसवाससहस्सेहिं ऊणगमिच्चाइ ॥ १९७ ॥ सुपासस्स णं अरहओ जावप्पहीणस्स एगे सागरोवमकोडिसहस्से वइक्कंते, सेसं जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहियबायालीसवाससहस्सेहिं ऊणिया वइक्कंता इच्चाइ ॥ १९८ ॥ पउमप्पहस्स णं अरहओ जावप्पहीणस्स दस

धिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैकशतकोटिसागरैः श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे-पुस्तकवाचनादि ( ७ ) ॥ १९८ ॥ श्रीपद्मप्रभनिर्वाणात्सागरकोटीनां नवभिः सहस्रैः श्रीसुपार्श्वनि-

विंशतिसहस्रवर्षैरधिके सागरशतेऽतिक्रांते श्रीवीरनिर्वृतिः, ततः परं नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, (१०) ॥ १९५ ॥ श्रीसुविधिनिर्वाणान्नवभिः सागरकोटिभिः श्रीशीतलनिर्वाणं,

संवच्छरे काले गच्छइ ॥ १९५ ॥ सुविहिस्स णं अरहओ जावप्पहीणस्स दस सागरोवमकोडीओ वइक्कंताओ सेसं जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहियवायालीसवाससहस्सेहिं ऊणिया वइक्कंता इच्चाइ ॥ १९६ ॥ चंदप्पहस्स णं अरहओ जावप्पहीणस्स एगं सागरोवमकोडिसयं वइक्कंतं सेसं जहा सीयलस्स, तं च इमं, तिवासअद्धनवममासाहिय-

ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनसागरकोट्या अतिक्रमे श्रीवीरनिर्वृतिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (९) ॥ १९६ ॥ श्रीचंद्रप्रभनिर्वाणान्नवत्या सागरकोटिभिः

सागरपंचषष्टिलक्षादिना पुस्तकवाचनादि, (१२) ॥ १९३ ॥ श्रीश्रेयांसनिर्वाणाच्चतुःपंचाशता सागरैः श्रीवासुपूज्यनिर्वाणं, ततश्च षट्चत्वारिंशत्सागरपंचषष्टिलक्षादिना पुस्तकवाचनादि, (११) ॥१९४॥

सिज्जंसस्स णं अरहओ जावप्पहीणस्स एगे सागरोवमसए वइक्कंते पण्ण-
ट्ठिं च सेसं जहा मल्लिस्स ॥ १९४ ॥ सीयलस्स णं अरहओ जावप्पही-
णस्स एगा सागरोवमकोडी तिवासअद्धनवममासाहियबायालीसवासस-
हस्सेहिं ऊणिया वइक्कंता एयंमि समए महावीरो निव्वुओ, तओविअ णं
परं नव वाससयाइं वइक्कंताइं दसमस्स य वाससयस्स अयं असीइमे

श्रीशीतलनिर्वाणात् षट्षष्टिलक्षषड्विंशतिसहस्रवर्षाधिकसागरशतोनया एकया सागरकोट्या श्रीश्रेयांसनिर्वाणं, ततोऽपि वर्षत्रयसार्द्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैः षट्षष्टिलक्षषड्-

तिवर्षातिक्रमे पुस्तकवाचनादि, (१५) ॥१९०॥ श्रीअनंतनिर्वाणाच्चतुर्भिः सागरैः श्रीधर्मनिर्वाणं, ततश्च सागरत्रयपंचषष्टिलक्षादिवर्षातिक्रमे पुस्तकवाचनादि, उभयमीलनात्सूत्रोक्तं "सत्तसागरोवमाइं" इत्यादि मानं स्यात् (१४) ॥ १९१ ॥ श्रीविमलनिर्वाणान्नवभिः सागरै. श्रीअनंतनिर्वाणं, ततश्च सप्त-

॥ १९० ॥ अणंतस्स णं अरहओ जावप्पहीणस्स सत्त सागरोवमाइं वइक्कंताइं पण्णाट्ठिं च सेसं जहा मल्लिस्स ॥ १९१ ॥ विमलस्स णं अरहओ जावप्पहीणस्स सोलस सागरोवमाइं वइक्कंताइं पण्णाट्ठिं च सेसं जहा मल्लिस्स ॥ १९२ ॥ वासुपुज्जस्स णं अरहओ जावप्पहीणस्स छायालीसं सागरोवमाइं वइक्कंताइं पण्णाट्ठिं च सेसं जहा मल्लिस्स ॥ १९३ ॥

सागरपंचषष्टिलक्षादिना पुस्तकवाचनादि, उभयमीलनेन सूत्रोक्तं "सोलस सागरोवमाइं" इत्यादि मान स्यात् (१३) ॥ १९२ ॥ श्रीवासुपूज्यनिर्वाणात् त्रिंशता सागरैः श्रीविमलनिर्वाण, ततश्च षोडश-

र्वाणाद्वर्षकोटिसहस्रन्यूनपल्योपमचतुर्थभागेन श्रीअरनिर्वाणं, ततश्च वर्षसहस्रकोटिपंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (१७) ॥ १८८ ॥ श्रीशांतिनिर्वाणात्पल्योपमार्द्धेन श्रीकुंथुनिर्वाणं, ततश्च पल्यचतुर्थभागपंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, उभयमीलने च सूत्रोक्तं मानं स्यात् "एगे चउभागूणे पलिओवमे" इत्यादि,

**संतिस्स णं अरहओ जावप्पहीणस्स एगे चउभागूणे पलिओवमे वइक्कंते, पण्णट्ठिं च सेसं जहा मल्लिस्स ॥ १८९ ॥ धम्मस्स णं अरहओ जावप्पहीणस्स तिण्णि सागरोवमाइं वइक्कंताइं पण्णट्ठिं च सेसं जहा मल्लिस्स**

पादोनं पल्योपमं इत्यर्थः, सेसं जहा मल्लिस्स इत्यादि–शेषं मल्लिनाथवत्, तच्च पंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षरूपं ज्ञेयं, एवं सर्वत्र (१६) ॥१८९॥ श्रीधर्मनिर्वाणात्पूर्वोक्तपादोनपल्यन्यूनैस्त्रिभिः सागरोपमैः श्रीशांतिनिर्वाणं, ततश्च पादोनपल्योपमपंचषष्टिलक्षचतुरशीतिसहस्रनवशताशी-

सहस्साइं इत्यादि (१९) ॥ १८६ ॥ श्रीअरनिर्वाणाद्वर्षाणां कोटिसहस्रेण श्रीमल्लिनिर्वाणं, ततश्च

सयस्स अय असीइमे संवच्छरे काले गच्छइ ॥ १८६ ॥ अरस्सणं अरहओ जावप्पहीणस्स एगे वासकोडिसहस्से वइक्कंते सेसं जहा मल्लिस्स, तं च एयं, पंचसट्ठिलक्खा चउरासीइं च वाससहस्सा वइक्कंता तंमि समए महावीरो णिब्बुओ, तओ परं णव वाससया वइक्कंता दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ, एवं अग्गओ जाव सेयंसो ताव दट्ठवं ॥ १८७ ॥ कुंथुस्स णं अरहओ जावप्पहीणस्स एगे चउभागपलिओवमे वइक्कंते, पंचसट्ठिं च सयसहस्सा सेसं जहा मल्लिस्स ॥ १८८ ॥

पंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (१८) ॥ १८७ ॥ श्रीकुंथुनि-

सुव्रतनिर्वाणात् षड्भिर्वर्षाणां लक्षैः श्रीनमिनिर्वाणं, ततश्च पंचलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, अत्र च मुनिसुव्रतनमिनिर्वाणांतरस्य नमिनिर्वाणपुस्तकवाचनांतरस्य च मीलने सूत्रोक्तं " इक्कारसवाससयसहस्साइं " इत्यादि मानं भवति, एवं सर्वत्र ज्ञेयम् (२०)

जाव सव्वदुक्खप्पहीणस्स इक्कारस वाससयसहस्साइं चउरासिइं च वाससहस्साइं णव वाससयाइं वइक्कंताइं दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥ १८५ ॥ मल्लिस्स णं अरहओ जावप्पहीणस्स पण्णट्ठिं वाससयसहस्साइं चउरासीइं च वाससहस्साइं णव वाससयाइं वइक्कंताइं दसमस्स य वास-

॥ १८५ ॥ श्रीमल्लिनिर्वाणाच्चतुःपंचाशता वर्षाणां लक्षैः श्रीमुनिसुव्रतनिर्वाणं, ततश्चैकादशलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, उभयमीलितं च सूत्रकृदाह, पण्णट्ठिं वाससय-

॥ १७५ ॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥ १८० ॥ १८१ ॥ १८२ ॥ १८३ ॥ एतानिसूत्राणि सुगमानि पूर्वं व्याख्यातानि च ॥ इति श्रीनेमिचरित्रम् ॥

अतः परं ग्रंथगौरवभयात्पश्चानुपूर्व्या नम्यादीनां अजितांतानां जिनानां अंतरकालमानमेवाह ।

अयं असीइमे संवच्छरे काले गच्छइ ॥ १८३ ॥ णमिस्स णं अरहओ कालगयस्स जाव सव्वदुक्खप्पहीणस्स पंच वाससयसहस्साइं, चउरासीइं च वाससहस्साइं, णव वाससयाइं वइक्कंताइं, दसमस्स य वाससयस्स अयं असीइमे संवच्छरे काले गच्छइ ॥१८४॥ मुणिसुव्वयस्स णं अरहओ

णमिस्स णं अरहओ इत्यादित॰ बायालीसं वाससहस्सेहि इच्चाइयं इति पर्यंतानि विंशतिः सूत्राणि व्यक्तानि, तथाऽपि बालबोधाय समुदायार्थो लिख्यते, श्रीनमिनिर्वाणात्पंचभिर्वर्षाणां लक्षैः श्रीनेमिनिर्वाणं, ततश्चतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे च पुस्तकवाचनादि (२१) ॥१८४॥ श्रीमुनि-

लिपरिआयं पाउणित्ता, पडिपुण्णाइं सत्त वाससयाइं सामण्णपरिआयं पाउणित्ता, एगं वाससहस्सं सव्वाउयं पालइत्ता, खीणे वेयणिज्जाउयणामगोत्ते, इमीसे ओसप्पिणीए दुसमसुसमाए बहुवइक्कंताए, जे से गिम्हाणं चउत्थे मासे, अट्ठमे पक्खे, आसाढसुद्धे, तस्सणं आसाढसुद्धस्स अट्ठमी पक्खे णं, उप्पिं उज्जितसेलसिहरंसि पंचहिं छत्तीसेहिं अणगारसएहिं (५३६) सद्धिं मासिएणं भत्तेणं अपाणएणं चित्ताणक्खत्ते णं जोगमुवागए णं पुव्वरत्तावरत्तकालसमयंसि णेसज्जिए कालगए (ग्रं० ८००) जाव सव्वदुक्खप्पहीणे ॥ १८२ ॥ अरहओ णं अरिट्ठणेमिस्स कालगयस्स जाव सव्वदुक्खप्पहीणस्स चउरासीइं वाससहस्साइं वइक्कंताइं पंचासीइमस्स वाससहस्सस्स णव वाससयाइं वइक्कंताइं, दसमस्स य वाससयस्स

द्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर—जाव संपया होत्था, पण्णरस सया ( १५०० ) ओहिणाणीणं, पण्णरस सया ( १५०० ) केवलणाणीणं, पण्णरस सया ( १५०० ) वेउव्वियाणं, दस सया ( १००० ) विउलमईणं, अट्ठ सया ( ८०० ) वाईणं, सोलस सया ( १६०० ) अणुत्तरोववाइयाणं, पण्णरस समणसया (१५००) सिद्धा, तीसं अज्जियासयाइं (३०००) सिद्धाइं ॥ १८० ॥ अरहओणं अरिट्ठणेमिस्स दुविहा अंतगडभूमी होत्था, तंजहा—जुगंतगडभूमी परियायंतगडभूमि य, जाव अट्ठमाओ पुरिसजुगाओ जुगंतगडभूमी, दु वास परियाए अंतमकासी॥१८१॥ तेणं कालेणं तेणं समएणं अरहा अरिट्ठणेमी तिण्णि वाससयाइं कुमारवासमज्झे वसित्ता, चउप्पण्णं राइंदियाइं छउमत्थपरियायं पाउणित्ता, देसूणाइं सत्त वाससयाइं केव-

ततश्च महासती तदाकर्ण्य तं दृष्ट्वा च धृताद्भुतधैर्या तं प्रत्युवाच—
" महानुभाव ! कोऽयं ते-ऽभिलाषो नरकाध्वनः । सर्वं सावद्यमुत्सृज्य, पुनर्वाञ्छन्न लज्जसे ? ॥ १ ॥
अगंधनकुले जाता-स्तिर्यंचो ये भुजंगमाः । तेऽपि नो वांतमिच्छंति, त्वं नीचः किं ततोऽप्यसि ? ॥२॥"

उक्कोसिया समणोवासगाणं संपया होत्था ॥ १७८ ॥ अरहओ णं अरिट्ठणेमिस्स महासुव्वयापामोक्खाणं समणोवासियाणं तिण्णि सयसाहस्सीओ छत्तीसं च सहस्सा ( ३३६००० ) उक्कोसिया समणोवासियाणं संपया होत्था ॥ १७९ ॥ अरहओ णं अरिट्ठणेमिस्स चत्तारि सया ( ४०० ) चउ-

इत्यादिवाक्यैः प्रतिबोधितः श्रीनेमिपार्श्वे तद्दुश्चीर्णमालोच्य तपस्तप्त्वा च मुक्तिं जगाम, राजीमत्यपि दीक्षामाराध्य शिवशय्यामारूढा चिरप्रार्थितं शाश्वतिकं श्रीनेमिसंयोगमवाप, यदाहुः—
"छद्मस्था वत्सरं स्थित्वा, गेहे वर्षचतुःशतीम्। पंचवर्षशतीं राजी, ययौ केवलिनी शिवम् ॥१॥"१७४॥

मती प्रभुं नंतुं रैवतके व्रजंती मार्गे वृष्ट्या बाधिता एकां गुहां प्राविशत्, तस्यां च गुहायां पूर्वप्रविष्टं रथनेमिमजानती सा क्लिन्नानि वस्त्राणि शोषयितुं परितश्चिक्षेप, ततश्च तां अपहसितत्रिदशतरुणीरामणीयकां साक्षात्कामरमणीमिव रमणीयां तथा विवसनां निरीक्ष्य भ्रातुर्वैरादिव मदनेन मर्म-

णसंपया होत्था ॥ १७६ ॥ अरहओणं अरिट्ठणेमिस्स अज्जजक्खिणिपामोक्खाओ चत्तालीसं अज्जियासाहस्सीओ ( ४०००० ) उक्कोसिया अज्जियासंपया होत्था ॥ १७७ ॥ अरहओणं अरिट्ठणेमिस्स णंदपामोक्खाणं समणोवासगाणं एगा सयसाहस्सी अउणत्तरिं च सहस्सा ( १६९००० )

णि हतः कुललज्जामुत्सृज्य धीरतामवधीर्य रथनेमिस्तां अगाद्—
" अयि सुंदरि ! किं देहः, शोष्यते ? तपसा त्वया । सर्वांगभोगसंयोग- योग्यः सौभाग्यसेवधिः ॥१॥
आगच्छ स्वेच्छया भद्रे !, कुर्वहे सफलं जनुः । आवामुभावपि प्रांते, चरिष्यावस्तपोविधिम् ॥ २ ॥

जिज्ञपत्, विष्णुरपि महर्द्ध्या भगवंतं वंदितुमाययौ, राजीमत्यपि तत्रागता, अथ प्रभोर्देशनां निशम्य वरदत्तनृपः सहस्रद्वयनृपयुतो व्रतमाददे, हरिणा च राजीमत्याः स्नेहकारणे पृष्टे प्रभुर्धनवतीभवादा-

**हरइ ॥ १७४ ॥ अरहओ णं अरिट्ठणेमिस्स अट्ठारस (१८) गणा अट्ठारस (१८) गणहरा होत्था ॥ १७५ ॥ अरहओ णं अरिट्ठणेमिस्स वरदत्तपामोक्खाओ अट्ठारस समणसाहस्सीओ (१८०००) उक्कोसिया सम-**

रभ्य तया सह स्वस्य नवभवसंबंधमाचष्टे[1]। ततः प्रभुरन्यत्र विहृत्य क्रमात्पुनरपि रैवतके समवासरत्, तदा च अनेकराजकन्यापरिवृता राजीमती रथनेमिश्च प्रभुपार्श्वे दीक्षां जगृहतुः, अन्यदा च राजी-

---

[ तथाहि—प्रथमे भवेऽहं धननामा राजपुत्रस्तदेयं धनवती नाम्नी मत्पत्नी अभूत् (१) ततो द्वितीये भवे प्रथमे देवलोके आवां देवदेव्यौ (२) ततस्तृतीये भवेऽहं चित्रगतिनामा विद्याधरस्तदेयं रत्नवती मत्पत्नी (३) ततश्चतुर्थे भवे चतुर्थे कल्पे द्वावपि देवौ (४) पंचमे भवेऽहं अपराजितराजा, एषा प्रियतमा राज्ञी (५) षष्ठे एकादशे कल्पे द्वावपि देवौ (६) सप्तमेऽहं शंखो नाम राजा, एषा तु यशोमती राज्ञी (७) अष्टमेऽपराजिते द्वावपि देवौ (८) नवमेऽहं, एषा राजीमती (९) ]

जे से वासाणं इत्यादितः पवइए इति पर्यंतं सुगमम् ॥१७३॥ अरहा इत्यादित. जाणमाणे पासमाणे

य एगेणं पुरिससहस्सेणं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पवइए ॥ १७३ ॥ अरहा अरिट्ठणेमी चउपण्णं राइंदियाइं णिच्चं वोसट्ठकाए चियत्तदेहे तं चेव सवं जाव पणपण्णगस्स राइंदियस्स अंतरा वट्टमाणस्स जे से वासाणं तच्चे मासे, पंचमे पक्खे, आसोयवहुले, तस्स णं आसोयवहुलस्स पण्णरसी पक्खे णं, दिवसस्स पच्छिमे भागे उज्जिंतसेलसिहरे वेडसपायवस्स अहे अट्ठमेणं भत्तेणं अपाणएणं चित्ताहिं णक्खत्ते णं जोगमुवागए णं ज्झाणंतरियाए वट्टमाणस्स अणंते जाव जाणमाणे पासमाणे वि-

विरहइ इति पर्यंतं, तत्र केवलज्ञानं रैवतकस्थे सहस्राम्रवणे समुत्पेदे, तत उद्यानपालको विष्णोर्व्य-

सर्वेऽपि संतुष्टाः, दानविधिस्तु श्रीवीरवत् इति ज्ञेयम् यावत् धनं गोत्रिणां विभज्य दत्वा ॥ १७२ ॥

वसित्ता णं पुणरवि लोयंतिएहिं जियकप्पिएहिं देवेहिं तं चेव सव्वं भाणियव्वं, जाव दाणं दाइयाणं परिभाइत्ता ॥१७२॥ जे से वासाणं पढमे मासे दुच्चे पक्खे, सावण सुद्धे, तस्स णं सावणसुद्धस्स छट्ठी पक्खे णं पुव्वण्हकालसमयंसि उत्तरकुराए सीयाए सदेवमणुआसुराए परिसाए अणुगम्ममाणमग्गे जाव बारवईए णयरीए मज्झंमज्झेणं णिग्गच्छइ, णिग्गच्छित्ता जेणेव रेवयए उज्जाणे तेणेव उवागच्छइ, उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावइत्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ, ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं चित्ताहिं णक्खत्ते णं जोगमुवागए णं एगं देवदूसमादा-

अथ नेमिनं सपरिकरः समुद्रविजयो जगौ, यथा—"नाभेयाद्याः कृतोद्वाहा, मुक्तिं जग्मुर्जिनेश्वराः। ततोऽप्युच्चैःपदं ते स्यात् ?, कुमार! ब्रह्मचारिणः॥१२॥" नेमिराह, हेतात! क्षीणभोगकर्माहमस्मि, किंच—"एकस्त्रीसंग्रहेऽनंत—जंतुसंघातघातके। भवतां भवतातेऽस्मिन्, विवाहे कोयमाग्रहः ? ॥ १३ ॥" अत्र कविः—"मन्येऽङ्गनाविरक्तः, परिणयनमिषेण नेमिरागत्य। राजीमतीं पूर्वभव—प्रेम्णा समकेतयन्मुक्त्यै ॥ १४ ॥"

## अरहा अरिट्ठणेमी दक्खे जाव तिण्णि वाससयाइं कुमारे अगारवासमज्झे

अरहा इत्यादि—अर्हन् अरिष्टनेमिः दक्षो यावत्—त्रीणि वर्षशतानि कुमारः सन् गृहस्थावस्थामध्ये उषित्वा पुनरपि लोकांतिका—इत्यादि सर्वं तदेव पूर्वोक्तं भणितव्यं, लोकांतिका देवाः यथा—"जय निर्जितकंदर्प!, जंतुजाताभयप्रद!। नित्योत्सवावतारार्थं, नाथ! तीर्थं प्रवर्तय ॥ १४ ॥" इति स्वामिनं प्रोच्य, स्वामी वार्षिकदानानंतरं त्रिभुवनमानंदयिष्यतीति समुद्रविजयादीन् प्रोत्साहयंतिस्म, ततः

लब्धसंज्ञा सबाष्पं गाढस्वरेण प्राह–"हाजायवकुलदिणयर !, हाणिरुवमणाण ! हाजगस्सरण !। हाकरुणायर सामी !, मं मुत्तूणं कहं चलिओ ? ॥४॥ हाहिययधिट्ठणिट्ठुर !, अज्जवि णिल्लज्ज ! जीवियं वहसि ?। अण्णत्थ वच्छराओ, जइ णाहो अत्तणो जाओ ! ॥५॥" पुनर्निश्वस्य सोपालंभं जगाद–"जइ सयलसिद्धभुत्ताइ, मुत्तिगणियाइ धुत्त ! रत्तोसि। ता एवं परिणयणा–रंभेण विडंबिया किमहं ?॥६॥" सख्यौ सरोषं–"लोअपसिद्धी वत्तडी, सहिए ! इक्क सुणिज्ज। सरलं विरलं सामलं, चुक्किय विही करिज्ज ! ॥ ७ ॥ पिम्मरहियंमि पियसहि !, एयंमि वि किं करेसि ? पियभावं। पिम्मपरं किंपि वरं, अण्णयरं ते करिस्सामो ॥ ८ ॥" राजीमती कर्णौ पिधाय ही ! अश्राव्यं किं श्रावयथः ? "जइ कहवि पच्छिमाए, उदयं पावेइ दिणयरो तहवि। मुत्तूण णेमिणाहं, करेमि णाहं वरं अण्णं ॥९॥" पुनरपि नेमिनं प्रति "व्रतेच्छुरिच्छाधिकमेवदत्से, त्वं याचकेभ्यो गृहमागतेभ्यः ॥ मयार्थयंत्या जगतामधीश !, हस्तोऽपि हस्तोपरि नैव लब्धः! ॥ १० ॥" अथ विरक्ता राजीमती प्राह। "जइविहु एअस्स करो, मज्झकरे णो अ आसि परिणयणे। तहवि सिरे मह सुच्चिय, दिक्खासमये करो होही ॥ ११ ॥"

सामी अकारणे बंधू । ता विण्णवेसु वल्लह !, रक्खत्थं सव्वजीवाणं ॥ २ ॥" हरिणोऽपि पत्नीप्रेरितो नेमिं ब्रूते, "णिज्झरणणीरपाणं, अरण्णतणभक्खणं च वणवासो । अम्हाण णिरवराहाण, जीवियं रक्ख रक्ख पहो ! ॥ ३ ॥" एवं सर्वेऽपि पशवः स्वामिनं विज्ञपयंति, तावत्स्वामी बभाषे, भो.पशुरक्षकाः ! मुंचत मुंचत इमान् पशून्, नाऽहं विवाहं करिष्ये । पशुरक्षकाः श्रीनेमिवचसा पशून्मुंचंतिस्म, सारथिरपि रथं निवर्त्तयतिस्म, अत्र कविः—"हेतुरिंदोः कलंके यो, विरहे रामसीतयोः । नेमे राजीमतीत्यागे, कुरंगः सत्यमेव सः ॥ १ ॥" समुद्रविजयशिवादेवीप्रमुखजनास्तु शीघ्रमेव रथं स्खलयंतिस्म, शिवा च सबाष्पं ब्रूते, "पत्थेमि जणणीवच्छल !, वच्छ ! तुमं पढमपत्थणं किंपि । काऊण पाणिगहणं, मह दंसे णिअवहूवयणं ॥ १ ॥ नेमिराह, "मुंचाग्रहमिमं मात—र्मानुषीषु न मे मनः । मुक्तिस्त्रीसंगमोत्कंठ—मकुंठमवतिष्ठते ॥ २ ॥" यतः—"या रागिणि विरागिण्य—स्ताः स्त्रियः को निषेवते । अतोऽहं कामये मुक्तिं, या विरागिणि रागिणी ॥ ३ ॥" इत्यादि ।

राजीमती, हादैव ! किमुपस्थितमित्युक्त्वा मूर्च्छां प्राप्ता सखीभ्यां चंदनद्रवैराश्वासिता कथमपि

सिणा एए अणग्घफला ॥ १ ॥" इति कृष्णत्वे गुणाः, " कप्पूरे अंगारो १, कणीणिगा २ कज्जलं च णयणंम्मि ३। भुज्जे मरी य ४ चित्ते, रेहा ५ कासिणावि गुणहेऊ ॥ २ ॥" इतिकृष्णवस्त्वाश्रयणे गुणाः, " खारं लवणं १ दहणं, हिमं च २ अइगोरविग्गहो रोगी ३। परवसगुणो अ चुण्णो, केवलगोरत्तणे अगुणा ४ ॥ ३ ॥" एवं परस्परं तासां जल्पे जायमाने श्रीनेमिः पशूनामार्त्तस्वरं श्रुत्वा साक्षेपं हेसारथे! कोऽयं दारुणः स्वरः? सारथिः प्राह, युष्माकं विवाहे भोजनकृते समुदायीकृतपशूनामयं स्वरः! इत्युक्ते स्वामी चिंतयतिस्म, धिग्विवाहोत्सवं! यत्रानुत्सवोऽमीषां जीवानाम्!!

इतश्च, हल्ली सहीओ! किं मे दाहिणं चक्खु परिप्फुरइ? इति वदंतीं राजीमतीं प्रति सख्यौ प्रतिहतममंगलं! इत्युक्त्वा थुथुक्कारं कुरुतः!! नेमिस्तु हेसारथे! रथमितो निवर्तय, अत्रांतरे नेमिं पश्यन्नेको हरिणः स्वग्रीवया हरिणीग्रीवां पिधाय स्थितः, अत्र कविघटना–"स्वामिनं निरीक्ष्य हरिणो ब्रूते, " मापहरसु मापहरसु, एयं मह हिययहारिणिं हरिणिं। सामी! अम्हं मरणावि, दुस्सहो पियतमाविरहो! ॥ १ ॥" हरिणी नेमिमुखं निभाल्य हरिणं प्रति ब्रूते। " एसो पसण्णवयणो, तिहुअण-

तस्य विधातुः करयो-रात्मानं न्युंछनं करोमि मुदा। येनैष वरो विहितः, सौभाग्यप्रभृतिगुणराशिः ॥ ॥२॥"

मृगलोचना राजीमत्यभिप्रायं परिज्ञाय सप्रीतिहासं हेसखि चंद्रानने! समग्रगुणसंपूर्णेऽपि अस्मिन्वरे एकं दूषणं अस्त्येव, परं वरार्थिन्यां राजीमत्यां शृण्वत्यां वक्तुं न शक्यते। चंद्राननाऽपि हेसखिमृगलोचने! मयाऽपि तद् ज्ञातं, परं सांप्रतं मौनमेवाचरणीयं, राजीमत्यपि त्रपया मध्यस्थतां दर्शयंती हेसख्यौ! यस्याः कस्या अपि भुवनाद्भुतभाग्यधन्यायाः कन्याया अयं वरो भवतु! परं सर्वगुणसुंदरेऽस्मिन् वरे दूषणं दुग्धमध्यात्पूतरकर्षणप्रायं! असंभाव्यमेव, तदनु ताभ्यां सविनोदं कथितं, भोराजीमति! वरः प्रथमं गौरो विलोक्यते, अपरे गुणास्तु परिचये सति ज्ञायंते, तद् गौरत्वं तु कज्जलानुकारमेव दृश्यते!! राजीमती सेर्ष्यं सख्यौ प्रत्याह, अद्य यावत् युवां चतुरे इति मम भ्रमोऽभवत्! सांप्रतं तु स भग्नः, यत् सकलगुणकारणं श्यामत्वं भूषणमपि दूषणतया प्ररूपितं, शृणुतं तावत्सावधानीभूय भवत्यौ श्यामत्वे श्यामवस्त्वाश्रयणे च गुणान्, केवलगौरत्वे दोषांश्च, तथाहि—

" भू १ चित्तवल्लि २ अगुरु ३, कच्छूरी ४ घण ५ कणीणिगा ६ केसा ७। कसवट्ट ८ मसी ९ रयणी १०, क-

देवीप्रमुखप्रमदाजेगीयमानधवलमंगलविस्तारः पाणिग्रहणाय, अग्रतो गच्छंश्च वीक्ष्य सारथिं प्रति कस्येदं कृतमंगलभरं धवलमंदिरं इति पृष्टवान्, ततः सोऽङ्गुल्यग्रेण दर्शयन् इति जगाद, उग्रसेननृपस्य तवश्वशुरस्यायं प्रासादः, इमे च तव भार्याया राजीमत्याः सख्यौ चंद्राननामृगलोचनाभिधाने मिथो वार्त्तयतः, तत्र मृगलोचना नेमिं विलोक्य चंद्राननां प्राह, हेचंद्रानने! स्त्रीवर्गे एका राजीमत्येव वर्णनीया, यस्या अयमेतादृशो वरः पाणिं ग्रहीष्यति! चंद्राननाऽपि मृगलोचनामाह—

राजीमतीमद्भुतरूपरम्यां, निर्माय धाताऽपि यदीदृशेन ।
वरेण नो योजयति प्रतिष्ठां, लभेत विज्ञानविचक्षणः काम्? ॥ १ ॥

इतश्च तूर्यशब्दमाकर्ण्य मातृगृहात् राजीमती सखीमध्ये प्राप्ता, हेसख्यौ! भवतीभ्यामेकाकिनी-भ्यामेव साडंबरमागच्छन् कोऽपि वरो विलोक्यते, अहमपि विलोकयितुं न लभेयं? इति बलात्तदंतरे स्थित्वा नेमिं आलोक्य साश्चर्यं चिंतयतिस्म—

किं पातालकुमारः, किं वा मकरध्वजः सुरेंद्रः किम्?। किं वा मम पुण्यानां, प्राग्भारो मूर्तिमानेषः! ॥१॥

विश्रंभपात्रं विधुरे सहायः, कोऽन्यो भवेन्नूनमृते प्रियायाः ॥ ८ ॥

सुसीमाप्यवादीत्– विना प्रियां को गृहमागतानां, प्राघूर्णकानां मुनिसत्तमानाम् ॥
करोति पूजाप्रतिपत्तिमन्यः, कथं च शोभां लभते मनुष्यः ? ॥ ९ ॥

एवमन्यासां अपि गोपांगनानां वाचोयुक्त्या यदूनामाग्रहाच्च मौनावलंबिनमपि स्मिताननं जिनं निरीक्ष्य 'अनिषिद्धं अनुमतमिति' न्यायान्नेमिना पाणिग्रहणं स्वीकृतमिति ताभिर्गाढं उद्घोषितं, ततः कृष्णेनोग्रसेनपुत्री राजीमती मार्गिता, लग्नं पृष्टश्च क्रोष्टुकिनामा ज्योतिर्विदाह–, "वर्षासु शुभकार्याणि, नान्यान्यपि समाचरेत् । गृहिणां मुख्यकार्यस्य, विवाहस्य तु का कथा ? ॥ १ ॥ समुद्रस्तं घभापेऽथ, कालक्षेपोऽत्र नार्हति । नेमिः कथंचित्कृष्णेन, विवाहाय प्रवर्तितः ॥ २ ॥ माऽभूद्विवाहप्रत्यूहो, नेदीयस्तद्दिनं वद । श्रावणे मासि तेनोक्ता, तत॰ षष्ठी समुज्वला ॥ ३ ॥ ततो द्वयोर्विहिता विवाहोचिता सामग्री, आसन्ने च क्रोष्टुक्यादिष्टे लग्ने चलितश्च श्रीनेमिकुमारः स्फारशृंगारः, प्रजाप्रमोदकरो रथारूढो धृतातपत्रसारः, श्रीसमुद्रविजयादिदशार्हकेशवबलभद्रादिविशिष्टपरिवारः, शिवा-

त्वमसि किंतु नवोऽद्य शिवंगमी, भृशमरिष्टकुमार ! विचारय ॥
कलय देवर ! चारुगृहस्थतां, रचय बंधुमनस्सु च सुस्थताम् ॥ ३ ॥
÷ अथ जगाद च जांबवती जवात्, शृणु पुरा हरिवंशविभूषणम् ॥
स मुनिसुव्रततीर्थपतिर्गृही, शिवमगादिह जातसुतोऽपि हि ॥ ४ ॥
÷ पद्मावतीति समुवाच विना वधूटीं, शोभा न काचन नरस्य भवत्यवश्यम् ॥
नो केवलस्य पुरुषस्य करोति कोऽपि, विश्वासमेष विट एव भवेदभार्यः ॥ ५ ॥
गांधारी जगौ– सजन्ययात्रा शुभसंगसार्थः, पर्वोत्सवा वेश्म विवाहकृत्यम् ॥
उद्यानिका पूःक्षणपर्षदश्च, शोभंत एतानि विनांगनां नो ॥ ६ ॥
गौरी उवाच– अज्ञानभाजः किल पक्षिणोऽपि, क्षितौ परिभ्रम्य वसंति सायम् ॥
नीडे स्वकांतासहिताः सुखेन, ततोऽपि किं ? देवर ! मूढदृक् त्वम् ॥ ७ ॥
लक्ष्मणाऽप्यवोचत्– स्नानादिसर्वांगपरिष्क्रियायां, विचक्षणः प्रीतिरसाभिरामः ॥

आवर्तंत मिथो हसंति सततं क्रीडोल्लसन्मानसा—स्तावद्व्योमनि देवगीरिति समुद्भूता श्रुता चाऽखिलैः॥१॥
मुग्धाः स्थ प्रमदा यतोऽमरगिरौ गीर्वाणनाथैश्चतुः—षष्ठ्या योजनमानवक्रकुहरैः कुंभैः सहस्राधिकैः।
बाल्येऽपि स्नपितो य एष भगवान्नाभून्मनागाकुलः, कर्तुं तस्य सुयत्नतोऽपि किमहो युष्माभिरीशिष्यते॥२॥"

ततो नेमिरपि हरिं ताश्च सर्वा जलैराच्छोटयतिस्म, कमलपुष्पकंदुकैश्च ताडयतिस्म, इत्यादि सविस्तारं जलक्रीडां कृत्वा तटमागत्य नेमिं स्वर्णासने निवेश्य सर्वा अपि गोप्यः परिवेष्ट्य स्थितास्तत्र रुक्मिणी जगौ—

निर्वाहकातरतयोद्वहसे न यत्त्वं, कन्यां तदेतदविचारितमेव नेमे ! ॥
भ्राता तवाऽस्ति विदितः सुतरां समर्थो, द्वात्रिंशदुन्मितसहस्रवधूर्विवोढा ॥१॥

तथा सत्यभामाप्युवाच—ऋषभमुख्यजिनाः करपीडनं, विदधिरे दधिरे च महीशताम् ॥
बुभुजिरे विषयांश्च बहून्सुतान्, सुषुविरे शिवमप्यथ लेभिरे ॥ २ ॥

व्यतीति श्रुत्वा निश्चितोऽपि निश्चयार्थं नेमिना सह जलक्रीडां कर्तुं अंतःपुरीपरिवृतः सरोऽन्तरे प्रविष्टः, तत्र च—

प्रणयतः परिगृह्य करे जिनं, हरिरवेशयदाशु सरोऽन्तरे ॥
तदनु शीघ्रमसिंचत नेमिनं, कनकश्रृंगजलैर्घुसृणाविलैः ॥ १ ॥

तथा रुक्मिणीप्रमुखगोपिका अपि ज्ञापितवान्, यदयं नेमिर्निश्शंकं क्रीडया पाणिग्रहाभिमुखी कार्यः ! ततश्च ता अपि—

"काश्चित्केसरसारनीरनिकरैराच्छोटयंति प्रभुं, काश्चिद्बंधुरपुष्पकंदुकभरैर्निघ्नंति वक्षःस्थले ॥
काश्चित्तीक्ष्णकटाक्षलक्षविशिखैर्विध्यंति नर्मोक्तिभिः, काश्चित्कामकलाविलासकुशला विस्मापयांचक्रिरे ॥ १ ॥" ततश्च—

"तावत्यः प्रमदाः सुगंधिपयसा स्वर्णादिश्रृंगीर्भृशं, भृत्वा तज्जलनिर्झरैः पृथुतरैः कर्तुं प्रभुं व्याकुलम् ।

बलपरीक्षणकृन्द्भुजवालनं, भवतु नान्यरणः खलु युज्यते ॥१॥ "

द्वाभ्यां तथैव स्वीकृतं,

"कृष्णप्रसारितं बाहुं, नेमिर्वेत्रलतामिव । मृणालदंडमिव वा, वालयामास लीलया ॥ १ ॥"

शाखानिभे नेमिजिनस्य बाहौ, ततः स शाखामृगवद्विलग्नः ।
चक्रे निजं नाम हरिर्यथार्थ–मुद्यद्विषादद्विगुणासितास्यः ॥ २ ॥

ततो महताऽपि पराक्रमेण नेमिभुजेऽवलिते सति विषण्णचित्तः कृष्णो मम राज्यमेष सुखेन ग्रहीष्यतीति चिंतातुरः स्वचित्ते चिंतयामास—

"क्लिश्यंते केवलं स्थूलाः, सुधीस्तु फलमश्नुते । ममंथ शंकरः सिंधुं, रत्नान्यापुर्दिवौकसः ॥ १ ॥"

अथवा–"क्लिश्यंते केवलं स्थूलाः, सुधीस्तु फलमश्नुते। दंता दलंति कष्टेन, जिह्वा गिलति लीलया॥२॥"

ततो बलभद्रेण सहाऽऽलोचयति, किं विधास्ये ? नेमिस्तु राज्यलिप्सुर्बलवांश्च, तत आकाशवाणी प्रादुरभूदहो हरे ! पुरा नमिनाथेन कथितमासीद्यदुत द्वाविंशस्तीर्थंकरो नेमिनामा कुमार एव प्रव्रजि-

रहितोऽपि भगवान् मित्रप्रेरितः क्रीडमानः कृष्णायुधशालायामुपागमत्, तत्र कौतुकोत्सुकैर्मित्रैर्विज्ञप्तोऽङ्गुल्यग्रे कुलालचक्रवच्चक्रं भ्रामितवान्, शार्ङ्गं धनुर्मृणालवन्नामितवान्, कौमोदकीं गदां यष्टिवदुत्पाटितवान्, पांचजन्यं शंखं च स्वमुखे धृत्वा आपूरितवान्, तदा च—

"निर्मूल्यालानमूलं व्रजति गजगणः खंडयन् वेश्ममालां,
धावंत्युत्त्रोट्य बंधान् सपदि हरिहया मंदुरायाः प्रणष्टाः ॥
शब्दाद्वैतेन सर्वं बधिरितमभवत्तत्पुरं व्यग्रमुग्रं,
श्रीनेमेर्वक्त्रपद्मप्रकटितपवनैः पूरिते पांचजन्ये ॥ १ ॥"

तं तादृशं च शब्दं निशम्योत्पन्नः कोऽपि वैरीति व्याकुलचित्तः केशवस्त्वरितं आयुधशालायां आगतः, दृष्ट्वा च नेमिं चकितो निजभुजबलतुलनाय आवाभ्यां बलपरीक्षा क्रियते, इति नेमिं वदंस्तेन सह मल्लाक्षाटके जगाम, श्रीनेमिराह—

अनुचितं ननु भूलुठनादिकं, सपदि बांधव ! युद्धमिहावयोः ।

समुद्रविजयाभिलापेन समुद्रविजयनाम्ना ज्ञातव्यं जाव तं होऊणं कुमारे अरिट्ठणेमीणामेणं इतियावत् तस्मात् भवतु कुमारः अरिष्टनेमिर्नाम्ना कृत्वा । यस्मात् भगवति गर्भस्थे माता रिष्टरत्नमयं नेमिं चक्रधारां स्वप्नेऽद्राक्षीत्, ततोरिष्टनेमिः, अकारस्य असंगलपरिहारार्थत्वाच्च अरिष्टनेमिरिति, रिष्टशब्दो

अरिट्ठणेमी जे से वासाणं पढमे मासे, दुच्चे पक्खे, सावणसुद्धे, तस्सणं सावणसुद्धस्स पंचमी पक्खे णं, णवण्हं मासाणं बहुपडिपुण्णाणं जाव चित्ताहिं णक्खत्ते णं जोगमुवागए णं आरोग्गा आरोग्गं दारयं पयाया, जम्मणं समुद्दविजयाभिलावेणं णेअव्वं, जाव तं होऊ णं कुमारे अरिट्ठणेमी णामेणं

हि असंगलवाचीति, कुमारेत्ति कुमारस्तु अपरिणीतत्वात्, अपरिणयनं तु एवम्—

एकदा यौवनाभिमुखं नेमिं निरीक्ष्य शिवादेवी समवदत्, वत्सानुमन्यस्व पाणिग्रहणं, पूरय चाऽस्मन्मनोरथं, स्वामी तु योग्यां कन्यां प्राप्य परिणेष्यामीति प्रत्युत्तरं ददौ, ततः पुनरेकदा कौतुक-

तेणंकालेणं इत्यादितः दविणसंहरणाइअंइत्थभाणियव्वं इतिपर्यंतं, तत्र दविणसंहरणाइत्ति पितुर्वेश्मनि

व्वुए ॥ १७० ॥ तेणं कालेणं तेणं समएणं अरहा अरिट्ठणेमी जे से वासाणं चउत्थे मासे, सत्तमे पक्खे, कत्तियबहुले, तस्स णं कत्तियबहुलस्स बारसी पक्खे णं, अपराजियाओ महाविमाणाओ बत्तीसं सागरोवमठिइयाओ अणंतरं चयं चइत्ता, इहेव जंबुदीवे दीवे भारहे वासे सोरियपुरे णयरे, समुद्दविजयस्स रण्णो, भारियाए सिवाए देवीए, पुव्वरत्तावरत्तकालसमयंसि जाव चित्ताहिं गब्भत्ताए वक्कंते, सव्वं तहेव सुविणदंसणदविणसंहरणाइअं इत्थ भाणियव्वं ॥ १७१ ॥ तेणं कालेणं तेणं समएणं अरहा

निक्षेपादि ॥ १७१ ॥ तेणंकालेणं इत्यादितः परिभाइत्ता इतिपर्यंतं, तत्र जम्मणांति जन्मप्रभृति सर्वं

पंचाशदधिकवर्षशतद्वयेन (२५०) श्रीवीरनिर्वाणं, ततश्चाऽशीत्यधिकनववर्षशतानि (९८०) अतिक्रांतानि, तदा वाचना, ततो युक्तमुक्तं, त्रयोदशमशतसंवत्सरस्याऽयं त्रिंशत्तम• संवत्सरः कालो गच्छतीति ॥ इति श्रीपार्श्वचरित्रं समाप्तम् ॥ १६९ ॥

सव्वदुक्खप्पहिणस्स दुवालस वाससयाइं विइक्कंताइं,तेरसमस्स वाससयस्स अयं तीसइमे संवच्छरे काले गच्छइ ॥ १६९ ॥

तेणं कालेणं तेणं समएणं अरहा अरिट्ठणेमी पंच चित्ते हुत्था, तंजहा–चित्ताहिं चुए चइत्ता गब्भं वक्कंते, तहेव उक्खेवो, जाव चित्ताहिं परिणि•

॥ अथ श्रीनेमिनाथस्य जघन्यादिवाचनाभिश्चरित्रमाह ॥ तेणंकालेणं इत्यादितः चित्ताहिंपरिणिव्वुए इतिपर्यंतं, तत्र तहेवउक्खेवो तथैव उत्क्षेपस्तथैव चित्राभिलापेन पूर्वोक्तपाठो वक्तव्य इत्यर्थः ॥१७०॥

सुषमनामके चतुर्थेऽरके बहु व्यतिक्रान्ते सति योऽसौ वर्षाकालस्य प्रथमो मासः, द्वितीयः पक्षः, श्रावणशुद्धः, तस्य श्रावणशुद्धस्याष्टमी दिवसे उपरि 'सम्मेत' नामशैलशिखरस्य आत्मना चतुस्त्रिंशत्तमः मासिकेन भक्तेन अपानकेन विशाखानक्षत्रे चंद्रयोगमुपागते सति पुव्वण्हकालसमयंसि पूर्वाह्णकालसमये, तत्र प्रभोर्मोक्षगमने पूर्वाह्ण एव कालः "पुव्वरत्तावरत्तकालसमयंसित्ति" क्वचित्पाठस्तु

गमुवागए णं पुव्वण्हकालसमयंसि वग्घारियपाणी कालगए विइक्कंते जाव सव्वदुक्खप्पहीणे ॥ १६८ ॥ पासस्सणं अरहओ पुरिसादाणीयस्स जाव

लेखकदोषान्मतांतरभेदाद्वा वग्घारिअपाणी प्रलंबितौ पाणी हस्तौ येन स तथा, कायोत्सर्गे स्थितत्वात् प्रलंबितभुजद्वयः भगवान् कालगतः, यावत् सर्वदुःखप्रक्षीणः ॥ १६८ ॥ पासस्स इत्यादितः काले गच्छइ इतियावत् पार्श्वस्यार्हतः पुरुषादानीयस्य यावत् सर्वदुःखप्रक्षीणस्य द्वादश वर्षशतानि व्यतिक्रान्तानि त्रयोदशमस्य वर्षशतस्य अयं त्रिंशत्तमः संवत्सरः कालो गच्छति, तत्र श्रीपार्श्वनिर्वाणात्

इत्यादितः सवदुक्खप्पहीणे इतियावत्, तस्मिन् काले तस्मिन् समये पार्श्वः अर्हन् पुरुषादानीयः त्रिंशत् वर्षाणि गृहस्थावस्थायां उषित्वा स्थित्वा त्र्यशीतिं अहो रात्रान् छद्मस्थपर्यायं पालयित्वा किंचिदूनानि

पडिपुण्णाइं सत्तरि वासाइं सामण्णपरिआयं पाउणित्ता, एकं वाससयं सव्वाउअं पालइत्ता, खीणे वेयणिज्जाउयणामगोत्ते, इमीसे ओसप्पिणीए दूसमसुसमाए बहुविइक्कंताए जे से वासाणं पढमे मासे, दुच्चे पक्खे, सावणसुद्धे, तस्स णं सावणसुद्धस्स अट्ठमी पक्खे णं, उप्पिं संमेयसेलसिहरंसि अप्पचउत्तीसइमे मासिएणं भत्तेणं अपाणएणं विसाहाहिं णक्खत्ते णं जो-

सप्ततिः (७०) वर्षाणि केवलिपर्यायं पालयित्वा प्रतिपूर्णानि सप्ततिः वर्षाणि चारित्रपर्यायं पालयित्वा एकं वर्षशतं सर्वायुः पालयित्वा क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु कर्मसु अस्यामेवावसर्प्पिण्यां दुषम-

॥ १६१ ॥ १६२ ॥ १६३ ॥ १६४ ॥ १६५ ॥ १६६ ॥ इदं सूत्रषट्कं व्याख्यातप्रायम् ॥ पासस्सणं इत्यादितः अंतमकासी इतिपर्यंतं, तत्र युगांतकृद्भूमिः श्रीपार्श्वनाथादारभ्य चतुर्थं पुरुषं यावत्सिद्धिमार्गो

(१२००) अणुत्तरोववाइयाणं ॥ १६६ ॥ पासस्स णं अरहओ पुरिसादाणीयस्स दुविहा अंतगडभूमी हुत्था, तंजहा—जुगंतगडभूमी य, परिआयंतगडभूमी अ, जाव चउत्थाओ पुरिसजुगाओ जुगंतगडभूमी, तिवासपरियाए अंतमकासी ॥ १६७॥ तेणं कालेणं तेणंसमएणं पासे अरहा पुरिसादाणीए तीसं वासाइं अगारवासमज्झे वसित्ता, तेसीइं राइंदियाइं छउमत्थपरियागं पाउणित्ता, देसूणाइं सत्तरि वासाइं केवलिपरिआयं पाउणित्ता,

वहमानः स्थितः, पर्यायांतकृद्भूमौ तु केवलोत्पत्तेस्त्रिषु वर्षेषु गतेषु सिद्धिगमनारंभः ॥१६७॥ तेणंकालेणं

पासस्स णं अरहओ पुरिसादाणीयस्स सुणंदापामोक्खाणं समणोवासियाणं तिण्णि सयसाहस्सीओ सत्तावीसं च सहस्सा (३२७०००) उक्कोसिया समणोवासियासंपया हुत्था ॥१६४॥ पासस्स णं अरहओ पुरिसादाणीयस्स अद्धुट्ठसया (३५०) चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खर-जाव चउद्दसपुव्वीण संपया हुत्था ॥१६५॥ पासस्सणं अरहओ पुरिसादाणीयस्स चउद्दस सया (१४००) ओहिणाणीणं, दस सया (१०००) केवलणाणीणं, एक्कारस सया (११००) वेउव्वीणं, छस्सया(६००) रिउमईणं, दस समणसया (१०००) सिद्धा, वीसं अज्जियासया (२०००) सिद्धा, अद्धट्ठसया (७५०) विउलमईणं, छस्सया (६००) वाईणं, वारस सया

समूहा गणास्तन्नायकाः सूरयो गणधरास्ते श्रीपार्श्वस्य अष्टौ, आवश्यके तु दश गणा गणधराश्चोक्ताः,

चेव, वीरभद्दे ७ जसेविय ८ ॥ १ ॥" ॥१६०॥ पासस्स णं अरहओ पुरिसादाणीयस्स अज्जदिण्णपामुक्खाओ सोलस समणसाहस्सीओ (१६०००) उक्कोसिया समणसंपया हुत्था ॥ १६१ ॥ पासस्स णं अरहओ पुरिसादाणीयस्स पुप्फचूलापामोक्खाओ अट्ठतीसं अज्जियासाहस्सीओ(३८०००) उक्कोसिया अज्जियासंपया हुत्था ॥ १६२ ॥ पासस्स णं अरहओ पुरिसादाणीयस्स सुव्वयपामोक्खाणं समणोवासगाणं एगा सयसाहस्सी चउसट्ठिं च सहस्सा (१६४०००) उक्कोसिया समणोवासगसंपया हुत्था ॥ १६३ ॥

तस्मादिह स्थानांगे च द्वौ अल्पायुष्कत्वादिकारणान्नोक्तौ, इति टिप्पनके व्याख्यातम् ॥ १६०॥ तथा

विधाय स्वस्थानं ययौ, एवं देवादिकृतानुपसर्गान्सम्यक् सहते ॥ १५८ ॥ अग्रेतनं सूत्रं सुगमम् ।

चउरासीइमस्स राइंदियस्स अंतरा वट्टमाणस्स जे से गिम्हाणं पढमे मासे पढमे पक्खे, चित्तबहुले, तस्स णं चित्तबहुलस्स चउत्थी पक्खे णं, पुव्वण्ह-कालसमयंसि धायइपायवस्स अहे छट्ठेणं भत्तेणं अपाणएणं विसाहाहिं नक्खत्तेणं जोगमुवागएणं झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे जाव केवलवरणाणदंसणे समुप्पण्णे, जाव जाणमाणे पासमाणे विहरइ ॥१५९॥

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठगणा अट्ठ गणहरा हुत्था, तंजहा- "सुभेय १ अज्जघोसे य २, वसिट्ठे ३ बंभयारि य ४ । सोमे ५ सिरिहरे ६

॥ १५९ ॥ पासस्सणं इत्यादितः जसेविय इतिपर्यंतं, तत्र अट्ठगणा अट्ठ गणहरा एकवाचनिका यति-

पुरिसादाणीए णिच्चं वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तंजहा–दिव्वा वा, माणुसा वा, तिरिक्खजोणिया वा, ते उप्पण्णे सम्मं सहइ खमइ तितिक्खइ अहियासेइ ॥ १५८ ॥ तएणं से पासे भगवं अणगारे जाए इरियासमिए जाव अप्पाणं भावेमाणस्स तेसीइ राइंदियाइं विइक्कंताइं

स्वामी प्रव्रज्यैकदा विहरन् तापसाश्रमे कूपसमीपे न्यग्रोधाधो निशि प्रतिमया स्थितः, इतः स मेघमाली सुराधमः श्रीपार्श्वमुपद्रोतुं आगत्य क्रोधांधः स्वविकुर्वितशार्दूलवृश्चिकादिभिरभीतं प्रभुं निरीक्ष्य गगनेंधकारसन्निभान्मेघान्विकृत्य कल्पांतमेघवद्वर्षितुं आरेभे, विद्युतश्च अतिरौद्राकारा दिशि दिशि प्रसृता, गर्जारवं च ब्रह्मांडस्फोटसदृशं अकरोत्, क्षणादेव प्रभुनासाग्रं यावज्जले प्राप्ते आसनकंपेन धरणेंद्रो महिषीभिः समं आगत्य फणैः प्रभुं आच्छादितवान्, अवधिना च विज्ञातोऽमर्षेण वर्षन् मेघमाली धरणेंद्रेण हक्कितश्च प्रभुं शरणीकृत्य स्वस्थानं ययौ, धरणेंद्रोऽपि नाट्यादिभिः प्रभुपूजां

पंचाशत्षट्पंचाशत्सप्तपंचाशत्सूत्राणि सुगमानि ॥ १५५ ॥ १५६ ॥ १५७ ॥ पासेणं इत्यादितः अहि-

सिवियाए सदेवमणुआसुराए परिसाए तं चेव सव्वं,णवरं वाणारसिं णगरिं मज्झं मज्झेणं णिग्गच्छइ,णिगच्छित्ता जेणेव आसमपए उज्जाणे,जेणेव असोगवरपा-यवे तेणेव उवागच्छइ,उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठा-वित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता अट्ठमेणं भत्तेणं अपाणएणं विसाहाहिं णक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय तिहिं पुरिससएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ १५७ ॥ पासे णं अरहा

यासेइ इतिपर्यंतं, तत्र देवोपसर्गः कमठसंबंधी, स चैवम्—

डात् ज्वलत्काष्ठं आकृष्य कुठारेण द्विधा कारयित्वा च तापव्याकुलः सर्पो निष्काशितः,स च भगवन्नियुक्तपुरुषमुखान्नमस्कारान्प्रत्याख्यानं च निशम्य तत्क्षणं विपद्य धरणेंद्रो जातः, अहो ! ज्ञानीति

पासे णं अरहा पुरिसादाणीए दक्खे दक्खपइण्णे पडिरूवे अल्लीणे भद्दए विणीए तीसं वासाइं अगारवासमज्झे वसित्ता, पुणरवि लोयंतिएहिं जियकप्पेहिं देवेहिं ताहिं इट्ठाहिं जाव एवं वयासी ॥१५५॥ जय जय णंदा जय जय भद्दा जाव जय जय सद्दं पउंजंति ॥१५६॥ पुव्विंपि णं पासस्स अरहओ पुरिसादाणीयस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आहोइए तं चेव सव्वं जाव दाणं दाइयाणं परिभाइत्ता, जे से हेमंताणं दुच्चे मासे तच्चे पक्खे, पोसबहुले तस्स णं पोसबहुलस्स इक्कारसी दिवसे णं पुव्वण्हकालसमयंसि, विसालाए

जनैः स्तूयमानः स्वामी स्वगृहं ययौ, कमठोऽपि तपस्तप्त्वा मेघकुमारेषु मेघमाली जातः ॥१५४॥ पंच-

सर्पं ददर्श, ततः पार्श्वेति नाम कृतं, क्रमेण यौवनं प्राप्तः, तच्चैवं—"धात्रीभिरिंद्रादिष्टाभि—र्लाल्यमानो जगत्पतिः। नवहस्तप्रमाणांगः, क्रमादाप च यौवनम्॥ १॥ ततः कुशस्थलेशप्रसेनजिन्नृपपुत्रीं प्रभावतीनाम्नीं कनीं आग्रह्य पित्रा परिणायितः, अन्येद्युर्गवाक्षस्थः स्वामी एकस्यां दिशि गच्छतः पुष्पादिपूजोपकरणसहितान्नागरान्नागरीश्च निरीक्ष्य एते क गच्छंतीति कंचित्पप्रच्छ, स आह, प्रभो! कश्चित्त्संनिवेशवास्तव्यो दरिद्रो मृतमातापितृको ब्राह्मणपुत्रः कृपया लोकैर्जीवितः कमठनामासीत्, स च एकदा रत्नाभरणभूषितान्नागरान्वीक्ष्य अहो! एतत्प्राग्जन्मतपसः फलमिति विचिंत्य पंचाग्न्यादिमहाकष्टानुष्ठायी तपस्वी जातः, सोऽयं पुर्यां बहिरागतोऽस्ति, तं पूजितुं लोका गच्छंतीति निशम्य प्रभुरपि सपरिवारस्तं द्रष्टुं ययौ, तत्र काष्ठांतर्दह्यमानं महासर्पं ज्ञानेन विज्ञाय करुणासमुद्रो भगवानाह, अहो! मूढतपस्विन्! किं दयां विना वृथा कष्टं करोषि? यतः—"कृपामहानदीतीरे, सर्वे धर्मास्तृणांकुराः। तस्यां शोषमुपेतायां, कियन्नंदंति ते चिरम्॥ १॥ इत्याकर्ण्य क्रुद्धः कमठोऽवोचत्, राजपुत्रा हि गजाश्वादिक्रीडां कर्तुं जानंति, धर्मं तु वयं तपोधना एव जानीमस्तत. स्वामिनाऽग्निकुं-

त्रिपंचाशत्तमसूत्रं यावत्सर्वाणि सुगमानि ॥ १५० ॥ १५१ ॥ १५२ ॥ १५३ ॥ सेसं तहेव इत्यादितः पासेणामेणं इतिपर्यंतं, शेषं जन्मोत्सवादि तथैव पूर्ववत्, परं पार्श्वाभिलापेन भणितव्यं, यावत्

स्स णं पोसबहुलस्स दसमीपक्खे णं णवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाण राइंदियाणं विइक्कंताणं पुव्वरत्तावरत्तकालसमयंसि विसाहाहिं णक्खत्तेणं जोगमुवागएणं आरोग्गा आरोग्गं दारयं पयाया ॥ १५२ ॥ जं रयणिं च णं पासे अरहा पुरिसादाणीए जाए तं रयणिं चणं बहूहिं देवेहिं देवीहिं य जाव उप्पिंजलगभूया कहकहगभूया आविहुत्था ॥ १५३ ॥ सेसं तहेव, णवरं पासाभिलावेणं भाणियव्वं, जाव तं होऊणं कुमारे पासे णामेणं ॥१५४॥

तस्मात् भवतु कुमारः पार्श्वः नाम्ना । तत्र प्रभौ गर्भस्थिते सति शयनीयस्था माता पार्श्वे सर्पंतं कृष्ण-

सादाणीए, जे से गिम्हाणं पढमे मासे पढमे पक्खे, चित्तबहुले तस्स णं चित्तबहुलस्स चउत्थीपक्खे णं पाणयाओ कप्पाओ वीसं सागरोवमट्ठिइयाओ अणंतरं चयं चइत्ता, इहेव जंबुद्दीवे दीवे, भारहे वासे, बाणारसीए णयरीए, आससेणस्स रण्णो वामाए देवीए, पुवरत्तावरत्तकालसमयंसि विसाहाहिं णक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए (ग्रंथाग्रं ७००) भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते ॥१५०॥ पासे णं अरहा पुरिसादाणीए तिण्णाणोवगए आविहुत्था, तंजहा—चइस्सामित्ति जाणइ, तेणं चेव अभिलावेणं सुविणदंसणविहाणेणं सबं जाव णियगं गिहं अणुपविट्ठा, जाव सुहंसुहेणं तं गब्भं परिवहइ ॥ १५१ ॥ तेणं कालेणं तेणं समएणं पासे अरहा पुरिसादाणीए जे से हेमंताणं दुच्चे मासे तच्चे पक्खे पोसबहुले त-

## ॥ अथ सप्तमः क्षणः ॥

अथ जघन्यमध्यमोत्कृष्टवाचनाभिः श्रीपार्श्वचरित्रमाह ॥ तेणंकालेणं इत्यादितः परि णिव्वुडे इति-पर्यंतं सुगमं, तत्र पासेणं अरहा पुरिसादाणीए पुरुषश्चाऽसौ आदानीयश्च आदेयवाक्यतया आदेय-

तेणं कालेणं तेणं समएणं पासेणं अरहा पुरिसादाणिए पंचविसाहे होत्था, तंजहा—विसाहाहिं चुए चइत्ता गब्भं वक्कंते, विसाहाहिं जाए, विसाहाहिं मुंडे भवित्ता अगाराओ अणगारिअं पव्वइए, विसाहाहिं अणंते अणुत्तरे णिव्वाघाए णिरावरणे कसिणे पडिपुण्णे केवलवरणाणदंसणे समुप्पण्णे, विसाहाहिं परिणिव्वुडे ॥१४९॥ तेणं कालेणं तेणं समएणं पासे अरहा पुरि-

नामतया च पुरुषादानीयः पुरुषप्रधान इत्यर्थः ॥ १४९ ॥ तेणंकालेणं इत्यादिपंचाशत्तमसूत्रादारभ्य

सूरिं श्रीविजयानन्द, विजयानन्दकारकम् । "आत्माराम" इति ख्यात, वन्दे सद्गुणलब्धये ॥ १ ॥

## ॥ इति षष्ठः क्षणः समाप्तः ॥

पद्मविजयस्तस्येष, शिष्यशिष्यस्य शिष्यक । नित्य स्मरति य भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां
कल्पसुबोधिकायां षष्ठः क्षणः समाप्तः ॥ ६ ॥

अन्ये पुनर्वदंति, अयं अशीतितमे संवत्सरे इति कोऽर्थः ? पुस्तके कल्पलिखनस्य हेतुभूतः अयं श्रीवीरात् दशमशतस्य अशीतितमसंवत्सरलक्षणः कालो गच्छति, 'वायणंतरे' इति कोऽर्थः ? एकस्याः पुस्तकलिखनरूपाया वाचनाया अन्यत्पर्षदि वाचनरूपं यद्वाचनांतरं तस्य पुनर्हेतुभूतो दशमशतस्य अयं त्रिनवतितमः संवत्सरः, तथा चाऽयमर्थः, नवशताशीतितमवर्षे कल्पस्य पुस्तके लिखनं, नवश-

संवच्छरे काले गच्छइ इति दीसइ ॥ १४८ ॥

तत्रिनवतितमवर्षे च कल्पस्य पर्षद्वाचनेति, तथोक्तं श्रीमुनिसुंदरसूरिभिः स्वकृतस्तोत्ररत्नकोशे—"वीरात्रिनंदांक (९९३) शरद्यचीकरत्, त्वच्चैत्यपूते ध्रुवसेनभूपतिः। यस्मिन्महे संसदि कल्पवाचना—माद्यां तदानंदपुरं न कः स्तुते ?॥ १ ॥" पुस्तकलिखनकालस्तु यथोक्तः प्रतीत एव "वल्लहीपुरम्मि णयरे" इत्यादिवचनात्, तत्त्वं पुनः केवलिनो विदन्तीति ॥ १४८ ॥ इति श्रीवीरचरित्रं समाप्तम् ॥

अन्ये वदंति, "नवशतअशीतिवर्षे, वीरात्सेनोऽङ्गजार्थमानंदे । संघसमक्षं समहं, प्रारब्धं वाचितुं विज्ञैः ॥ १ ॥ इत्याद्यंतर्वाच्यवचनात् श्रीवीरनिर्वाणात् अशीत्यधिकनवशतवर्षातिक्रमे कल्पस्य सभासमक्षं वाचना जाता तां ज्ञापयितुं इदं सूत्रं न्यस्तमिति, तत्त्वं पुनः केवलिनो विदंतीति। वायणंतरे पुण इत्यादि–वाचनांतरे पुनरयं त्रिनवतितमः (९३) संवत्सरः कालो गच्छतीति दृश्यते, अत्र केचिद्वदंति,

वाससयाइं विइक्कंताइं दसमस्स य वाससयस्स अयं असी-
इमे संवच्छरे काले गच्छइ, वायणंतरे पुण, अयं तेणउए

वाचनांतरे कोऽर्थः ? प्रत्यंतरे 'तेणउए' इति दृश्यते, यत्कल्पस्यपुस्तके लिखनं पर्षदि वाचनं वा अशीत्यधिकनववर्षशतातिक्रमे इति क्वचित्पुस्तके लिखितं, तत्पुस्तकांतरे त्रिनवतिवर्षाधिकनववर्षशतातिक्रमे (९९३) इति दृश्यते इतिभावः ।

---

(१) ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य शोकापहारार्थम् ॥

सर्वदुःखानि प्रक्षीणानि यस्य स तथा ॥ १४७ ॥ अथ भगवतो निर्वाणकालस्य पुस्तकलिखनादिकालस्य चान्तरमाह । समणस्स इत्यादितः इति दीसइ इतिपर्यंतं, तत्र भगवतो निर्वृतस्य नव वर्षशतानि व्यतिक्रांतानि दशमस्य च वर्षशतस्याऽयं अशीतितमः संवत्सरः कालो गच्छति, यद्यपि एतस्य सूत्रस्य व्यक्त्या भावार्थो न ज्ञायते तथापि यथा पूर्वटीकाकारैर्व्याख्यातं तथा व्याख्यायते, तथाहि—अत्र केचिद्वदंति यत्कल्पसूत्रस्य पुस्तकलिखनकालज्ञापनाय इदं सूत्रं, श्रीदेवर्द्धिगणिक्षमाश्रमणैर्लिखितं, तथा चायमर्थो यथा—श्रीवीरनिर्वाणात् (९८०) अशीत्यधिकनववर्षशतातिक्रमे पुस्तकारूढः सिद्धांतो जातस्तदा कल्पोऽपि पुस्तकारूढो जात इति, तथोक्तं "वल्लहीपुरंमि णयरे, देवड्ढिप्पमुहसयलसंघेहिं । पुत्थे आगम लिहिओ, नवसयअसीयाओ (९८०) वीराओ ॥ १ ॥"

जाइजरामरणबंधणे, सिद्धे, बुद्धे, मुत्ते, अंतगडे, परिणिव्वुडे, सव्वदुक्खप्पहीणे ॥ १४७ ॥ समणस्स भगवओ महावीरस्स जाव सव्वदुक्खप्पहीणस्स णव-

इत्यादि-षष्ठेन भक्तेन जलरहितेन स्वातिनक्षत्रेण सह चंद्रयोग उपागते सति पच्चूसकालसमयंसि प्रत्यूषकाललक्षणो यः समयोऽवसरस्तत्र प्रत्यूषकालसमये चतुर्घटिकावशेषायां रात्रावित्यर्थः संपलियंकणिसण्णे संपल्यंकासनेन निषण्णः पद्मासननिविष्टः, पंचपंचाशत् अध्ययनानि कल्याणं पुण्यं तस्य फलविपाको येषु तानि कल्याणफलविपाकानि, पंचपंचाशत् अध्ययनानि पापफलविपाकानि, षट्त्रिंशत्

सकालसमयंसि संपलियंकणिसण्णे, पणपण्णं अज्झयणाइं कल्लाणफलविवागाइं, पणपण्णं अज्झयणाइं पावफलविवागाइं,छत्तीसं च अपुट्ठवागरणाइं वागरित्ता,पहाणं णाम अज्झयणं विभावेमाणे विभावेमाणे कालगए, विइक्कंते, समुज्जाए, छिण्ण-

अपृष्टव्याकरणानि अपृष्टान्युत्तराणि व्याकृत्य पहाणं प्रधानं नाम एकं मरुदेवाध्ययनं विभावयन् भगवान्निर्वृतः "विइक्कंते" इत्यादिपदानामयमर्थः, संसाराद् व्यतिक्रान्तः, सम्यगूर्द्ध्वं यातः, छिन्नानि जातिजरामरणबंधनानि यस्य स तथा, सिद्धः, बुद्धः, मुक्तः, कर्मणामन्तकृत्, सर्वसन्तापरहितः,

किंचिदूनानि त्रिंशद्वर्षाणि केवलिपर्यायं पालयित्वा द्विचत्वारिंशद्वर्षाणि चारित्रपर्यायं पालयित्वा द्विसप्ततिः वर्षाणि सर्वायुः पालयित्वा क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु चतुर्षु भवोपग्राहिकर्मसु अस्यां अवसर्पिण्यां 'दुषमसुषमा' इति नामके चतुर्थेऽरके बहु व्यतिक्रान्ते सति त्रिषु वर्षेषु सार्द्धाष्टसु च मासेषु

त्तरिं वासाइं सव्वाउअं पालइत्ता, खीणे वेयणिज्जाउयणामगोत्ते, इमीसे ओसप्पिणीए दुसमसुसमाए समाए बहुवइक्कंताए, तिहिं वासेहिं अद्धणवमेहि य मासेहिं सेसेहिं, पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए, एगे अबीए, छट्ठेणं भत्तेणं अपाणएणं, साइणा णक्खत्तेणं जोगमुवागएणं पच्चू-

शेषेषु सत्सु पापायां मध्यमायां हस्तिपालस्य राज्ञः लेखकसभायां एगे अबीए एक. सहायविरहात्, अद्वितीय एकाकी एव, न तु ऋषभादिवद्दशसहस्रादिपरिवार इति। अत्र कविः "यन्न कश्चन मुनिस्त्वया समं, मुक्तिमापदितरैर्जिनैरिव। दुःषमासमयभाविलिंगिनां, व्यंजि तेन गुरुनिर्व्यपेक्षता ॥ १ ॥" छट्ठेणं

पंचमी द्वितीयार्थे, ततो यावत्तृतीयं पुरुष एव युगं पुरुषयुगं जंबूस्वामिनं यावत् युगांतकृद्भूमिः चउवासपरियाए ज्ञानोत्पत्त्यपेक्षया चतुर्वर्षपर्याये च भगवति अंतमकासी अंतमकार्षीत्कश्चित्केवली मोक्षं अगमत्, प्रभोर्ज्ञानानंतरं चतुर्षु वर्षेषु गतेषु मुक्तिमार्गो वहमानो जातः, जंबूस्वामिनं यावच्च मुक्ति-

चउवासपरियाए अंतमकासी ॥ १४६ ॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता, साइरेगाइं दुवालस वासाइं छउमत्थपरियागं पाउणित्ता, देसूणाइं तीसं वासाइं केवलि-परियागं पाउणित्ता, बायालीसं वासाइं सामण्णपरियागं पाउणित्ता, वाव-

मार्गो वहमानः स्थित इति भावः ॥ १४६ ॥ तेणंकालेणं इत्यादितः सव्वदुक्खप्पहीणे इति पर्यंतं, तत्र तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः त्रिंशद्वर्षाणि गृहस्थावस्थामध्ये उषित्वा समधिकानि द्वादश वर्षाणि छउमत्थपरिआगं पाउणित्ता छद्मस्थपर्यायं पालयित्वा पूरयित्वेत्यर्थः,

सिभद्दाणं आगमिस्सभद्दाणां, आगामिभवे सेत्स्यमानत्वात्, उत्कृष्टा एतावती अनुत्तरोपपातिनां संपदा अभवत् ॥ १४५ ॥ समणस्सणं इत्यादितः अंतमकासी इति पर्यंतं, तत्र भगवतो द्विविधा अंतकृद्भूमिः, अंतकृतो मोक्षगामिनस्तेषां भूमिः कालोऽन्तकृद्भूमिः अभवत्, तदेव द्विविधत्वं दर्शयति, जुगंतगडभूमी परियायंतगडभूमी य युगांतकृद्भूमिः पर्यायांतकृद्भूमिश्च, तत्र युगानि कालमानविशेषास्तानि च

सिभद्दाणं उक्कोसिआ अणुत्तरोववाइयाणं संपया हुत्था ॥ १४५ ॥ समणस्स णं भगवओ महावीरस्स दुविहा अंतगडभूमी हुत्था, तंजहा-जुगंतगडभूमी परियायंतगडभूमी य, जाव तच्चाओ पुरिसजुगाओ जुगंतगडभूमी

क्रमवर्त्तीनि, तत्साधर्म्यात् ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपाः पुरुषास्तेऽपि युगानि तैः प्रमिता अंतकृद्भूमिर्या सा युगांतकृद्भूमिः 'परियायंतगडभूमित्ति' पर्यायः प्रभोः केवलित्वकालस्तं आश्रित्य अंतकृद्भूमिः पर्यायांतकृद्भूमिः, तत्राऽऽद्यां निर्दिशति, जाव तच्चाओ पुरिसजुगाओ जुगंतगडभूमी इह

चत्वारि शतानि वादिमुनीनां, कीदृशानां ? देवमनुष्यासुरसहितायां पर्षदि वादेऽपराजितानां, उत्कृष्टा एतावती वादिसंपदा अभवत् ॥१४३॥ श्रमणस्य भगवतो महावीरस्य सप्त शिष्यशतानि सिद्धिं गतानि यावत् सर्वं दुःखानि प्रक्षीणानि, चतुर्दश आर्यिकाशतानि सिद्धौ गतानि ॥१४४॥ श्रमणस्य भगवतो

वाए अपराजिआणं उक्कोसिआ वाइसंपया हुत्था ॥ १४३ ॥ समणस्स भगवओ महावीरस्स सत्त अंतेवासिसयाइं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं, चउदस अज्जियासयाइं सिद्धाइं ॥१४४॥ समणस्स भगवओ महावीरस्स अट्ठ सया अणुत्तरोववाइयाणं गइकल्लाणाणं ठिइकल्लाणाणं आगमे-

महावीरस्य अष्ट शतानि अनुत्तरोपपातिनां अनुत्तरविमानोत्पन्नमुनीनां, कीदृशानां ? गइकल्लाणाणं गतौ आगामिन्यां मनुष्यगतौ कल्याणं मोक्षप्राप्तिलक्षणं येषां ते तथा तेषां, पुनः कीदृशानां ? ठिइकल्लाणाणं स्थितौ देवभवेऽपि कल्याणं येषां ते तथा तेषां, वीतरागप्रायत्वात्, अत एव आगमे-

विषये संज्ञिनां पंचेन्द्रियाणां पर्याप्तकानां मनसि गतान् भावान् जानतां उत्कृष्टा एतावती विपुलमतीनां संपदा अभवत्, तत्र विपुलमतयो घटोऽनेन चिंतितः, स च सौवर्णः, पाटलिपुत्रकः, शारदः, पीतवर्ण इत्यादिसर्वविशेषोपेतं, सर्वतः सार्द्धं द्व्यगुलाधिके मनुष्यक्षेत्रे स्थितानां संज्ञिपंचेंद्रियाणां

जाणमाणाणं उक्कोसिया विउलमईणं संपया हुत्था ॥ १४२ ॥ समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुआसुराए परिसाए

मनोगतं पदार्थं जानंति, ऋजुमतयस्तु सर्वतः संपूर्णमनुष्यक्षेत्रस्थितानां संज्ञिपंचेंद्रियाणां मनोगतं सामान्यतो घटपटादिपदार्थमात्रं एव जानंतीति विशेषः[1] ॥ १४२ ॥ श्रमणस्य भगवतो महावीरस्य

1 "अथ भगवतीसूत्रवृत्ति–राजप्रश्नीयवृत्ति–नंदीसूत्रमलयगिरीयवृत्ति–विशेषावश्यकवृत्ति–कर्मग्रन्थवृत्त्याद्यभिप्रायः । सामान्य घटादिवस्तुमात्रचिन्तनपरिणामग्राहि, किंचिदविशुद्धतरमर्द्धतृतीयांगुलहीनमनुष्यक्षेत्रविषय ज्ञान ऋजुमतिलब्धि', सपूर्णमनुष्यक्षेत्रविषय विपुलमतिलब्धिरिति तु प्रवचनसारोद्धारवृत्त्यौपपातिकवृत्त्योर्लिखितम् । अर्द्धतृतीयद्वीपसमुद्रेष्वर्द्धतृतीयांगुलहीनेषु संज्ञिमनांसि ऋजुमतिर्जानाति, विपुलमतिस्त्वर्द्धतृतीयैरंगुलैरभ्यधिकेष्विति चार्थत श्रीज्ञानसूरिकृतावश्यकचूर्णौ ।" इतिलोकप्रकाशे तृतीयसर्गे ॥

संभिण्णवरणाणदंसणधराणं संभिन्ने संपूर्णे वरे श्रेष्ठे ज्ञानदर्शने धरंति ये ते तथा तेषां उत्कृष्टा एतावती केवलज्ञानिनां संपदा अभवत् ॥१४०॥ समणस्स इत्यादि–श्रमणस्य भगवतो महावीरस्य सप्त शतानि वैक्रियलब्धिमतां मुनीनां, कीदृशानां ? अदेवानामपि देविड्ढिपत्ताणं देवर्द्धिविकुर्वणासमर्थानां

णीणं संपया हुत्था ॥ १४० ॥ समणस्स भगवओ महावीरस्स सत्त सया वेउव्विणं अदेवाणं देविड्ढिपत्ताणं उक्कोसिया वेउव्वियसंपया हुत्था ॥ १४१ ॥ समणस्स णं भगवओ महावीरस्स पंच सया विउलमईणं अड्ढाइज्जेसु दीवेसु दोसु य समुद्देसु सण्णीणं पंचिंदियाणं पज्जत्तगाणं मणोगए भावे

इतिभावः, उत्कृष्टा एतावती वैक्रियलब्धिमत्संपदा अभवत् ॥१४१॥ समणस्सणं इत्यादि–श्रमणस्य भगवतो महावीरस्य पंच शतानि विपुलमतीनां, कीदृशानां ? अर्द्धतृतीयेषु द्वीपेषु द्वयोः समुद्रयोश्च

येषां ते तथा तेषां, पुनः कीदृशानाम्? जिणोविव जिन इवाऽवितथं सत्यं व्याकुर्वाणानां, केवलिश्रुत-केवलिनोः प्रज्ञापनायां तुल्यत्वात्, उत्कृष्टा एतावती चतुर्दशपूर्विणां संपदा अभवत् ॥१२८॥ समणस्स इत्यादि–श्रमणस्य भगवतो महावीरस्य त्रयोदश शतानि अवधिज्ञानिनां, कीदृशानां? अइसेसपत्ताणं

अवितहं वागरमाणाणं उक्कोसिया चउद्दसपुव्विसंपया हुत्था ॥ १२८ ॥ समणस्स भगवओ महावीरस्स तेरस सया ओहिणाणीणं अइसेसपत्ताणं उक्कोसिया ओहि णाणिसंपया हुत्था॥१२९॥समणस्स भगवओ महावीरस्स सत्त सया केवलणाणीणं संभिण्णवरणाणदंसणधराणं उक्कोसिया केवलणा-

अतिशेषा अतिशयाः आमर्षौषध्यादिलब्धयस्तान् प्राप्तानां उत्कृष्टा एतावती अवधिज्ञानिनां संपदा अभवत् ॥ १२९ ॥ समणस्स इत्यादि–श्रमणस्य भगवतो महावीरस्य सप्त शतानि केवलज्ञानिनां

॥१९६॥

समणस्सणं इत्यादि– सुलसारेवतीप्रमुखाणां श्रमणोपासिकानां त्रीणि लक्षाणि अष्टादश सहस्रा
उत्कृष्टा एतावती श्रमणोपासिकानां संपदा अभवत्, अत्र या सुलसा श्राविका सा द्वात्रिंशत्पुत्रज
ननी नागभार्या, रेवती च प्रभोरौषधदात्री ज्ञेया ॥ १३७ ॥ समणस्स भगवओ इत्यादि–श्रमण

समणस्सणं भगवओ महावीरस्स सुलसारेवईपामोक्खाणं समणोवासियाणं
तिण्णि सयसाहस्सीओ अट्ठारस सहस्सा उक्कोसिआ समणोवासियाणं
संपया हुत्था ॥ १३७ ॥ समणस्स भगवओ महावीरस्स तिण्णि सया
चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सवक्खरसण्णिवाईणं जिणो विव

भगवतो महावीरस्य त्रीणि शतानि चतुर्दश पूर्विणां, कीदृशानाम्? अजिणाणं असर्वज्ञानां प
जिणसंकासाणं सर्वज्ञसदृशानां सव्वक्खरसण्णिवाईणं सर्वेऽक्षरसंनिपाता अक्षरसंयोगा ज्ञेयतया विद्यंते

दश श्रमणानां सहस्राणि उत्कृष्टा एतावती श्रमणसंपदा अभवत् ॥१३४॥ समणस्सणं इत्यादि—श्रमणस्य भगवतो महावीरस्य आर्यचंदनाप्रमुखाणि षट्त्रिंशत् आर्यिकाणां सहस्राणि उत्कृष्टा एतावती

क्खाओ चउद्स समणसाहस्सीओ उक्कोसिआ समणसंपया हुत्था ॥१३४॥
समणस्स भगवओ महावीरस्स अज्जचंदणापामोक्खाओ छत्तीसं अज्जिया-
साहस्सीओ उक्कोसिया अज्जियासंपया हुत्था ॥१३५॥ समणस्स णं भगवओ
महावीरस्स संखसयगपामोक्खाणं समणोवासगाणं एगा सयसाहस्सी
अउणट्ठिं च सहस्सा उक्कोसिआ समणोवासगाणं संपया हुत्था ॥ १३६ ॥

आर्यिका संपदा अभवत् ॥ १३५ ॥ समणस्सणं इत्यादि—शंखशतकप्रमुखाणां श्रमणोपासकानां श्रावकाणां एका शतसहस्री एकोनषष्टिश्च साहस्र्य उत्कृष्टा श्रमणोपासकानां संपदा अभवत् ॥१३६॥

जं पासित्ता इत्यादितः दुराराहए भविस्सइ इति पर्यंतं, तत्र जं पासित्ता यां कुंथुं अणुद्धरीं दृष्ट्वा बहुभिः साधुभिर्बह्वीभिः स्वाध्वीभिश्च भक्तानि प्रत्याख्यातानि अनशनं कृतमित्यर्थः, से किमाहुभंते ! शिष्यः पृच्छति, तत् किमाहुर्भदंतास्तत्किं कारणं ? यद्भक्तानि प्रत्याख्यातानि, गुरुराह–अद्यप्रभृति संयमो

माणा छउमत्थाणं णिग्गंथाण य णिग्गंथीण य चक्खुफासं हव्वमागच्छइ ॥ १३२ ॥ जं पासित्ता बहुहिं णिग्गंथेहिं णिग्गंथीहिं य भत्ताइं पच्चक्खायाइं, से किमाहु ? भंते ! अज्जप्पभिइं संजमे दुराराहए भविस्सइ ॥१३३॥ तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स इंदभूइपामो-

दुराराध्यो भविष्यति, पृथिव्या जीवाकुलत्वात्, संयमयोग्यक्षेत्राभावात्पाखंडिसंकराच्च ॥ १३३ ॥ तेणं कालेणं इत्यादि, तस्मिन्काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य इंद्रभूतिप्रमुखाणि चतु-

तदेवाह । जयाणं इत्यादि सुगमम् ॥ १३१ ॥ जं रयणिं चणं इत्यादितः हव्वमागच्छइ इति पर्यंतं, तत्र यस्यां भगवान्निर्वृतस्तस्यां रात्रौ कुंथुत्ति कुंथुः प्राणिजातिः अणुद्धरित्ति या उद्धर्तुं न शक्यते

खुद्दाए जाव जम्मणक्खत्ताओ विइक्कंते भविस्सइ तया णं समणाणं णिग्गंथाणं णिग्गंथीण य उदिए उदिए पूयासक्कारे भविस्सइ ॥ १३१ ॥ जं रयणिं चणं समणे भगवं महावीरे जाव सव्वदुक्खप्पहीणे, तं रयणिं चणं कुंथू अणुद्धरी णामं समुप्पण्णा जा ठिया अचलमाणा छउमत्थाणं णिग्गंथाण य णिग्गंथीण य णो चक्खुफासं हव्वमागच्छइ, जा अठिया चल-

एवंविधा समुत्पन्ना, या स्थिता एकत्र स्थिता अत एव अचलंती सती छद्मस्थानां चक्षुःस्पर्शं दृष्टिपथं हव्वं शीघ्रं नागच्छति, या च अस्थिता चलंती छद्मस्थानां चक्षुःस्पर्शं दृष्टिपथं शीघ्रं आगच्छति ॥१३२॥

जप्पभिइं इत्यादितः पवत्तइ इति पर्यंतं, तत्र यतः प्रभृति स भस्मराशिनामा महाग्रहो भगवतो जन्मनक्षत्रं संक्रांतस्ततः प्रभृति निर्ग्रंथानां साधूनां निर्ग्रंथीनां च साध्वीनां उदितोदितः स्फातिमान्, पूजा वंदनादिका, सत्कारो वस्त्रदानादिबहुमानः, स न प्रवर्तते, अत एव शक्रेण स्वामी विज्ञप्तो यत् क्षणं आयुर्वर्द्धयत येन भवत्सु जीवत्सु भवज्जन्मनक्षत्रं संक्रांतो भस्मराशिग्रहो भवच्छासनं पीडयितुं

भगवओ महावीरस्स जम्मणक्खत्तं संकंते, तप्पभिइं चणं समणाणं णिग्गं-
थाणं णिग्गंथीण य णो उदिए उदिए पूयासक्कारे पवत्तई ॥१३०॥ जया णं से

न शक्नोति, ततः प्रभुणोक्तं न खलु शक्रः कदाचिदपि इदं भूतपूर्वं यत्क्षीणं आयुर्जिनेंद्रैरपि वर्द्धयितुं शक्यते ! ततोऽवश्यंभाविनी तीर्थबाधा भविष्यत्येव ! किंतु षडशीति वर्षायुषि कल्किनि कुनृपतौ त्वया निग्रहीते सति वर्षसहस्रद्वये पूर्णे मज्जन्मनक्षत्राद्भस्मग्रहेऽतिक्रांते च त्वत्स्थापितकल्किपुत्रधर्मदत्तराज्यादारभ्य साधुसाध्वीनां उदितोदितः पूजासत्कारो भविष्यतीति ॥ १३० ॥ सूत्रकारोऽप्ये-

स्पतिः ( ४३ ) राहुः ( ४४ ) अगस्तिः ( ४५ ) माणवकः ( ४६ ) कामस्पर्शः ( ४७ ) धुरः ( ४८ ) प्रमुखः ( ४९ ) विकटः ( ५० ) विसंधिकल्पः ( ५१ ) प्रकल्पः ( ५२ ) जटालः ( ५३ ) अरुणः ( ५४ ) अग्निः ( ५५ ) कालः ( ५६ ) महाकालः ( ५७ ) स्वस्तिकः ( ५८ ) सौवस्तिक. ( ५९ ) वर्द्धमान. ( ६० ) प्रलंबः ( ६१ ) नित्यालोकः ( ६२ ) नित्योद्योतः ( ६३ ) स्वयंप्रभः ( ६४ ) अवभासः ( ६५ ) श्रेयस्करः ( ६६ ) क्षेमंकरः ( ६७ ) आभंकरः ( ६८ ) प्रभंकरः ( ६९ ) अरजाः

जप्पभिइं चणं से खुद्दाए भासरासी महागहे दोवाससहस्सट्ठिई समणस्स

( ७० ) विरजाः ( ७१ ) अशोकः ( ७२ ) वीतशोकः ( ७३ ) विततः ( ७४ ) विवस्त्रः ( ७५ ) विशालः ( ७६ ) शालः ( ७७ ) सुव्रतः ( ७८ ) अनिवृत्तिः ( ७९ ) एकजटी ( ८० ) द्विजटी ( ८१ ) करः ( ८२ ) करकः ( ८३ ) राजा ( ८४ ) अर्गलः ( ८५ ) पुष्पः ( ८६ ) भावः ( ८७ ) केतुः ( ८८ ) इत्यष्टाशीतिर्ग्रहाः ॥ १२९ ॥

संक्रांतः, किंभूतोऽसौ ? दोवाससहस्सट्ठिई द्विसहस्रवर्षस्थितिकः, एकस्मिन् ऋक्षे एतावंतं कालं अवस्थानात्, तत्राऽष्टाशीतिर्ग्रहाश्चेमे—अंगारकः ( १ ) विकालकः ( २ ) लोहिताक्षः ( ३ ) शनैश्चरः ( ४ ) आधुनिकः ( ५ ) प्राधुनिकः ( ६ ) कणः ( ७ ) कणकः ( ८ ) कणकणकः ( ९ ) कणवितानकः ( १० ) कणसंतानकः ( ११ ) सोमः ( १२ ) सहितः ( १३ ) आश्वासनः ( १४ ) कार्योपगः ( १५ ) कर्बुरकः ( १६ ) अजकरकः ( १७ ) दुंदुभकः ( १८ ) शंखः ( १९ ) शंखनाभः

समणस्स भगवओ महावीरस्स जम्मणक्खत्तं संकंते ॥ १२९ ॥

( २० ) शंखवर्णाभः ( २१ ) कंसः ( २२ ) कंसनाभः ( २३ ) कंसवर्णाभः ( २४ ) नीलः ( २५ ) नीलावभासः ( २६ ) रूपी ( २७ ) रूपावभासः ( २८ ) भस्मः ( २९ ) भस्मराशिः ( ३० ) तिलः ( ३१ ) तिलपुष्पवर्णः ( ३२ ) दकः ( ३३ ) दकवर्णः ( ३४ ) कार्यः ( ३५ ) वंध्यः ( ३६ ) इंद्राग्निः ( ३७ ) धूमकेतुः ( ३८ ) हरिः ( ३९ ) पिंगलः ( ४० ) बुधः ( ४१ ) शुक्रः ( ४२ ) बृह-

पौपधोपवासं पट्ठविंसु कृतवंतः आहारत्यागपौपधरूपं उपवासं चक्रुरित्यर्थः, अन्यथा दीपकरणं न संभवति, ततश्च गए से भावुज्जोए दव्वुज्जोअं करिस्सामो गतः स भावोद्योतस्ततो द्रव्योद्योतं करिष्यामः इति तैर्दीपाः प्रवर्तितास्ततः प्रभृति दीपोत्सवः संवृत्तः, कार्तिकशुक्लप्रतिपदि च श्रीगोतमस्य केवलमहिमा देवैश्चक्रेऽतस्तत्रापि जनप्रमोदः, नंदिवर्द्धननरेंद्रश्च भगवतोऽस्तं श्रुत्वा शोकार्त्तः सुदर्शनया

वासं पट्ठविंसु, गए से भावुज्जोए दव्वुज्जोअं करिस्सामो ॥ १२८ ॥
जंरयणिं चणं समणे भगवं महावीरे जाव-सव्वदुक्खप्पहीणे, तं रयणिं
चणं खुद्दाए भासरासी णाम महागहे दोवाससहस्सट्ठिईए

भगिन्या संबोध्य सादरं स्ववेश्मनि द्वितीयायां भोजितस्ततो भ्रातृद्वितीयापर्वरूढिः ॥ १२८ ॥ जंरयणिंचणं इत्यादितः जम्मणक्खत्तं संकंते इति यावत्, तत्र यस्यां रात्रौ भगवान्निर्वृतस्तस्यां रात्रौ खुद्दाए क्षुद्रात्मा क्रूरस्वभावः भासरासी भस्मराशिनामा त्रिंशत्तमो महाग्रहो भगवतो जन्मनक्षत्र

दीर्घायुरिति कृत्वा सुधर्मस्वामिने गणं समर्प्य मोक्षं ययौ। सुधर्मस्वामिनोऽपि पश्चात्केवलोत्पत्तिः, सोऽप्यऽष्टौ वर्षाणि विहृत्याऽऽर्यजंबूस्वामिने गणं समर्प्य सिद्धिं गतः ॥ १२७ ॥ जंरयणिंचणं इत्यादितः दव्वुज्जोअं करिस्सामो इति पर्यंतं, तत्र यस्यां रात्रौ भगवान्निर्वृतस्तस्यां रात्रौ णव मल्लई नव मल्लकिजा-

णाणदंसणे समुप्पण्णे ॥ १२७ ॥ जं रयणिं चणं समणे भगवं महावीरे कालगए, जाव-सव्वदुक्खप्पहीणे, तं रयणिं चणं णव मल्लई, णव लेच्छई, कासीकोसलगा अट्ठारसवि गणरायाणो, अमावासाए पाराभोअं पोसहोव-

तीयाः काशिदेशस्य राजानः, णव लेच्छई नव लेच्छकिजातीयाः कोशलदेशस्य राजानः, ते च कार्यवशात् गणमेलापकं कुर्वंति इति गणराजा अष्टादश, ये चेटकमहाराजस्य सामंताः श्रूयंते अमावासाए ते तस्यां अमावास्यायां पाराभोअंति पारं संसारपारं आभोगयति प्रापयति यस्तं एवंविधं पोसहोववासं

राहुग्रस्तनिशाकर-मिव गगनं दीपहीनमिव भवनम्। भरतमिदं गतशोभं,त्वया विनाऽद्य प्रभो! जज्ञे॥२॥

कस्यांह्रिपीठे प्रणतः पदार्थान्, पुनः पुनः प्रश्नपदीकरोमि ।
कं वा भदंतेति वदामि को वा, मां गौतमेत्याप्तगिराऽथ वक्ता ॥ ३ ॥

हा ! हा !! हा !!! वीर ! किं कृतं ? यदीदृशेऽवसरेऽहं दूरीकृतः ? किमाडकं मंडयित्वा बालवत्तवांचलेऽलगिष्यं ? किं केवलभागममार्गयिष्यं ? किं मुक्तौ संकीर्णं अभविष्यत् ? किं वा तव भारोऽभविष्यत्? यदेवं मां विमुच्य गतः ! एवं च वीर ! वीर ! इति कुर्वतो वीर ! इति मुखे लग्नं गौतमस्य, तथा च हुं ! ज्ञातं, वीतरागा निःस्नेहा भवंति, ममैवाऽयं अपराधो यन्मया तदा श्रुतोपयोगो न दत्त.! धिग् इमं एकपाक्षिकं स्नेहं,अलं स्नेहेन, एकोऽस्मि ! नास्ति कश्चन मम ! एवं सम्यक् साम्यं भावयतस्तस्य केवलमुत्पेदे,-"मुक्खमग्गपवण्णाणं,सिणेहो वज्जसिंखला। वीरे जीवंतए जाओ,गोअमो जं न केवली ॥१॥" प्रातःकाले इंद्राद्यैर्महिमा कृतः। अत्र कविः-"अहंकारोऽपि बोधाय, रागोऽपि गुरुभक्तये । विषाद' केवलायाभूत्, चित्रं श्रीगौतमप्रभो.॥१॥" स च द्वादश वर्षाणि केवलिपर्यायं परिपाल्य

यावत्सूत्रं प्राग्व्याख्यातम् ॥ १२६ ॥ जंरयणिंचणं इत्यादितः समुप्पण्णे इति पर्यंतं, तत्र यस्यां रात्रौ भगवान्निर्वृतस्तस्यां रात्रौ ज्येष्ठस्य अंतेवासिनः शिष्यस्य, किंभूतस्य ? गोत्रेण गौतमस्य इंदभूइस्स नाम्ना इंद्रभूतेः णायए ज्ञातजे श्रीमहावीरविषये पिज्जबंधणे प्रेमबंधने स्नेहबंधने व्युच्छिन्ने त्रुटिते सति अनंते अनुत्तरे यावत्केवलवरज्ञानदर्शने समुत्पन्ने, तच्चैवं स्वनिर्वाणसमये देवशर्मणः प्रतिबोध-

होत्था ॥ १२६ ॥ जं रयणिं चणं समणे भगवं महावीरे कालगए, जाव-
सव्वदुक्खप्पहीणे, तं रयणिं चणं जिट्ठस्स गोअमस्स इंदभूइस्स अणगारस्स
अंतेवासिस्स णायए पिज्जबंधणे वोच्छिण्णे अणंते अणुत्तरे जाव केवलवर-

नाय क्वापि ग्रामे स्वामिना प्रेषितः श्रीगौतमः, तं प्रतिबोध्य पश्चादागच्छन् श्रीवीरनिर्वाणं श्रुत्वा वज्राहत इव शून्यः क्षणं तस्थौ, बभाण च—

"प्रसरति मिथ्यात्वतमो, गर्जन्ति कुतीर्थिकौशिका अद्य । दुर्भिक्षडमरवैरादि-राक्षसाः प्रसरमेष्यंति ॥१॥

( १८ ) प्राजापत्यः ( १९ ) उपशमः ( २० ) गंधर्वः ( २१ ) अग्निवेश्यः ( २२ ) शतवृषभः ( २३ ) आतपवान् ( २४ ) अर्थवान् ( २५ ) ऋणवान् ( २६ ) भौमः ( २७ ) वृषभः ( २८ ) सर्वार्थसिद्ध.

जं रयणिं चणं समणे भगवं महावीरे कालगए, जाव-सव्वदुक्खप्पहीणे सा णं रयणी बहूहिं देवेहिं देवीहिं य उवयमाणेहिं उप्पयमाणेहिं उज्जोविया आविहोत्था ॥ १२५ ॥ जं रयणिं चणं समणे भगवं महावीरे कालगए, जाव-सव्वदुक्खप्पहीणे, सा णं रयणी बहूहिं देवेहिं य देवीहिं य उवयमाणेहिं ओप्पयमाणेहिं उप्पिं जलगमाणभूया कहकहगभूया आवि-

( २९ ) राक्षसः ( ३० ) इति त्रिंशन्मुहूर्तनामानि ॥ १२४ ॥ जं रयणिं चणं इत्यादितः उज्जोविया आविहोत्था इति यावत्सूत्रं सुगमम् ॥ १२५ ॥ जंरयणिंचणं इत्यादितः कहकहगभूयाआविहुत्था इति

सुप्रतिष्ठः ( २ ) विजयः ( ३ ) प्रीतिवर्द्धनः ( ४ ) श्रेयान् ( ५ ) शिशिरः ( ६ ) शोभनः ( ७ ) हैमवान् ( ८ ) वसंतः ( ९ ) कुसुमसंभवः ( १० ) निदाघः ( ११ ) वनविरोधी ( १२ ) इति श्रावणादिद्वादशमासनामानि। पूर्वांगसिद्धः ( १ ) मनोरमः ( २ ) मनोहरः ( ३ ) यशोभद्रः ( ४ ) यशोधरः (५) सर्वकामसमृद्धः (६) इंद्रः (७) मूर्द्धाभिषिक्तः ( ८ ) सौमनः ( ९ ) धनंजयः (१०) अर्थसिद्धः ( ११ ) अभिजितः ( १२ ) रत्याशनः ( १३ ) शतंजयः ( १४ ) अग्निवेश्यः ( १५ ) इति पंचदश दिननामानि, उत्तमा ( १ ) सुनक्षत्रा ( २ ) इलापत्या ( ३ ) यशोधरा ( ४ ) सोमनसी ( ५ ) श्रीसंभूता ( ६ ) विजया ( ७ ) वैजयंती ( ८ ) जयंती ( ९ ) अपराजिता ( १० ) इच्छा ( ११ ) समाहारा ( १२ ) तेजा ( १३ ) अतितेजा ( १४ ) देवानंदा ( १५ ) चेति पंचदश रात्रि-नामानि। रुद्रः ( १ ) श्रेयान् ( २ ) मित्रं ( ३ ) वायुः ( ४ ) सुप्रतीतः ( ५ ) अतिचंद्रः ( ६ ) माहेंद्रः ( ७ ) बलवान् ( ८ ) ब्रह्मा ( ९ ) बहुसत्यः ( १० ) ईशानः ( ११ ) त्वष्टा ( १२ ) भावि-तात्मा ( १३ ) वैश्रवणः ( १४ ) वारुणः ( १५ ) आनंदः ( १६ ) विजयः ( १७ ) विजयसेनः

दिवसस्य नाम उवसमित्ति पवुच्चइ उपशम इति प्रोच्यते, उपशम इति तस्य द्वितीयं नामेत्यर्थः, देवानंदा नाम्नी सा अमावास्या रजनी निरतित्ति पवुच्चइ निरतिः इत्यप्युच्यते नामान्तरेण, अर्चनामा लवः, मुहूर्तनामा प्राणः, सिद्धनामा स्तोकः, नागनामकं करणं, इदं च शकुन्यादिस्थिरकरणचतुष्टये तृतीयं करणं, अमावास्योत्तरार्द्धे हि एतदेव भवतीति, सर्वार्थसिद्धनामा मुहूर्त्तः, स्वातिनामन-

दिवसे उवसमित्ति पवुच्चइ, देवाणंदा णामं सा रयणी निरतित्ति पवुच्चइ,
अच्चे लवे, मुहुत्ते पाणू, थोवे सिद्धे, णागे करणे, सव्वट्ठसिद्धे मुहुत्ते, साइणा
णक्खत्तेणं जोगमुवागए णं कालगए, जाव- सव्वदुक्खप्पहीणे ॥ १२४ ॥

क्षत्रेण चंद्रयोगे उपागते सति भगवान् कालगतः, यावत् सर्वदुःखप्रक्षीणः ॥

- अथ संवत्सरमासदिनरात्रिमुहूर्तनामानि चैवं सूर्यप्रज्ञप्तौ—एकस्मिन् युगे पंचसंवत्सरास्तेषां नामानि, —चंद्रः (१) चंद्रः (२) अभिवर्द्धितः (३) चंद्रः (४) अभिवर्द्धित (५) श्च, तथा अभिनंदनः (१)

भगवान् कालगतः, कायस्थितिभवस्थितिकालाद्गतः, वइक्कंते संसारं व्यतिक्रांतः, समुज्जाए समुद्यातः सम्यग् अपुनरावृत्त्या ऊर्द्धं यातः, छिण्णजाइजरामरणबंधणे छिन्नानि जातिजरामरणबंधनानि जन्मजरामरणकारणानि कर्माणि येन स तथा, सिद्धे सिद्धः साधितार्थः, बुद्धे बुद्धः तत्त्वार्थज्ञानवान्, मुत्ते मुक्तो भवोपग्राहिकर्मभ्यः, अंतगडे अंतकृत्सर्वदुःखानां, परिणिव्वुडे परिनिर्वृतः सर्वसंतापा-

**समणे भगवं महावीरे कालगए वइक्कंते समुज्जाए छिण्णजाइजरामरण-
बंधणे सिद्धे बुद्धे मुत्ते अंतगडे परिणिव्वुडे सव्वदुक्खप्पहीणे, चंदे णामं
से दोच्चे संवच्छरे, पीइवद्धणे मासे, नंदिवद्धणे पक्खे, अग्गिवेसे णामं**

भावात्, तथा च कीदृशो जातः ? सव्वदुक्खप्पहीणे सर्वाणि दुःखानि शारीरमानसानि तानि प्रहीणानि यस्य स तथा, चंदेणामं इत्यादि, यत्र भगवान्निर्वृतः स चंद्रनामा द्वितीयः संवत्सरः, प्रीतिवर्द्धन इति तस्य मासस्य कार्तिकस्य नाम, नंदिवर्द्धन इति तस्य पक्षस्य नाम, अग्निवेश्य इति तस्य

रज्जुका लेखकाः 'कारकून'इति लोके प्रसिद्धास्तेषां शाला सभा जीर्णा अपरिभुज्यमाना तत्र भगवानुपागतः, पूर्वं किल तस्या नगर्या 'अपापा' इति नामासीत्, देवैस्तु 'पापा' इत्युक्तं, तत्र भगवान् कालगत इति ॥ १२२ ॥ तत्थणं इत्यादितः उवागए इति पर्यंतं, तत्र जे से यस्मिन् वर्षारात्रे मध्यमा-

उवागए ॥१२२॥ तत्थ णं जे से पावाए मज्झिमाए हत्थिवालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं उवागए ॥ १२३ ॥ तस्स णं अंतरावासस्स जे से वासाणं चउत्थे मासे, सत्तमे पक्खे, कत्तियबहुले, तस्स णं कत्तियबहुलस्स पण्णरसीपक्खे णं, जा सा चरमा रयणी, तं रयणिं चणं

पापायां हस्तिपालरज्जुकसभायां वर्षावासार्थं उपागतः ॥ १२३ ॥ तस्सणं इत्यादितः सव्वदुक्खप्पहीणे इति पर्यंतं, तत्र तस्य वर्षारात्रस्य योऽसौ वर्षाणां चतुर्थो मासः, सप्तमः पक्षः कार्त्तिकबहुलः, तस्य कार्त्तिककृष्णपक्षस्य पण्णरसीपक्खे णं पंचदशदिने या सा चरमा रजनी तंरयणिंचणं तस्यां रात्रौ

वासं वर्षासु वसनमुपागतः, ततः चंपायाः पृष्ठचंपायाश्च निश्रया त्रीन् वर्षारात्रान्, एवं वैशाल्याः नगर्या वाणिज्यग्रामस्य च निश्रया द्वादश वर्षारात्रान्, राजगृहस्य नालंदायाश्च निश्रया चतुर्दश वर्षारात्रारान्, तत्र 'नालंदा' राजगृहनगरादुत्तरस्यां दिशि बाहिरिका शाखा पुरविशेषः तत्र चतुर्दश, षट्

वासे वासावासं उवागए, वेसालिं णगरिं वाणियगामं च णीसाए दुवालस अंतरावासे वासावासं उवागए, रायगिहं णगरं णालंदं च बाहिरियं णीसाए चउद्दस अंतरावासे वासावासं उवागए, छ महिलाए, दो भद्दियाए, एगं आलभियाए, एगं सावत्थीए, एगं पणियभूमीए, एगं पावाए मज्झिमाए हत्थिपालस्स रण्णो रज्जुगसभाए अपच्छिमं अंतरावासं वासावासं

मिथिलायां नगर्यां, द्वौ भद्रिकायां, एकं आलभिकायां, एकं श्रावस्त्यां, एकं प्रणितभूमौ वज्रभूम्याख्याऽनार्यदेशे इत्यर्थः, एकं च अपश्चिममंत्यं वर्षारात्रं मध्यमापापायां हस्तिपालस्य राज्ञो रज्जुगसभाए

तदनुज्ञां करोति, शक्रश्च दिव्यं वज्रमयस्थालं दिव्यचूर्णानां भृत्वा त्रिभुवनस्वामिनः संनिहितो भवति, ततः स्वामी रत्नमयसिंहासनादुत्थाय संपूर्णां चूर्णमुष्टिं गृह्णाति, ततो गौतमप्रमुखा एकादशाऽपि गणधरा ईषदवनता अनुक्रमेण तिष्ठंति, देवास्तूर्यध्वनिगीतादिनिरोधं विधाय तूष्णीकाः शृण्वंति, ततो भगवान्पूर्वं भणति, "गौतमस्य द्रव्यगुणपर्यायैस्तीर्थं अनुजानामीति"चूर्णांश्च तन्मस्तके क्षिपति, ततो देवा अपि चूर्णपुष्पगंधवृष्टिं तदुपरि कुर्वंति, गणं च भगवान् सुधर्मस्वामिनं धुरि व्यवस्थाप्याऽनुजानाति । इति गणधरवादः ॥ १२१ ॥

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे अट्ठियगामं णीसाए पढमं अंतरावासं वासावासं उवागए, चंपं च पिट्ठचंपं च णीसाए तओ अंतरा-

तेणंकालेणं इत्यादितः अपच्छिमं अंतरावास वासावासं उवागए इति यावत्, तत्र भगवान् अट्ठियगामं णीसाए अस्थिकग्रामस्य निश्रया प्रथमं अंतरावासं वर्षारात्रं चतुर्मासीं इति यावत्, वासा-

जरामर्यं, कोऽर्थः ? सर्वदा कर्तव्यं, अत्र अग्निहोत्रस्य सर्वदा कर्तव्यता उक्ता, अग्निहोत्रक्रिया च निर्वाणकारणं न भवति, शबलत्वात् केषांचिद्वधकारणं केषांचित् उपकारकारणं इति, ततो मोक्षसाधकाऽनुष्ठानक्रियाकालस्य अनुक्तत्वान्मोक्षो नास्ति, इति मोक्षाभावः प्रतीयते, तथा "द्वे ब्रह्मणी वेदितव्ये परमपरं च तत्र परं सत्यज्ञानं अनंतरं ब्रह्मेति" इत्यादिपदैर्मोक्षसत्ता प्रतीयते इति तव संदेहः, परं अविचारितं एतत्, यस्मात् 'जरामर्यं वा यदग्निहोत्रं' इत्यत्र वा शब्दोऽप्यर्थे स च भिन्नक्रमः, तथा च जरामर्यं यावदग्निहोत्रमपि कुर्यात्, कोऽर्थः ? कश्चित्स्वर्गाद्यर्थी यावज्जीवं अपि अग्निहोत्रं कुर्यात्, कश्चिन्निर्वाणार्थी अग्निहोत्रं विहाय निर्वाणसाधकानुष्ठानमपि कुर्यात्, न तु नियमतोऽग्निहोत्रमेवेत्यपिशब्दार्थः, ततो निर्वाणसाधकानुष्ठानकालोप्युक्त एव तस्मादस्ति निर्वाणम् । इत्येकादशो गणधरः ॥ ११ ॥

एवं चतुश्चत्वारिंशच्छतानि ( ४४०० ) द्विजाः प्रव्रजितास्तत्र मुख्यानां एकादशानां त्रिपदीग्रहणपूर्वकं एकादशांगचतुर्दशपूर्वरचना गणधरपदप्रतिष्ठा च, तत्र द्वादशांगीरचनानंतरं भगवांस्तेषां

यः कश्चित्पापमाचरति स नारको भवति, अथवा नारका मृत्वा पुनरनंतरं नारकतया नोत्पद्यंते, इति प्रेत्य नारका न संतीति उच्यते, इति अष्टमो गणधरः ॥ ८ ॥

अथ पुण्ये संदिग्धं, द्विजमचलभ्रातरं विबुधमुख्यम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥ तव संदेहकारणं तावत् अग्निभूत्युक्तं "पुरुष एवेदं ग्निं सर्वं" इत्यादि पदं, तत्र उत्तरमपि तथैव ज्ञेयं, तथा– "पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणा" इत्यादिवेदपदैः पुण्यपापयोः सिद्धिश्च। इति नवमो गणधरः ॥ ९ ॥

अथ परभवसंदिग्धं, मेतार्यनामपंडितप्रवरम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥ यत् तव इंद्रभूत्युक्तैर्विज्ञानघन एवैतेभ्यो भूतेभ्य इत्यादिपदैः परलोकसंदेहो भवति, परं तेषां पदानामर्थमसदुक्तप्रकारेण विभावय यथा संदेहो निवर्त्तते इति दशमो गणधरः ॥ १० ॥

निर्वाणविषयसंदेह–संयुतं च प्रभासनामानम्। ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥१॥ यतः–"जरामर्यं वा यदग्निहोत्रं" अनेन पदेन निर्वाणाभावः प्रतीयते, कथं ? यत् अग्निहोत्रं तत्

केवलज्ञानस्वरूपेण विश्वव्यापकत्वात् , एवंविध आत्मा, पुण्यपापाभ्यां न युज्यते, इति सुस्थम् । इति षष्ठो गणधरः ॥ ६ ॥

अथ देवविषयसंदेह–संयुतं मौर्यपुत्रनामानम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ?॥१॥ यतः–"को जानाति मायोपमान्गीर्वाणानिंद्रयमवरुणकुबेरादीन्" इति पदैर्देवनिषेधः प्रतीयते, "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्लोकं गच्छति" इति पदैस्तु देवसत्ता प्रतीयते, इति तव संदेहः, परमविचारितमेतत् , यत एते त्वया मया च प्रत्यक्षमेव दृश्यंते देवाः, यत्तु वेदे मायोपमानित्युक्तं तद्देवानामपि अनित्यत्वसूचकम् । इति सप्तमो गणधरः ॥ ७ ॥

अथ नारकसंदेहात् , संदिग्धमकंपितं विबुधमुख्यम् । ऊचे विभुर्यथास्थं वेदार्थं किं न भावयसि ? ॥ १ ॥ यस्मात् "नह वै प्रेत्य नरके नारकाः संति" इत्यादिपदैर्नारकाभावः प्रतीयते, "नारको वै एष जायते यः शूद्रान्नमश्नाति" इत्यादिपदैस्तु नारकसत्ता प्रतीयते, इति तव संदेहः, परं 'नह वै प्रेत्य नरके नारकाः संतीति' कोऽर्थः ? प्रेत्य परलोके केचिन्नारका मेर्वादिवत् शाश्वता न संति, किंतु

पदानि दृश्यंते, इति तव संदेहः, परं नाऽयं सुंदरो विचारो यस्मात् 'पुरुषो वै पुरुषत्वमश्नुते' इत्यादीनि यानि पदानि तानि मनुष्योऽपि कश्चिन्मार्दवादिगुणोपेतो मनुष्यायुष्कर्म बद्धा पुनरपि मनुष्यो भवति इत्यर्थनिरूपकानि, न तु मनुष्यो मनुष्य एव भवतीति निश्चायकानि, तथा—कथं मनुष्य. पशुर्भवति? न हि शालिबीजाद्गोधूमांकुरः संभवतीति या तव चित्ते युक्तिः प्रतिभाति साऽपि न समीचीना, यतो गोमयादिभ्यो वृश्चिकाद्युत्पत्तिदर्शनात्कार्यवैसदृश्यमपि संभवत्येव । इति पंचमो गणधरः ॥ ५ ॥

अथ बंधमोक्षविषये, संदिग्धं मंडिताभिधं विबुधम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥ १ ॥ यतः—"स एष विगुणो विभुर्न बध्यते संसरति वा मुच्यते मोचयति वा" त्वं तावत् एतेषां पदानामर्थमेवं करोषि, यत् स एष अधिकृतो जीवः, कथंभूतो ? विगुणः सत्त्वादिगुणरहितो विभु॰ सर्वव्यापको न बद्ध्यते पुण्यपापाभ्यां न युज्यते, नकारस्य सर्वत्र योजनात् न संसरति, न संसारे परिभ्रमति, न मुच्यते कर्मणा बंधाऽभावात्, नाप्यऽन्यं मोचयति अकर्तृत्वात्, परं नाऽयमर्थः समर्थः, किंतु स एष आत्मा, किं विशिष्टो ? विगुणो विगतछाद्मस्थिकगुणः, पुन. कीदृशो ? विभु॰

एतत्, यस्मात् विज्ञानघनेत्यादिभिरपि पदैः अस्मदुक्तार्थप्रकारेण आत्मसत्ता प्रकटैव, इति तृतीयो गणधरः ॥ ३ ॥

पंचसु भूतेषु तथा, संदिग्धं व्यक्तसंज्ञकं विबुधम् ॥ ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि? ॥ १ ॥ "येन स्वप्नोपमं वै सकलं इत्येष ब्रह्मविधिरंजसा विज्ञेय इति" अस्याऽर्थः– वै निश्चितं सकलं एतत्पृथिव्यादिकं स्वप्नोपमं असत्, अनेन वेदवचसा तावद्भूतानामभावः प्रतीयते, "पृथ्वी देवता, आपो देवता" इत्यादिभिस्तु भूतसत्ता प्रतीयते, इति संदेहः, परमविचारितमेतत्, यस्मात् स्वप्नोपमं वै सकलं इत्यादीनि पदानि अध्यात्मचिंतायां कनककामिन्यादिसंयोगस्य अनित्यत्वसूचकानि, न तु भूतनिषेधपराणि, इति चतुर्थो गणधरः ॥ ४ ॥

यो यादृशः स तादृश, इति संदिग्धं सुधर्मनामानम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि? ॥ १ ॥ यतः–"पुरुषो वै पुरुषत्वमश्नुते पशवः पशुत्वं" इत्यादीनि भवांतरसादृश्यप्रतिपादकानि, तथा–"शृगालो वै एष जायते यः सपुरीषो दह्यते" इत्यादीनि भवांतरे वैसदृश्यप्रतिपादकानि वेद-

अमूर्त्तस्याऽपि ज्ञानस्य मद्यादिना उपघातो ब्राह्म्याद्योपधेन च अनुग्रहो दृष्ट एव, किञ्च–कर्म विना एकः सुखी अन्यो दुःखी, एकः प्रभुरन्यः किंकर इत्यादि प्रत्यक्षं जगद्वैचित्र्यं कथं नाम संभवतीति श्रुत्वा गतसंशयः प्रव्रजितः । इति द्वितीयो गणधरः ॥ २ ॥

अथ वायुभूतिरपि तौ प्रव्रजितौ श्रुत्वा यस्य इंद्रभूत्यग्निभूती शिष्यौ जातौ स ममाऽपि पूज्य एव, तद्गच्छामि अहमपि संशयं पृच्छामि, इति सोऽप्यागतः, एवं सर्वेऽप्यागताः, भगवताऽपि सर्वेऽपि प्रतिबोधिताः, तत्क्रमश्चाऽयम् ॥—

तज्जीवतच्छरीरे, संदिग्धं वायुभूतिनामानम् । ऊचे विभुर्यथास्थं, वेदार्थं किं न भावयसि ? ॥१॥

यतः–'विज्ञानघन एवैतेभ्यो भूतेभ्यः' इत्यादिपदैर्भूतेभ्यो जीवः पृथक् नास्तीति प्रतीयते, तथा–"सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि शुद्धो यं पश्यंति धीरा यतयः संयतात्मानः" इत्यादि अस्यार्थः,– एष ज्योतिर्मयः शुद्ध आत्मा सत्येन तपसा ब्रह्मचर्येण लभ्यो ज्ञेय इत्यर्थः, एभिस्तु वेदपदैर्भूतेभ्यः पृथक् आत्मा प्रतीयते, ततस्तव संदेहः, यदुत यच्छरीरं स एवात्मा अन्यो वेति, परं अयुक्तं

सचाऽयम्—"पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं" इत्यादि—तत्र 'ग्निं' इति वाक्यालंकारे, यत् भूतं अतीतकाले, यच्च भाव्यं भाविकाले, तत्सर्वं इदं पुरुष एव आत्मैव, एवकारः कर्मेश्वरादिनिषेधार्थः, अनेन च वचनेन यन्नरामरतिर्यक्पर्वतपृथ्व्यादिकं वस्तु दृश्यते तत्सर्वं आत्मैव, ततः कर्मनिषेधः स्फुट एव, किं च—अमूर्तस्य आत्मनो मूर्त्तेन कर्मणा अनुग्रह उपघातश्च कथं भवति?यथा आकाशस्य चंदनादिना मंडनं खड्गादिना खंडनं च न संभवति, तस्मात्कर्म नास्ति इति तव चेतसि वर्त्तते, परं हे-अग्निभूते ! नायमर्थः समर्थः, यत इमानि पदानि पुरुषस्तुतिपराणि, यथा—त्रिविधानि वेदपदानि, कानिचिद्विधिप्रतिपादकानि, यथा "स्वर्गकामोऽग्निहोत्रं जुहुयादित्यादीनि," कानिचिदनुवादपराणि, यथा "द्वादशमासाः संवत्सर" इत्यादीनि,कानिचित्स्तुतिपराणि,यथा "इदं पुरुष एवेत्यादीनि," ततोऽनेन पुरुषस्य महिमा प्रतीयते, न तु कर्माद्यभावः, यथा—"जले विष्णुः स्थले विष्णु—र्विष्णुः पर्वतमस्तके। सर्वभूतमयो विष्णु—स्तस्माद्विष्णुमयं जगत् ॥१॥" अनेन वाक्येन विष्णोर्महिमा प्रतीयते, न तु अन्यवस्तूनां अभावः । किं च—अमूर्त्तस्यात्मनो मूर्त्तेन कर्मणा कथं अनुग्रहोपघातौ ? तदपि अयुक्तं, यत्

गरूपा संज्ञा अवतिष्ठते, वर्तमानोपयोगेन तस्या नाशितत्वादिति । अपरं च "स वै अयं आत्मा ज्ञानमयः" इत्यादि– तथा–"द द द" कोऽर्थः ? दमो दानं दया इति दकारत्रयं यो वेत्ति स जीवः। किंच–विद्यमानभोक्तृकं इदं शरीरं, भोग्यत्वात्, ओदनादिवत्, इत्याद्यनुमानेनाऽपि, तथा–"क्षीरे घृतं तिले तैलं, काष्ठेऽग्निः सौरभं सुमे। चंद्रकांते सुधा यद्व–त्तथात्मांगगतः पृथक् ॥ १ ॥ एवं च प्रभुवचनैः छिन्नसंदेहः श्रीइंद्रभूतिः पंचशतपरिवारः प्रव्रजितः । तत्क्षणाच्च "उप्पज्जेइ वा (१) विगमेइ वा (२) धुवेइ वा (३)" इति प्रभुवदनात्त्रिपदीं प्राप्य द्वादशांगीं रचितवान्, इति प्रथमो गणधरः ॥१॥

तं च प्रव्रजितं श्रुत्वा, दध्यौ तद्बांधवोऽपरः । अपि जातु द्रवेदद्रि–र्हिमानी प्रज्वलेदपि ॥ १ ॥
वह्निः शीतः स्थिरो वायु', संभवेन्नतु बांधवः । हारयेदिति पप्रच्छ, लोकानश्रद्दधत्कृशम् ॥ २ ॥
ततश्च निश्चये ज्ञाते, चिंतयामास चेतसि। गत्वा जित्वा च तं धूर्त्तं, वालयामि सहोदरम् ॥ ३ ॥
सोऽप्येवमागतः शीघ्रं, प्रभुणाऽऽभाषितस्तथा । संदेहं तस्य चित्तस्थं, व्यक्तीकृत्याऽवदद्विभुः ॥ ४ ॥
हे गौतमाग्निभूते ! कः, संदेहस्तव कर्मणः ?। कथं वा वेदतत्त्वार्थं, विभावयसि ? न स्फुटम् ॥ ५ ॥

त्वं तावत् एतेषां पदानां अर्थमेवं करोषि, यत् विज्ञानघनो गमनागमनादिचेष्टावान् आत्मा एव एतेभ्यो भूतेभ्यः पृथिव्यप्तेजोवाय्वाकाशेभ्यः समुत्थाय प्रकटीभूय मद्यांगेभ्यो मदशक्तिरिव, ततस्तानि भूतान्येव अनुविनश्यति जीवः, तत्रैव विलयं याति, जले बुद्बुद इव, ततो भूतातिरिक्तस्य आत्मनोऽभावात् न प्रेत्यसंज्ञाऽस्ति, मृत्वा पुनर्जन्म नास्तीति। परमयुक्तोऽयमर्थः, शृणु तावदेतेषामर्थं, विज्ञानघन इति कोऽर्थः ? विज्ञानघनो ज्ञानदर्शनोपयोगात्मकं विज्ञानं, तन्मयत्वादात्माऽपि विज्ञानघनः, प्रतिप्रदेशमनंतज्ञानपर्यायात्मकत्वात्, स च विज्ञानघन उपयोगात्मक आत्मा कथंचिद्भूतेभ्यस्तद्विकारेभ्यो वा घटादिभ्यः समुत्तिष्ठते उत्पद्यते इत्यर्थः, घटादिज्ञानपरिणतो हि जीवो घटादिभ्य एव हेतुभूतेभ्यो भवति, घटादिज्ञानपरिणामस्य घटादिवस्तुसापेक्षत्वात्, एवं च एतेभ्यो भूतेभ्यो घटादिवस्तुभ्यस्तत्तदुपयोगतया जीवः समुत्थाय समुत्पद्य तान्येव अनुविनश्यति, कोऽर्थः ? तस्मिन् घटादौ वस्तुनि नष्टे व्यवहिते वा जीवोऽपि तदुपयोगरूपतया नश्यति, अन्योपयोगरूपतया उत्पद्यते, सामान्यरूपतया वा अवतिष्ठते, ततश्च न प्रेत्यसंज्ञाऽस्ति, कोऽर्थः ? न प्राक्तनी घटाद्युपयो-

एकेनाऽविजितेनाऽपि, मानहानिस्तु का मम ?। जगज्जैत्रस्य किं नाम, करिष्यामि च सांप्रतम् ॥५॥
अविचारितकारित्वं, अहो ! मे मंददुर्द्धियः। जगदीशावतारं यत्, जेतुमेनं समागतः ॥ ६ ॥
अस्याग्रेऽहं कथं वक्ष्ये, पार्श्वे यास्यामि वा कथम्?। संकटे पतितोऽस्मीति, शिवो रक्षतु मे यशः! ॥७॥
कथंचिदपि भाग्येन, चेन्नवेदत्र मे जयः। तदा पंडितमूर्द्धन्यो, भवामि भुवनत्रये ! ॥ ८ ॥
इत्यादि चिंतयन्नेष, सुधामधुरया गिरा। आभाषितो जिनेन्द्रेण, नामगोत्रोक्तिपूर्वकम् ॥ ९ ॥
हे गौतमेंद्रभूते ! त्वं, सुखेनागतवानसि ?। इत्युक्तेऽचिंतयद्वेत्ति, नामाऽपि किमसौ मम ? ॥ १० ॥
जगत्त्रितयविख्यातं, को वा नाम न वेत्ति ? माम्। जनस्याबालगोपालं, प्रच्छन्नः किं दिवाकरः ? ॥११॥
प्रकाशयति गुप्तं चे-त्संदेहं मे मनःस्थितम्। तदा जानामि सर्वज्ञ-मन्यथा तु न किंचन ॥ १२ ॥
चिंतयंतमिति प्रोचे, प्रभुः को जीवसंशयः ?। विभावयसि नो वेद-पदार्थं शृणु तान्यथ ॥ १३ ॥
समुद्रो मथ्यमानः किं ? गंगापूरोऽथवा किमु ?। आदिब्रह्मध्वनिः किं ? वा, वीरवेदध्वनिर्विभो ॥१४॥
वेदपदानि च "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति, न प्रेत्यसंज्ञाऽस्तीति"

लक्षणे मम दक्षत्वं, साहित्ये संहिता मतिः । तर्के कर्कशताऽत्यर्थं, क्व शास्त्रे नास्ति मे श्रमः ? ॥ ५ ॥
अभेद्यं किमु वज्रस्य, किमसाध्यं महात्मनाम् । क्षुधितस्य न किं खाद्यं, किं न वाच्यं खलस्य च ॥६॥
तथा ममाऽपि त्रैलोक्य–जित्वरस्य महौजसः । अजेयं किमिवास्तीह, तद्गच्छामि जयाम्यमुम् ॥७॥
इत्यादि चिंतयन्प्रभु–मवेक्ष्य सोपानसंस्थितो दध्यौ !। किं ब्रह्मा किं विष्णुः,सदाशिवः शंकरः किंवा?॥१॥

चंद्रः किं ? स न यत् कलंककलितः सूर्योऽपि नो तीव्ररुक्,
मेरुः किं ? न स यन्नितांतकठिनो विष्णुर्न यत्सोऽसितः ।
ब्रह्मा किं ? न जरातुरः स च जराभीरुर्न यत्सोऽतनु–
र्ज्ञातं दोपविवर्जिताखिलगुणाकीर्णोन्तिमस्तीर्थकृत् ॥ २ ॥

हेमसिंहासनासीनं, सुरराजनिषेवितम् ॥ दृष्ट्वा वीरं जगत्पूज्यं, चिंतयामास चेतसि ॥ ३ ॥
कथं मया महत्वं हा !, रक्षणीयं पुरार्जितम् ॥ प्रासादं कीलिकाहेतो–र्भंक्तुं को नाम वांछति ? ॥४॥

वादिसुरइंद, वादिगरुडगोविंद, वादिजनराजान, वादिकंसकाहान, वादिहरिणहरि, वादिज्वरधन्वंतरि, वादियूथमल्ल, वादिहृदयशल्य, वादिगणजीपक, वादिशलभदीपक, वादिचक्रचूडामणि, पंडितशिरोमणि, विजितानेकवाद, सरस्वतीलब्धप्रसाद, " इत्यादिविरुदवृंदमुखरितदिक्चक्रैः पंचभिः छात्रशतैः परिवृत इंद्रभूतिर्वीरसमीपं गच्छंश्चिंतयामास, अहो! धृष्टेनानेन किमेतत्कृतम्? यदहं सर्वज्ञाटोपेन प्रकोपितः! यतः—

"समीराभिमुखस्थेन, दवाग्निर्ज्वालितोऽमुना। कपिकच्छूलतादेह—सौख्यायालिंगिता ननु ॥१॥"

भवतु! किमेतेन? अधुना निरुत्तरीकरोमि! यतः—

तावद्गर्जति खद्योत-स्तावद्गर्जति चंद्रमाः। उदिते तु सहस्रांशौ, न खद्योतो न चंद्रमाः ॥ २ ॥

सारंगमातंगतुरंगपूगाः, पलाय्यतामाशु वनादमुष्मात्।
साटोपकोपस्फुटकेसरश्री—र्मृगाधिराजोऽयमुपेयिवान् यत् ॥ ३ ॥

मम भाग्यभराद्वा, वाद्ययं समुपस्थितः। अद्य तां रसनाकंडू— मपनेष्ये विनिश्चितम् ॥ ४ ॥

पीलयतस्तिलः कश्चि-द्दलतश्च यथा कणः । सूडयतस्तृणं किंचि-दगस्तेः पिबतः सरः ॥ १२ ॥
मर्द्दयतस्तुषः कोऽपि, तद्वदेष ममाऽभवत् । तथाऽपि सासहि नहि, मुधा सर्वज्ञवादिनम् ॥ १३ ॥
एकस्मिन्नजिते ह्यऽस्मिन्, सर्वमप्यऽजितं भवेत् । एकदा हि सती लुप्त-शीला स्यादसती सदा ॥१४॥
चित्रं चैवं त्रिजगति, सहस्रशो निर्जिते मया वादैः।क्षिप्रचटीस्थाल्यामिव,कंकटुकोऽसौ स्थितो वादी॥१५॥
अस्मिन्नजिते सर्वं, जगज्जयोद्भूतमपि यशो नश्येत्। अल्पमपि शरीरस्थं, शल्यं प्राणान्वियोजयति ॥१६॥
यतः-छिद्रे स्वल्पेऽपि पोतः किं, पाथोधौ न निमज्जति? । एकस्मिन्निष्टके कृष्टे, दुर्गः सर्वोऽपि पात्यते ॥१७॥

इत्यादि विचिंत्य विरचितद्वादशतिलकः स्वर्णयज्ञोपवीतविभूषितः स्फारपीतांबराडंबरः कैश्चित्पुस्तकपाणिभिः कैश्चित्कमंडलुपाणिभिः कैश्चिद्दर्भपाणिभिः "सरस्वतीकंठाभरण, वादिविजय लक्ष्मीशरण, वादिमदगंजन, वादिमुखभंजन, वादिगजसींह, वादीश्वरलीह, वादिसिंह अष्टापद, वादिविजयविशद, वादिवृंदभूमिपाल, वादिशिरकाल, वादिकदलीकृपाण, वादितमभाण, वादिगोधूमघरट्ट, मर्दितवादिमरट्ट, वादिघटमुद्गर, वादिघूकभास्कर, वादिसमुद्रागस्ति, वादितरु उन्मूलनहस्ति,

न क्षमे क्षणमात्रं तु, तं सर्वज्ञं कदाचन । तमस्तोममपाकर्तुं, सूर्यो नैव प्रतीक्षते ॥ ३ ॥
वैश्वानरः करस्पर्शं, केसरोल्लुंचनं हरिः । क्षत्रियश्च रिपुक्षेपं, न सहंते कदाचन ॥ ४ ॥
मया हि येन वादीन्द्रा–स्तूष्णीं संस्थापिताः समे । गेहेशूरतरः क्वाऽसौ, सर्वज्ञो मत्पुरो भवेत् ? ॥५॥
शैला येनाऽग्निना दग्धाः, पुरः के तस्य पादपाः । उत्पाटिता गजा येन, का वायोस्तस्य पुंभिकाः ॥६॥

किंच–गता गौडदेशोद्भवा दूरदेशं, भयाज्जर्जरा गौर्जराश्चासमीयुः ।
मृता मालवीयास्तिलांगास्तिलंगो–द्भवा जज्ञिरे पंडिता मद्भयेन ॥ ७ ॥
अरे लाटजाताः क्व याताः प्रणष्टाः, पटिष्टा अपि द्राविडा व्रीडयार्त्ताः ।
अहो ! वादिलिप्सातुरे मय्यमुष्मिन् , जगत्युत्कटं वादिदुर्भिक्षमेतत् ॥ ८ ॥

तस्य ममाग्रे कोऽसौ, वादी सर्वज्ञमानमुद्वहति । इति तत्र गंतुमुत्कं, तमग्निभूतिर्जगादेवम् ॥ ९ ॥
किं तत्र वादिकीटे, तव प्रयासेन यामि यंधोऽहम् । कमलोन्मूलनहेतो–र्नेतव्यः किं सुरेंद्रगजः ? ॥१०॥
अकथयदथेंद्रभूति–र्यद्यपि मच्छात्रजय्य एवाऽसौ । तदपि प्रवादिनाम, श्रुत्वा स्थातुं न शक्नोमि ॥११॥

च विहाय तत्समीपं गच्छंति ! ! "अहो ! सुराः कथं भ्रांताः, तीर्थांभ इव वायसाः । कमलाकरव-ऋकाः, मक्षिकाश्चंदनं यथा ॥ १ ॥ करभा इव सद्वृक्षान्, क्षीरान्नं शूकरा इव । अर्कस्यालोकवत् घूका-स्त्यक्त्वा यागं प्रयांति यत् ! ॥ २ ॥" अथवा यादृशोऽयं सर्वज्ञस्तादृशा एवैते सुराः ! अनुरूप एव संयोगः ! यतः- "पश्यानुरूपमिंदि-न्दिरेण[1] माकंद[2]शेखरो मुखरः । अपि च पिचुमंद[3]मुकुले, मौकुलि[4]कुलमाकुलं मिलति ॥ १ ॥" तथाऽपि नाऽहमेतस्य सर्वज्ञाटोपं सहे ! यतः-"व्योम्नि सूर्यद्वयं किं स्यात् ?, गुहायां केसरिद्वयम् । प्रत्याकारे[5] च खड्गौ द्वौ, किं सर्वज्ञावहं स च ?॥१॥" ततो भगवंतं वंदित्वा प्रतिनिवर्तमानान् सोपहासं जनान्पप्रच्छ, भो भोः ! दृष्टः स सर्वज्ञः ? कीदृग्रूपः ? किंस्वरूपः ? इति, जनैस्तु-"यदि त्रिलोकी गणनापरा स्या-त्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारेपरार्द्धं गणितं यदि स्या-द्गणेयनिःशेषगुणोऽपि स स्यात् ॥ १ ॥" इत्याद्युक्ते सति स दध्यौ ! ॥

नूनमेष महाधूर्त्तो, मायायाः कुलमंदिरम् । कथं लोकः समस्तोऽपि, विभ्रमे पातितोऽमुना ॥ २ ॥

---

१ इन्दिन्दिरेण भ्रमरेण । २ आम्रशेखरः । ३ निंबवृक्षे । ४ वायसकुलम् । ५ कोषे ।

हसद्भावेऽपि सर्वज्ञत्वाभिमानक्षतिभयात्परस्परं न पृच्छंति, एवं एते तत्परिवारभूताश्च चतुश्चत्वारिंशच्छतानि (४४००) द्विजाः, अन्येऽपि उपाध्याय–शंकर, ईश्वर, शिवजी। जानी–गंगाधर, महीधर, भूधर लक्ष्मीधर,। पिंड्या– विष्णु, मुकुंद, गोविंद, पुरुषोत्तम, नारायण। दुवे–श्रीपति, उमापति, विद्यापति, गणपति, जयदेव। व्यास–महादेव, शिवदेव, गगापति, गौरीपति। त्रिवाडी–श्रीकंठ, नीलकंठ, हरिहर, रामजी। राडल–मधुसूदन, नरसिंह, कमलाकर। जोसी–पूंनो, रामजी, शिवराम, इत्याद्यो मिलिताः संति ॥

अत्रांतरे च भगवन्नमस्यार्थं आगच्छतः सुरासुरान्विलोक्य तेऽचिंतयन्, अहो ! यज्ञस्य महिमा ! यदेते सुराः साक्षात्समागताः!। अथ तान् यज्ञमंडपं विहाय प्रभुपार्श्वं च गच्छतो विज्ञाय द्विजाः विषेदुः! ततोऽमी सर्वज्ञं वंदितुं यांतीति जनश्रुत्या श्रुत्वा इंद्रभूतिः सामर्षश्चिंतयामासिवान्, अहो ! मयि सर्वज्ञे सत्यपि अपरोऽपि स्वं सर्वज्ञं ख्यापयति! दुःश्रवं एतत्कर्णकटु! कथं नाम श्रूयते! किंच कदाचित्कोऽपि मूर्ख. केनचिद्धूर्तेन वंच्यते! अनेन तु सुरा अपि वंचिताः! यदेवं यज्ञमंडपं मां सर्वज्ञं

अकारप्रश्लेषात् सर्वअजीवानां धर्मास्तिकायादीनामपि सर्वपर्यायान् जानन् पश्यंश्च विहरतीति व्याख्येयम् ॥ १२१ ॥

इतश्च तस्मिन्नवसरे मिलितेषु सुरासुरेषु स्थले वृष्टिमिव निष्फलां देशनां क्षणं दत्वा प्रभुः अपापापुर्यां महसेनवने जगाम, तत्र च यज्ञं कारयतः सोमिलविप्रस्य गृहे वहवो ब्राह्मणा मिलिताः संति, तेषु च इंद्रभूति (१) अग्निभूति (२) वायुभूति (३) नामानस्त्रयः सहोदराश्चतुर्दशविद्याविशारदाः क्रमेण जीव (१) कर्म (२) तज्जीवतच्छरीर (३) संदेहवंतः पंचशतपरिवाराः संति, एवं व्यक्तः (४) सुधर्मा (५) चेति द्वौ द्विजौ तावत्परिवारौ तथैव विद्वांसौ क्रमात् पंचभूतानि संति न वेति (४) यो यादृशः स तादृश (५) इति च संदेहवंतौ, तादृशौ एव च मंडित (६) मौर्यपुत्र (७) नामानौ बांधवौ सार्द्धत्रिशतपरिवारौ क्रमात् बंध (६) देव (७) विषयकसंदेहवंतौ, तथा अकंपितः (८) अचलभ्राता (९) मैतार्यः (१०) प्रभास (११) श्चेति चत्वारो द्विजाः प्रत्येकं त्रिशतपरिवाराः क्रमेण नैरयिक (८) पुण्य (९) परलोक (१०) मोक्ष (११) संदेहभाजस्तत्रागताः संति, ते चैकादशाऽपि द्विजा एकैकसंदे-

उपपातो देवलोकनरकेपूत्पत्तिः, तक्कं मणो तेषां सर्वजीवानां संबंधि तर्कं ईदृशं यन्मनः माणसियं मानसिकं मनसि चिंतितं भुत्तं भुक्तं अशनफलादि कडं कृतं चौर्यादि पडिसेवियं प्रतिसेवितं मैथुनादि आवीकम्मं आविःकर्म प्रकटकृतं रहोकम्मं रहःकर्म प्रच्छन्नं कृतं, एतत्सर्वं सर्वजीवानां भगवान् जानातीति योजना, पुनः किंविशिष्टः प्रभुः ? अरहा न विद्यते रहः प्रच्छन्नं यस्य, त्रिभुवनस्य करामलकवद्दृष्टत्वात् अरहाः अरहस्सभागी रहस्यं एकांतं तन्न भजते इति अरहस्यभागी, जघन्यतोऽपि कोटिसुरसेव्यत्वात् तं तं कालं मणवयकायजोगे तस्मिन् तस्मिन् काले मनोवचनकाययोगेषु यथार्हं वर्तमानानां सर्वलोके सर्वजीवानां सर्वभावान् सर्वपर्यायान् जानन् पश्यंश्च विहरति। 'सव्वजीवाणं' इत्यत्र

चवणं, उववायं, तक्कं मणो, माणसियं, भुत्तं, कडं, पडिसेवियं, आवीकम्मं, रहोकम्मं, अरहा, अरहस्सभागी, तं तं कालं मणवयणकायजोगे वट्टमाणाणं सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरइ ॥ १२१ ॥

तानि, तत एवंविधे केवलवरज्ञानदर्शने समुत्पन्ने ॥१२०॥ तएणं समणे भगवं महावीरे ततो ज्ञानोत्पत्त्यनंतरं श्रमणो भगवान्महावीरः अरहा जाए अर्हन् जातः अशोकादिप्रातिहार्यपूजायोग्यो जातः, पुनः कीदृशः ? जिणे केवली सव्वण्णू सव्वदरिसी जिनो रागद्वेषजेता, केवली, सर्वज्ञः, सर्वदर्शी सदेवमणुआसुरस्स लोगस्स देवमनुजासुरसहितस्य लोकस्य परियागं पर्यायं इत्यत्र जातावेकवचनं

**पुण्णे केवलवरणाणदंसणे समुप्पण्णे ॥ १२० ॥ तएणं समणे भगवं महावीरे अरहा जाए जिणे केवली सव्वण्णु सव्वदरिसी सदेवमणुयासुरस्स लोगस्स परियागं जाणइ पासइ, सव्वलोए सव्वजीवाणं आगइं, गइं, ठिइं,**

ततः पर्यायान् जाणइ जानाति पासइ पश्यति च साक्षात्करोति, तर्हि किं देवमनुजासुराणां एव पर्यायमात्रं एव जानाति ? इत्याह । सव्वलोए इत्यादि–सर्वलोके सर्वजीवानां आगतिं भवांतरात्, गतिं भवांतरे, स्थितिं तद्भवसत्कं आयुः कायस्थितिं वा, च्यवनं देवलोकात्तिर्यङ्नरेषु अवतरणं,

सामंते नातिदूरे नातिसमीपे इत्यर्थः, सामागस्स श्यामाकस्य गृहपतेः कौटुंबिकस्य कट्ठकरणंसि क्षेत्रे, सालपादपस्य अधो गोदोहिकया उत्कुटिकया निषद्यया आतापनया आतापयतः प्रभोः छट्ठेणं इत्यादि–सुबोधं, नवरं ज्झाणंतरियाए वट्टमाणस्स ध्यानस्य अंतरे मध्ये भागे वर्तमानस्य, कोऽर्थः ? शुक्ल-

सामागस्स गाहावइस्स कट्ठकरणंसि सालपायवस्स अहे गोदोहियाए उक्कुडियनिसिज्जाए आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं णक्खत्तेणं जोगमुवागएणं ज्झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे णिवाघाए णिरावरणे कसिणे पडि-

ध्यानं चतुर्धा, पृथक्त्ववितर्कं सविचारं (१) एकत्ववितर्कं अविचारं (२) सूक्ष्मक्रियं अप्रतिपाति (३) उच्छिन्नक्रियं अनिवर्ति (४) एतेषां मध्ये आद्यभेदद्वये ध्याते इत्यर्थः, अणते इत्यादीनि पूर्वं व्याख्या-

छउमत्थपरियाओ ॥ १ ॥" इदं च सर्वं तपो भगवता निर्जलं एव कृतं, न कदापि च नित्यभक्तं चतुर्थभक्तं च कृतं, एवं च त्रयोदशस्य संवत्सरस्य अंतरा मध्ये वर्तमानस्य योऽसौ ग्रीष्मकालस्य द्वितीयो मासः, चतुर्थः पक्षः वैशाखशुक्लपक्षः, तस्य वैशाखशुद्धस्य दशमीदिवसे, वैशाखशुद्धदशम्यामित्यर्थः, पाईणगामिणीए छायाए पूर्वगामिन्यां छायायां सत्यां, पोरिसीए पाश्चात्यपौरुष्यां अभिणिविट्टाए

पाईणगामिणीए छायाए पोरिसीए अभिणिविट्टाए पमाणपत्ताए,
सुव्वएणं दिवसेणं, विजएणं मुहुत्तेणं, जंभियगामस्स णगरस्स
बहिया उज्जुवालियाए णईए तीरे वेयावत्तस्स चेइयस्स अदूरसामंते

अभिनिर्वृत्तायां जातायां पमाणपत्ताए प्रमाणप्राप्तायां नतु न्यूनाधिकायां, सुव्रतनामके दिवसे, विजयनाम्नि मुहूर्ते जंभियगामस्स णगरस्स जृंभिकग्रामनामकस्य नगरस्य वहियत्ति वहिस्तात् उज्जु वालिआए ऋजुपालिकाया नद्यास्तीरे वेयावत्तस्स व्यावृत्तं नाम जीर्णं एवंविधं यच्चैत्यं व्यंतरायतनं तस्य अदूर-

पणानि, द्वे त्रिमासक्षपणे, द्वे सार्द्धद्विमासक्षपणे, षट् द्विमासक्षपणानि, द्वे सार्द्धैकमासक्षपणे, द्वादश मासक्षपणानि, द्वासप्ततिः (७२) पक्षक्षपणानि, भद्रप्रतिमा दिनद्वय (२) माना, महाभद्रप्रतिमा दिन-चतुष्क (४) माना, सर्वतोभद्रप्रतिमा दशदिनमाना, एकोनत्रिंशदधिकं शतद्वयं (२२९) षष्ठाः, द्वादश

**क्कंताइं तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स जे से गिम्हाणं दुच्चे मासे, चउत्थे पक्खे, वइसाहसुद्धे तस्स णं वइसाहसुद्धस्स दसमीपक्खेणं,**

(१२) अष्टमाः, एकोनपंचाशदधिकं शतत्रयं(३४९)पारणाः, दीक्षादिन मेकं (१)॥ सुखावबोधाय यंत्रकम् ॥

| छ मासी तप | छ मासी तप | चउ मासी | त्रि मासी | अढी मासी | दो मासी | दोढ मासी | मासक्षमण | पासक्षमण | भद्र प्रतिमा | महाभद्र प्रतिमा | सर्वतोभद्र प्रतिमा | छट्ठ | अट्ठम | पारणा दिन | दीक्षा दिन | सर्वाग्रं पर्व १२ मास |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ पंचदिन न्यून | ९ | २ | २ | ६ | २ | १२ | ७२ | दिन २ | दिन ४ | दिन १० | २२९ | १२ | ३४९ | १ | ६ दिन १५ |

ततश्चेदं जातम् । "बारस चेवय वासा, मासा छच्चेव अद्धमासं च । वीरवरस्स भगवओ, एसो

वेणं आर्जवं मायाया अभावस्तेन मद्दवेणं मार्द्दवं मानाभावस्तेन लाघवेणं लाघवं द्रव्यतः अल्पोपधित्वं भावतो गौरवत्रयत्यागस्तेन खंतीए इत्यादि—क्षांतिः क्षमा क्रोधाभावस्तया, मुक्तिर्लोभाभावस्तया, गुप्तिर्मनोगुप्ताद्या तया, तुष्टिर्मनःप्रसत्तिस्तया, अणुत्तरेण अनुपमेन सच्चत्ति सत्यं संजमत्ति संयमः प्राणिदया तवत्ति तपो द्वादशप्रकारं, एतेषां यत् सुचरियत्ति सुचरितं सदाचरणं तेन कृत्वा सोवचि-

**मद्दवेणं, अणुत्तरेणं लाघवेणं, अणुत्तराए खंतीए, अणुत्तराए मुत्तीए, अणुत्तराए गुत्तीए, अणुत्तराए तुट्ठीए, अणुत्तरेणं सच्चसंजमतवसुचरियसोवचियफलपरिणिव्वाणमग्गेणं अप्पाणं भावेमाणस्स दुवालस संवच्छराइं वइ-**

यफलपरिणिव्वाणमग्गेणं सोपचयं पुष्टं फलं मुक्तिलक्षणं यस्य एवंविधो यः परिनिर्वाणमार्गो रत्नत्रयरूपस्तेन तदेवं उक्तेन सर्वगुणसमूहेन आत्मानं भावयतः दुवालस संवच्छराइं वइक्कंताइं द्वादश संवत्सरा व्यतिक्रांताः, ते चैवं—एकं षण्मासक्षपणं, द्वितीयं षण्मासक्षपणं पंचदिनन्यूनं, नव चतुर्मासक्ष-

परलोके अप्रतिबद्धः, अत एव जीवियमरणे जीवितमरणयोर्विषये णिरवकंखे निरवकांक्षो वांछारहितः, संसारपारगामी, कर्मशत्रुनिर्घातनार्थं, अब्भुट्ठिए अभ्युत्थितः सोद्यमः, एव अनेन क्रमेण स भगवान् विहरइ विहरति आस्ते ॥ ११९ ॥ तस्सणं इत्यादितः समुप्पण्णे इत्यंतं, तत्र तस्य भगवतः

अप्पडिबद्धे,जीवियमरणे णिरवकंखे,संसारपारगामी, कम्मसत्तुणिग्घायणट्ठाए अब्भुट्ठिए एवं चणं विहरइ ॥११९॥ तस्स णं भगवंतस्स अणुत्तरेणं णाणेणं, अणुत्तरेणं दंसणेणं, अणुत्तरेणं चरित्तेणं, अणुत्तरेणं आलएणं, अणुत्तरेणं विहारेणं, अणुत्तरेणं वीरिएणं, अणुत्तरेणं अज्जवेणं, अणुत्तरेणं

अणुत्तरेणं णाणेणं इत्यादि, अनुत्तरेण अनुपमेन, ज्ञानादीनि च प्रसिद्धानि, नवरं आलएणं आलयेन स्त्रीपंडादिरहितवसतिसेवनेन विहारेणं विहारेण देशादिषु भ्रमणेन वीरिएणं वीर्येण पराक्रमेण अज्ज-

तत्र तस्सणं भगवओ तस्य भगवतः णो एवं भवइ एवं पूर्वोक्तस्वरूपेषु द्रव्य (१) क्षेत्र (२) काल (३) भावेषु (४) कुत्रापि प्रतिबंधो नास्तीति ॥११८॥ सेणं इत्यादितः विहरइ इति यावत्, स भगवान् वासावासवज्जं वर्षावासश्चतुर्मासी तां वर्जयित्वा अष्टौ ग्रीष्महेमंतसंबंधिनो मासान् गामे एगराइए ग्रामे एकरात्रिकः एकरात्रिवसनस्वभावः णगरे पंचराइए नगरे पंचरात्रिकः, पुनः किं० ? वासीचंदणत्ति

वा ( ग्रं-६००) तस्स णं भगवंतस्स णो एवं भवइ ॥ ११८ ॥ से णं भगवं वासावासवज्जं अट्ठ गिम्हहेमंतिए मासे गामे एगराइए, णगरे पंचराइए, वासीचंदणसमाणकप्पे, समतिणमणिलेट्ठुकंचणे,समसुहदुक्खे,इहपरलोग-

वासी सूत्रधारस्य काष्ठच्छेदनोपकरणं, चंदनं प्रसिद्धं, तयोर्द्वयोर्विषये समाणकप्पे समानकल्पस्तुल्याध्यवसायः, पुनः किं० ? समतिणमणि इत्यादि, तृणादीनि प्रतीतानि, नवरं लेष्टुः पाषाणः, समानि तुल्यानि तृणमणिलेष्टुकांचनानि यस्य स तथा, एवं समसुखदुःखः इहपरलोए इत्यादि, इहलोके

सप्तसप्ततिलवमानः, अहोरात्रादय. संवत्सरांताः प्रतीताः, अण्णयरे अन्यतरस्मिन्वा दीर्घकालसंयोगे युगपूर्वांगपूर्वादौ, भावओ भावतः कोहे वा इत्यादि—क्रोधादयः प्रसिद्धास्तत्र पिज्जेवा प्रेम्णि दोसेवा द्वेषे अप्रीतौ, कलहे वाग्युद्धे अब्भक्खाणेवा अभ्याख्याने मिथ्याकलंकदाने पेसुण्णे वा पैशून्ये प्रच्छन्नं पर-

संवच्छरे वा अण्णतरे वा दीहकालसंजोगे, भावओ कोहे वा माणे वा मायाए
वा लोभे वा भए वा हासे वा पिज्जे वा दोसे वा कलहे वा अब्भक्खाणे वा
पेसुण्णे वा परपरिवाए वा अरइरई वा मायामोसे वा जाव मिच्छादंसणसल्ले

दोषप्रकटने परपरिवाए वा परपरिवादे विप्रकीर्णपरकीयगुणदोषप्रकटने अरइत्ति अरतिमोहनीयोदयाच्चित्तोद्वेगोऽरतिः रइत्ति रतिमोहनीयोदयाच्चित्तप्रीतिस्तत्र मायामोसे वा मायया युक्ता मृषा मायामृषा तत्र मिच्छादंसणसल्लेवा मिथ्यादर्शनं मिथ्यात्वं तदेव अनेकदुःखहेतुत्वाच्छल्यं मिथ्यादर्शनशल्यं

स्थानं तत्र वा, गृहे वा, अंगणं गृहाग्रभागस्तत्र वा, नहे वा नभ आकाशं तत्र वा, तथा— कालतः समए वा समयः सर्वसूक्ष्मः कालः उत्पलपत्रशतवेधजीर्णपट्टशाटिकापाटनादिदृष्टांतसाध्यस्तत्र, आव-

तस्स भगवंतस्स कत्थइ पडिबंधे भवइ, से य पडिबंधे चउव्विहे पण्णत्ते, तंजहा— दव्वओ खित्तओ कालओ भावओ, दव्वओ सचित्ताचित्तमीसिएसु दव्वेसु, खित्तओ गामे वा णगरे वा अरण्णे वा खित्ते वा खले वा घरे वा अंगणे वा नहे वा, कालओ समए वा आवलियाए वा आणपाणुए वा थोवे वा खणे वा लवे वा मुहुत्ते वा अहोरत्ते वा पक्खे वा मासे वा ऊऊ वा अयणे वा

लियाए वा आवलिका असंख्यातसमयरूपा, आणपाणुए वा आनप्राणौ उच्छ्वासनिःश्वासकालः, थोवेवा स्तोकः सप्तोच्छ्वासमानः खणेवा क्षणे घटीषष्ठभागे वा लवेवा लवः सप्तस्तोकमानः मुहुत्ते वा मुहूर्तः

कांत्या, भावतो ज्ञानेन, जच्चकणगंव इत्यादि–जात्यकनकमिव जातं रूपं स्वरूपं यस्य स तथा, यथा किल कनकं मलज्वलनेन दीप्तं भवति तथा भगवतोऽपि स्वरूपं कर्ममलविगमेन अतिदीप्तं अस्तीति भावः, वसुंधरा इव पृथ्वीव सर्वस्पर्शसहः, यथा हि पृथ्वी शीतोष्णादि सर्वं समतया सहते तथा भगवानपि, सुहुयत्ति सुष्ठु हुतो घृतादिभिः सिक्त एवंविधो यो हुयासणत्ति हुताशनोऽग्निस्तद्वत् तेजसा

गंभीरे, चंदो इव सोमलेसे, सूरो इव दित्ततेए, जच्चकणगंव जायरूवे, वसुंधरा इव सवफासविसहे, सुहुयहुयासणे इव तेयसा जलंते, नत्थि णं

ज्वलन्, नत्थिणं इत्यादि–नास्त्ययं पक्षो यत्तस्य भगवतः कुत्राऽपि प्रतिबंधो भवति, तस्य भगवतः कुत्राऽपि प्रतिबंधो नास्तीति भावः, स च चतुर्विधः प्रज्ञप्तस्तद्यथा–द्रव्यतः, क्षेत्रतः, कालतः, भावतश्च, तत्र द्रव्यं त्रिधा, सचित्तं वनितादि, अचित्तं आभरणादि, मिश्रं अलंकृतवनितादि तेषु, तथा क्षेत्रतः काऽपि ग्रामे वा, नगरे वा, अरण्ये वा, क्षेत्रं धान्यनिष्पत्तिस्थानं तत्र वा, खलं धान्यतुषपृथक्करण-

भगवतोऽपि कर्मलेपो न लगतीत्यर्थः, कूर्म इव गुप्तेन्द्रियः; खड्गिविषाणमिव एकजातः, यथा खड्गिनः श्वापदविशेषस्य विषाणं एकं भवति तथा भगवानपि, रागादिना सहायेन च रहितत्वात् , विहग इव विप्रमुक्तः, मुक्तपरिकरत्वात् अनियतनिवासाच्च, भारुंडपक्षीव अप्रमत्तः, भारुंडपक्षिणोः किलैकं शरीरं, यतः—
"एकोदराः पृथग्ग्रीवा–स्त्रिपदा मर्त्यभाषिणः। भारुंडपक्षिणस्तेषां, मृतिर्भिन्नफलेच्छया॥१॥" ते चाऽत्यंत

जाए, विहग इव विप्पमुक्के, भारुंडपक्खीव अप्पमत्ते, कुंजरो इव सोंडीरे, वसभो इव जायथामे, सीहो इव दुद्धरिसे, मंदरो इव अप्पकंपे, सागरो इव

अप्रमत्ता एव जीवंतीति तदुपमा, कुंजर इव शौंडीरः, कर्मशत्रून्प्रति शूरः, वृषभ इव जातस्थामा जातपराक्रमः, स्वीकृतमहाव्रतभारोद्वहनं प्रति समर्थत्वात् , सिंह इव दुर्द्धर्षः, परीषहादिश्वापदैरजय्यत्वात् , मंदर इव मेरुरिव अप्रकंपः, उपसर्गवातैः अचलितत्वात् , सागर इव गंभीरः, हर्षविषादादिकारणसद्भावेऽपि अविकृतस्वभावत्वात् , चंद्र इव सौम्यलेश्यः, शांतत्वात् , सूर्य इव दीप्ततेजाः, द्रव्यतो देह-

रहितः छिण्णगंथे छिन्नः त्यक्तो हिरण्यादिग्रंथो येन स तथा णिरुवलेवे निरुपलेपो द्रव्यभावमलाप-
गमेन, तत्र द्रव्यमलः शरीरसंभवः, भावमलः कर्मजनित , अथ निरुपलेपत्वं दृष्टांतैर्द्रढयति, कंसपा-
ईवेत्यादि—कांस्यपात्रीव मुक्त तोयमिव तोयं स्नेहो येन स तथा, यथा कांस्यपात्रं तोयेन न लिप्यते
तथा भगवान् स्नेहेन न लिप्यते इत्यर्थः, तथा शंख इव निरंजनो रंजनं रागाद्युपरंजनं तेन शून्यत्वात्,

थे णिरुवलेवे, कंसपाई इव मुक्कतोए, संखो इव निरंजणे, जीवे इव अप्प-
डिहयगई, गगणमिव णिरालंबणे, वाउव्व अप्पडिबद्धे, सारयसलिलंव सुद्ध-
हियए, पुक्खरपत्तंव निरुवलेवे, कुम्मो इव गुत्तिंदिए, खग्गिविसाणंव एग-

जीव इव अप्रतिहतगतिः सर्वत्रास्खलितविहारित्वात्, गगनमिव निरालंबनः कस्याऽप्याऽऽधारस्य
अनपेक्षणात्, वायुरिव अप्रतिबद्धः एकस्मिन्स्थाने क्वाऽप्यवस्थानाभावात्, शारदसलिलमिव शुद्ध-
हृदयः कालुष्याभावात्, पुष्करपत्रं कमलपत्रं तद्वन्निरुपलेपः, यथा कमलपत्रे जललेपो न लगति तथा

परिष्ठापनात्, एतच्चांत्यसमितिद्वयं भगवतो भांडसिंघानाद्यसंभवेऽपि नामाखंडनार्थमित्थमुक्तम् ॥ एवं मणसमिए इत्यादि–मनोवचःकायेषु समितस्तेषां सम्यक्प्रवर्तक इत्यर्थः, एवं मणगुत्ते इत्यादि मनोवचःकायेषु गुप्तस्तेषां अशुभपरिणामान्निवर्तकः, अत एव गुत्तत्ति गुप्तः गुत्तिंदिए गुप्तेंद्रियः गुत्तबंभयारित्ति गुप्तं वसत्यादिनवगुप्तिविराजितं एवंविधं ब्रह्मचर्यं चरतीति गुप्तब्रह्मचारी, अकोहे इत्यादि–

जल्लपारिट्ठावणियासमिए, मणसमिए वयसमिए कायसमिए, मणगुत्ते वयगुत्ते कायगुत्ते, गुत्ते, गुत्तिंदिए, गुत्तबंभयारी, अकोहे अमाणे अमाए अलोभे संते पसंते उवसंते परिणिव्वुडे अणासवे अममे अकिंचणे छिण्णगं-

क्रोधादिकषायचतुष्टयाभाववान् संते शांतोऽन्तर्वृत्त्या पसंते प्रशांतो बहिर्वृत्त्या उवसंते उपशांतोऽन्तर्बहिश्चोभयतः शांतः, अत एव परिणिव्वुडे परिनिर्वृतः सर्वसंतापवर्जितः अणासवे अनाश्रवः पापकर्मबंधरहितः, हिंसाद्याश्रवद्वारविरतः, अममे ममत्वरहितः अकिंचणे अकिंचनः, किंचनं द्रव्यादि तेन

इत्याद्युक्तमेव ॥११७॥ तएणं इत्यादितः णो एवं भवइ इति पर्यंतं, यत एवं परीषहान् सहते तएणं समणे भगवं महावीरे ततः 'णं' वाक्यालंकृतौ, श्रमणो भगवान् महावीरः अणगारे जाए अनगारो जातः, किंविशिष्टः ? इरियासमिए ईर्यायां गमनागमनादौ समित॰ सम्यक्प्रवृत्त॰ भासासमिए भाषायां भाषणे समितः एसणासमिए एषणायां द्विचत्वारिंशद्दोषवर्जितभिक्षाग्रहणे समितः, आयाणत्ति आदाने

तएणं समणे भगवं महावीरे अणगारे जाए, इरियासमिए, भासासमिए, एसणासमिए,आयाणभंडमत्तणिक्खेवणासमिए,उच्चारपासवणखेलसिंघाण-

ग्रहणे उपकरणादेरिति ज्ञेयं, भंडमत्तणिक्खेवणत्ति भांडमात्रायाः वस्त्राद्युपकरणजातस्य, यद्वा भांडस्य वस्त्रादेर्मृन्मयभाजनस्य वा, मात्रस्य च पात्रविशेषस्य यन्निक्षेपणं मोचनं तत्र च समितः, प्रत्युपेक्ष्य प्रमार्ज्य मोचनात्, उच्चारेत्यादि–उच्चारः पुरीषं, पासवणत्ति प्रश्रवणं मूत्रं, खेलो निष्ठीवनं, सिंघानो नासिकानिर्गतं श्लेष्म, जल्लो देहमलः, एतेषां यत्परिष्ठापनं त्यागस्तत्र समितः सावधानः शुद्धस्थंडिले

नोत्पत्तिः इत्यकथयत् । ततो मेंढिकग्रामे चमरेंद्रः प्रियं पप्रच्छ । ततः षण्मानिग्रामे स्वामिनो बहिः प्रतिमास्थस्य पार्श्वे गोपो वृषान्मुक्त्वा ग्रामं प्रविष्टः, आगतश्च पृच्छति, देवार्य ! क्व गता वृषभाः ? भगवता च मौने कृते रुष्टेन तेन स्वामिकर्णयोः कटशलाके तथा क्षिप्ते यथा परस्परं लग्नाऽग्रे ! अग्रच्छेदनाच्च अदृश्याग्रे जाते ! एतच्च कर्म शय्यापालकस्य कर्णयोस्त्रपुप्रक्षेपेण त्रिपृष्ठभवे उपार्जितं अभूत्, उदितं च वीरभवे ! शय्यापालको भवं भ्रांत्वा अयमेव गोपः संजातः ! ततः प्रभुर्मध्यमाऽपापायां गतस्तत्र प्रभुं सिद्धार्थवणिग्गेहे भिक्षार्थं आगतं निरीक्ष्य खरकवैद्यः स्वामिनं सशल्यं ज्ञातवान्, पश्चात्स वणिक् तेन वैद्येन सहोद्यानं गत्वा संडासकाभ्यां ते शिलाके निर्गमयतिस्म, तदाऽऽकर्षणे च वीरेण आराटिस्तथा मुक्ता यथा सकलमपि उद्यानं महाभैरवं बभूव ! तत्र देवकुलमपि कारितं लोकैः, प्रभुश्च संरोहिण्या औषध्या नीरोगो बभूव, वैद्यवणिजौ स्वर्जग्मतुर्गोपः सप्तमनरकं ! एवं चोपसर्गा गोपेन आरब्धास्तेनैव निष्ठिताश्च । एतेषां च जघन्यमध्यमोत्कृष्टविभाग एवं—जघन्येषूत्कृष्टः कटपूतनाशीतं, मध्यमेषूत्कृष्टं कालचक्रं, उत्कृष्टेषूत्कृष्टं कर्णकीलकर्षणं, इतिउपसर्गाः ॥ एतान्सर्वान्सम्यग्सहते,

मेव युवती भाविनी ! अहं निर्माल्यप्राया ! इति विषण्णचित्ता तां शिरोमुंडननिगडक्षेपणपूर्वं यंत्रमध्ये निरुध्य कापि गता। श्रेष्ठ्यपि कथमपि चतुर्थे दिने तच्छुद्धिं प्राप्य यंत्रं उद्घाट्य तां तदवस्थां देहल्यां संस्थाप्य सूर्पकोणे कुल्माषान् अर्पयित्वा निगडभंगार्थं लोहकाराकारणाय यावद्गतस्तावद्यदि कोऽपि भिक्षुरागच्छेत्तर्हि दत्त्वा कुल्माषान् भुंजे इति चिंतयंत्यां तस्यां भगवान् समागतः ! साऽपि प्रमुदिता गृहाणेदं प्रभो ! इति जगौ, ततः स्वामी अभिग्रहे रोदनं न्यूनं निरीक्ष्य निवृत्तस्ततो वसुमती अहो ! अस्मिन्नवसरे भगवानागत्य किंचिदपि अगृहीत्वा निवृत्त इति दुःखतो रुरोद, ततः पूर्णोऽभिग्रहः स्वामी कुल्माषान् अग्रहीत्, अत्र कविः—"चंदना सा कथं नाम, बालेति प्रोच्यते बुधैः। मोक्षमादत्त कुल्माषै- र्महावीरं प्रतार्य या ॥ १ ॥" ततः पंच दिव्यानि जातानि, शक्रः समागतः, देवा ननृतुः, केशाः शिरसि संजाताः, निगडानि च नूपुराणि, ततो मातृष्वसुर्मृगावत्या मिलनं, तत्र च संबंधितया वसुधाराधनं आददानं शतानीकं निवार्य चंदनाज्ञया धनावहाय तद्दत्वा वीरस्य प्रथमा साध्वी इयं भविष्यतीत्यभिधाय शक्रस्तिरोदधे। ततः क्रमेण जृंभिकाग्रामे शक्रो नाट्यविधिं दर्शयित्वा इयद्भिर्दिनैर्श-

चमरोत्पातः, ततः क्रमेण कौशाम्ब्यां गतस्तत्र शतानीको राजा, मृगावती देवी, विजया प्रतीहारी, वादीनामधर्मपाठकः, सुगुप्तोऽमात्यस्तद्भार्या नंदा, सा च श्राविका मृगावत्या वयस्या। तत्र प्रभुणा पोषबहुलप्रतिपदि अभिग्रहो जगृहे, यथा—"द्रव्यतः कुल्माषान् सूर्पकोणस्थान्, क्षेत्रत एकं पादं देहल्या अंतः एकं वहिश्च कृत्वा स्थिता, कालतो निवृत्तेषु भिक्षाचरेषु, भावतो 'राजसुता' 'दासत्वं-प्राप्ता' 'मुंडितमुंडा' 'निगडितचरणा' 'रुदती' 'अष्टमभक्तिका' चेद्दास्यति तदा ग्रहीष्यामि"इत्यभिगृह्य प्रत्यहं भिक्षायै भ्राम्यति, अमात्यादयोऽनेकानुपायान् कुर्वंति, नत्वभिग्रहः पूर्यते ! ॥

तदा च शतानीकेन चंपा भग्ना, तत्र च दधिवाहनभूपभार्या धारिणी, तत्पुत्री च वसुमती, द्वे अपि केनचित्पदातिना बंदितया गृहीते, तत्र च धारिणि ! त्वां भार्यां करिष्यामीति पत्तिवार्त्तया जिह्वाचर्वणेन मृता, ततो वसुमतीं पुत्रीति समाश्वास्य कौशाम्ब्यां आनीय चतुष्पथे विक्रेतुं स्थापिता, तत्र धनावहश्रेष्ठिना गृहीत्वा चंदनेति कृताभिधाना पुत्रीत्वेन स्थापिताऽतीव प्रिया च, एकदा च स्वपादौ प्रक्षालयंत्यास्तस्याः श्रेष्ठिना स्वयं गृहीतां भूलुठद्वेणिं निरीक्ष्य 'मूला'नाम्नी श्रेष्ठिपत्नी गृहस्वामिनी तु इय-

शक्रः पराङ्मुखीभूय सुरानित्यूचे, हंहो ! सुराः ! असौ कर्मचंडालः पापात्मा समागच्छति, अस्य दर्शनमपि महापापाय भवति ! अनेनाऽस्माकं बहु अपराद्धं ! यदस्मदीय. स्वामी कदर्थितः ! अयं पापात्मा यथा अस्मत्तो न भीतस्तथा पातकादपि न भीतस्तदपवित्रोऽसौ दुरात्मा ! शीघ्रं स्वर्गान्निर्वास्यतां ! इत्यादिष्टैः शक्रसुभटैर्निर्दयं यष्टिमुष्ट्यादिभिस्ताड्यमानः सांगुलिमोटनं कृतान् सुरीणां आक्रोशान्सहमानश्चौर इव साशंकं इतस्ततो विलोकयन्निर्वाणांगार इव निस्तेजा निषिद्धाऽखिलपरिवार एकाकी अलर्कः श्वेव देवलोकान्निष्काशितो मंदरचूलायां एकसागरावशेषं आयुः समापयिष्यति, तस्याग्रमहिष्यश्च दीनाननाः शक्राज्ञया स्वभर्तारमनु जग्मुः ॥

ततः स्वामिन आलंभिकायां हरिकांतः, श्वेतंबिकायां हरिसहश्च, विद्युत्कुमारेंद्रौ प्रियं प्रष्टुं एतौ, ततः श्रावस्त्यां शक्रः स्कंदप्रतिमायामवतीर्य स्वामिनं वंदितवान्, ततो महती महिमप्रवृत्तिः, ततः कौशाम्ब्यां चंद्रसूर्यावतरणं, वाराणस्यां शक्रः, राजगृहे ईशानः, मिथिलायां जनको राजा धरणेंद्रश्च प्रियं पृच्छतिस्म, ततो वैशाल्यां एकादशो वर्षारात्रोऽभूत्, तत्र भूतः प्रियं पृच्छति, ततः सुंसुमारपुरं गतस्तत्र

हावभावादिभिः उपसर्गयंति ॥ २० ॥ एवं एकस्यां रात्रौ विंशत्या उपसर्गैस्तेन कृतैर्मनागपि न चलितः स्वामी, अत्र कविः—"बलं जगद्ध्वंसनरक्षणक्षमं, कृपा च सा संगमके कृतागसि। इतीव संचिंत्य विमुच्य मानसं, रुषेव रोषस्तव नाथ! निर्ययौ ॥ १ ॥" ततः षण्मासीं यावत् अनेषणीयाहारसंपादनादीन् तत्कृतान् नानाप्रकारान् उपसर्गान्सहमानो भगवान्निराहार एव षण्मास्या स गतो भविष्यतीति विचिंत्य यावद्व्रजग्रामगोकुले गोचर्यायां प्रविष्टस्तावत्तत्रापि तत्कृतां अनेषणां विज्ञाय तथैवागत्य बहिः प्रतिमया तस्थौ, ततः स सुराधमः कथमपि अस्खलितं विशुद्धपरिणामं जगदीश्वरं अवधिना विज्ञाय विषण्णमानसोऽपि शक्रभियाऽभिवंद्य सौधर्मं प्रति चचाल, स्वामी च तत्रैव गोकुले हिंडन् वत्सपाल्या स्थविरया परमान्नेन प्रतिलंभितो वसुधारा च निपतिता ॥

इतश्च तावंतं कालं यावत्सर्वे सौधर्मवासिनो देवा देव्यश्च निरानंदा निरुत्साहास्तस्थुः, शक्रोऽपि विवर्जितगीतनाट्य एतावतां उपसर्गाणां हेतुर्मत्कृता प्रशंसैवेति महादुःखाक्रांतचित्तः करकमलविन्यस्तमुखो दीनदृष्टिर्विमनस्कस्तस्थौ, ततश्च भ्रष्टप्रतिज्ञं श्याममुखं आगच्छंतं तं सुराधमं निरीक्ष्य

सोऽभूत् ( १ ) ततो वज्रतुंडपिपीलिकाभिश्चालनीतुल्यश्चक्रे, ताश्चैकतः प्रविशंति अन्यतो निर्यांति ( २ ) तथा वज्रतुंडा उद्दंशाः ( ३ ) तीक्ष्णतुंडा घृतेल्लिकाः ( ४ ) वृश्चिकाः ( ५ ) नकुलाः ( ६ ) सर्पाः ( ७ ) मूषका ( ८ ) श्च भक्षणादिना । तथा हस्तिनः ( ९ ) हस्तिन्यश्च ( १० ) शुंडाघातचरणमर्दनादिना । पिशाचो ( ११ ) ऽट्टहासादिना । व्याघ्रो दंष्ट्रानखविदारणादिना ( १२ ) ततः सिद्धार्थत्रिशले करुणाविलापादिना ( १३ ) उपसर्गयति । ततः स्कंधावारविकुर्वणा, तत्र च जनाः प्रभुचरणयोर्मध्येऽग्निं प्रज्वाल्य स्थालीं उपस्थाप्य पचंति ( १४ ) ततश्चंडालास्तीक्ष्णतुंडशकुनिपंजराणि प्रभोः कर्णबाहुमूलादिषु लंबयंति, ते च मुखैर्भक्षयंति ( १५ ) ततः खरवातः पर्वतानपि कंपयन्प्रभुं उत्क्षिप्य २ पातयति ( १६ ) ततः कलिकावातश्चक्रवद्भ्रमयति ( १७ ) ततो येन मुक्तेन मेरुचूलापि चूर्णीस्यात्तादृशं सहस्रभारप्रमाणं कालचक्रं मुक्तं, तेन प्रभुः आजानु भूमौ निमग्नः ( १८ ) ततः प्रभातं विकृत्य वक्ति, देवार्य ! अद्यापि किं तिष्ठसि ? स्वामी ज्ञानेन रात्रिं वेत्ति ( १९ ) ततो देवर्द्धिं विकुर्व्य शृणिष्व महर्षे ! येन तव स्वर्गेण मोक्षेण वा प्रयोजनं, तथापि अक्षुब्धं देवांगना

स्तंबो निष्पन्न इति प्रभुः प्रत्याह, गोशालोऽश्रद्दधत्तां तिलशांबां विदार्य सप्त तिलान् दृष्ट्वा "त एव प्राणिनस्तस्मिन्नेव शरीरे पुनः परावृत्य समुत्पद्यंते" इति मतं नियतिं च गाढीकृतवान्, ततः प्रभोः पृथग्भूय श्रावस्त्यां कुंभकारशालास्थितो भगवदुक्तोपायेन तेजोलेश्यां साधयित्वा त्यक्तव्रतश्रीपार्श्वनाथशिष्यात् अष्टांगनिमित्तं चाऽधीत्याऽहंकारेण सर्वज्ञोऽहं इति ख्यापयतिस्म [ यच्चोक्तं किरणावलीकारेण तेजोलेश्योपायः सिद्धार्थेनोक्त इति तच्चिंत्यं ! भगवतीसूत्राऽऽवश्यकचूर्णिहारिभद्रीवृत्तिहैमवीर चरित्राद्यनेकग्रंथेषु भगवतोक्त इत्यभिधानात् ] ततः स्वामी श्रावस्त्यां दशमं वर्षारात्रं तत्र विचित्रं तपश्चाऽकरोदित्याद्यनुक्रमेण स्वामी बहुम्लेच्छां दृढभूमिं गतस्तस्यां बहिः पेढालग्रामात् पोलासचैत्येऽष्टमभक्तेन एकरात्रिकीं प्रतिमां तस्थिवान् ॥

इतश्च सभागतः शक्रस्त्रैलोक्यजना अपि वीरचेतश्चालयितुं असमर्थाः ! इति प्रभोः प्रशंसां कृतवान्, तत् श्रुत्वा च अमर्षेण सामानिकः संगमाख्यसुरः क्षणात्तं चालयामीति शक्रसमक्षं कृतप्रतिज्ञः शीघ्रं प्रभुसमीपमागत्य प्रथमं धूलिवृष्टिं चकार, यया पूर्णाक्षिकर्णादिविवरः स्वामी निरुच्छ्वा-

वसत्यभावाच्च नवम वर्षारात्रं अनियतं अकार्षीत् । ततः कुर्मग्रामं गच्छन् मार्गे तिलस्तंबं दृष्ट्वा अयं निष्पत्स्यते न वेति गोशालः पप्रच्छ, ततः प्रभुणा सप्ताऽपि तिलपुष्पजीवा मृत्वा एकस्यां शंबायां तिला भविष्यंतीति प्रोक्ते तद्वचनं अन्यथा कर्तुं तं स्तंबं उत्पाट्य एकांते मुमोच, ततः सन्निहितव्यंतरैर्मा प्रभुवचोऽन्यथाऽभूदिति वृष्टिश्चक्रे, गोखुरेण च आर्द्रभूमौ स तिलस्तंबः स्थिरीबभूव । ततः प्रभुः कूर्मग्रामे गतस्तत्र च वैश्यायनतापसस्य आतापनाग्रहणाय मुत्कलमुक्तजटामध्ये यूकाबाहुल्यदर्शनात् गोशालो 'यूकाशय्यातर' इति तं वारंवार हसितवान्, ततस्तेन क्रुद्धेन तेजोलेश्या मुक्ता, तां च कृपारसांभोधिर्भगवान् शीतलेश्यया निवार्य गोशालं रक्षितवान् । ततो मंखलिसुतस्तस्य तापसस्य तेजोलेश्यां विलोक्य कथमियं उत्पद्यते ? इति भगवंतं पृष्टवान्, भगवानपि अवश्यंभावितया भुजंगस्य पयःपानमिव तादृगनर्थकारणं अपि तेजोलेश्याविधिं शिक्षितवान्, यथा—"आतापनापरस्य सदा षष्ठतपसः सनखकुल्माषपिंडिकया एकेन च उष्णोदकचुलुकेन पारणां कुर्वतः षण्मास्यंते तेजोलेश्योत्पद्यते इति" ततः सिद्धार्थपुरे व्रजन् गोशालेन स तिलस्तंबो न निष्पन्न इत्युक्ते स एष तिल-

भद्रिकायां षष्ठवर्षासु चतुर्मासतपो विविधान् अभिग्रहांश्च अकरोत्, तत्र पुनः षण्मासांते गोशालो मिलितः। ततः स्वामी बहिः पारयित्वा ऋतुबद्धे मगधावनौ निरुपसर्गो विहृतवान्। ततः आलंभिकायां सप्तमवर्षासु चतुर्मासक्षपणेन स्थित्वा बहिः पारयित्वा च 'कुंडग'सन्निवेशे वासुदेवचैत्ये स्वामी प्रतिमया स्थितः, गोशालोऽपि वासुदेवप्रतिमायाः पराङ्मुखोऽधिष्ठानं मुखे कृत्वा तस्थौ, कुट्टितश्च लोकैः। ततो मर्दनग्रामे बलदेवचैत्ये स्वामी प्रतिमया स्थितः, गोशालो बलदेवमुखे मेहनं कृत्वा तस्थौ, ततो लोकैः कुट्टितः, द्वयोरपि स्थानयोर्मुनिरिति कृत्वा मुक्तः। ततः क्रमात्प्रभुः 'उन्नाग'सन्निवेशे गतस्तत्र मार्गे संमुखागच्छद्दंतुरवधूवरौ मंखलिना हसितौ, यथा—"तत्तिल्लो विहिराया! जणेवि दूरेवि जो जहिं वसइ। जं जस्स होइ जुग्गं, तं तस्स विइज्जयं देइ॥ १॥" ततस्तैः कुट्टयित्वा वंशजाल्यां प्रक्षिप्तः, स्वामिच्छत्रधरत्वान्मुक्तश्च। ततः स्वामी गोभूमिं ययौ, ततो राजगृहेऽष्टमं वर्षारात्रं अकरोत्, चतुर्मासकतपश्च, बहिः पारणां च कृत्वा ततो वज्रभूम्यां बहव उपसर्गा इति कृत्वा नवमं वर्षारात्रं तत्र कृतवान्, चतुर्मासकतपश्च, अपरमपि मासद्वयं तत्रैव विहृतवान्,

पेणनामाचार्यः प्रतिमास्थितश्चौरभ्रांत्या आरक्षकपुत्रेण भल्या हतो जाताऽवधिः स्वर्जगाम, शेषं च गोशालवचनादि मुनिचंद्रवत् । तत. स्वामी 'कूपिक'सन्निवेशं गतस्तत्र चारिकशंकया गृहीतः पार्श्वांतेवासिनीभ्यां प्रव्राजिकीभूताभ्यां विजयाप्रगल्भाभ्यां मोचितः, ततो गोशालः स्वामितः पृथग्भूतोऽन्यस्मिन्मार्गे गच्छन्पंचशतचौरैर्मातुल २ इति कृत्वा स्कंधोपरि आरुह्य वाहितः। खिन्नोऽचिंतयत्, स्वामिनैव सार्द्धं वरं इति स्वामिनं मार्गयितुं लग्न., स्वाम्यपि वैशाल्यां गत्वाऽयस्कारशालायां प्रतिमया स्थितस्तत्र एकोऽयस्कारः षण्मासीं यावद्रोगी भूत्वा नीरोगः सन्नुपकरणान्यादाय शालायां आगत., स्वामिनं निरीक्ष्य अमंगलं इति बुद्ध्या घनेन हंतुमुद्यतोऽवधिना ज्ञात्वा आगत्य शक्रेण तेनैव घनेन हतः । ततः स्वामी 'ग्रामाक'सन्निवेशं गतस्तत्रोद्याने विभेलकयक्षो महिमानं चक्रे । ततः शालिशीर्षे ग्रामे उद्याने प्रतिमास्थस्य स्वामिनो माघमासे त्रिपृष्ठभवापमानिता अंत.पुरी मृत्वा व्यंतरीभूता तापसीरूपं कृत्वा जलभृतजटाभिः अन्यदु.सहं शीतोपसर्गं चक्रे, प्रभुं च निश्चलं विलोक्य उपशांता स्तुतिं चकार । प्रभोश्च तं सहमानस्य षष्ठेन तपसा विशुद्ध्यमानस्य लोकावधिरुत्पन्नः । ततः स्वामी

गोशालो डिंभभापनाय अक्षिविक्रियां कुर्वन् तत्पित्रादिभिः कुट्टितो मुनिपिशाच इत्युपेक्षितः! ततः स्वामी आवर्तग्रामे बलदेवगृहे प्रतिमया स्थितः, तत्र गोशालेन बालभापनाय मुखत्रासो विहितस्ततस्तत्पित्रादयो ग्रथिलोऽयं किमनेन हतेन अस्य गुरुरेव हन्यते! इति भगवंतं हंतुं उद्यतास्तांश्च बलदेवमूर्तिरेव बाहुना लांगलं उत्पाट्य न्यवारयत्, ततः सर्वेऽपि स्वामिनं नतवंतः। ततः प्रभुः 'चोराक'सन्निवेशं जगाम, तत्र मंडपे भोज्यं पच्यमानं दृष्ट्वा गोशालः पुनः पुनर्न्यग्भूय वेलां विलोकयतिस्म, ततस्तैश्चौरशंकया ताडितः, अनेनाऽपि रुष्टेन स्वामिनाम्ना स मंडपो ज्वालितः, ततः प्रभुः 'कलंबुका'सन्निवेशं गतस्तत्र मेघकालहस्तिनामानौ द्वौ भ्रातरौ, तत्र कालहस्तिना उपसर्गितो मेघेनोपलक्ष्य क्षमितः। ततः स्वामी क्लिष्टकर्मनिर्जरानिमित्तं लाढाविषयं प्राप, तत्र हीलनाद्यो बहवो घोरा उपसर्गा अध्यासिताः, ततः पूर्णकलशाख्येऽनार्यग्रामे गच्छतः स्वामिनो मार्गे द्वौ चौरौ अशकुनधिया असिं उत्पाट्य हंतुं धावितौ, दत्तोपयोगेन शक्रेण च वज्रेण हतौ। ततः स्वामी भद्रिकापुर्यां वर्षाचतुर्मासक्षपणपारणां बहिः कृत्वा कसात्तंवालग्रामं गतस्तत्र पार्श्वसंतानीयो बहुशिष्यपरिवृतो नंदि-

गोशालः क्षिप्तः, प्रभुस्तु नाऽथ्याऽपि, तावता तत्र सोमाजयंतीनाम्न्यौ उत्पलभगिन्यौ संयमाक्षमे प्रव्राजिकीभूते प्रभुं वीक्ष्योपलक्ष्य च ततः कष्टान्मोचयामासतुः। ततः प्रभुः पृष्टचंपां प्राप्तः, तत्र वर्षाश्चतुर्मासक्षपणेन अतिवाह्य बहिः पारयित्वा 'कायंगल'सन्निवेशं गत्वा श्रावस्त्यां गतस्तत्र बहिः प्रतिमया स्थितस्तत्र सिद्धार्थेन गोशालाय प्रोक्तं, यद् 'अद्य त्वं मनुष्यमांसं भोक्ष्यसे' ततः सोऽपि तन्निवारणाय वणिग्गेहेषु भिक्षार्थे बभ्राम, तत्र च पितृदत्तो वणिक्, तस्य भार्या च मृतापत्यप्रसूरस्ति, तस्याश्च नैमित्तिकशिवदत्तेनोक्तोऽपत्यजीवनोपायो यत् तस्य मृतबालकस्य मांसं पायसेन विमिश्रं कस्यचिद्भिक्षोर्देयं, तया च तेनैव विधिना गोशालाय दत्तं, गृहज्वालनभयाच्च गृहद्वारं परावर्त्तितं, गोशालोऽपि अज्ञातस्वरूपस्तद्भक्षयित्वा भगवत्समीपमागतः, सिद्धार्थेन यथास्थिते उक्ते वमनेन कृतनिर्णयश्च तद्गृहज्वालनाय आगतस्तद्गृहं अलब्ध्वा तं पाटकं एव भगवदाज्ञा ज्वालितवान्। ततः स्वामी बहिर्हरिद्रसन्निवेशात् हरिद्रवृक्षस्य अधः प्रतिमया तस्थौ, पथिकप्रज्वालिताऽग्निना अनपसारणात्प्रभोः पादौ दग्धौ। गोशालो नष्टः। ततः स्वामी 'नंगला'ग्रामे वासुदेवगृहे प्रतिमया स्थितस्तत्र

एकाक्येव कुट्टितो यूयं किं न वारयत? सिद्धार्थः प्राह, मैवं पुनः कार्षीः । ततः पात्रालके गतस्त- स्थिवांश्च शून्यागारे, तत्र 'स्कंदः' स्वदास्या स्कंदिलया सह क्रीडन् हसितस्तथैव तेन कुट्टितश्च! ततः स्वामी कुमारकं सन्निवेशं गत्वा चंपरमणीयोद्याने कायोत्सर्गेण तस्थौ ॥

इतश्च श्रीपार्श्वनाथशिष्यो भूरिशिष्यपरिवृतो मुनिचंद्रमुनिस्तत्र कुंभकारशालायां तस्थौ, तत्सा- धून्निरीक्ष्य गोशालः प्राह, के यूयं? तैरुक्तं, वयं निर्ग्रंथाः, पुनः प्राह, क्व यूयं! क्व च मम धर्माचार्यः! तैरूचे, यादृशस्त्वं तादृशस्तव धर्माचार्योऽपि भविष्यति! ततो रुष्टेन गोशालेन ऊचे, मम धर्माचार्य- तपसा दह्यतां युष्मदाश्रयः! तैरूचे, नेयं भीतिरस्माकं, पश्चात्स आगत्य सर्वं उवाच, सिद्धार्थो जगौ, नैते साधवो दह्यंते, रात्रौ च जिनकल्पतुलनां कुर्वाणो मुनिचंद्रः कायोत्सर्गस्थो मत्तेन कुंभकारेण चौरभ्रांत्या व्यापादितः, उत्पन्नावधिश्च स्वर्गं जगाम, सुरैर्महिमार्थं उद्योते कृते गोशालो जगौ, अहो! तेषां उपाश्रयो दह्यते, तदा सिद्धार्थेन यथास्थिते कथिते स तत्र गत्वा तच्छिष्यान्निर्भर्त्स्या- ऽऽगतः । ततः स्वामी चौरायां गतः, तत्र चारिकौ हेरिकौ इति कृत्वा रक्षका अगडे प्रक्षिपंति, प्रथमं

च, गोशालश्च तस्यां तंतुवायशालायां स्वामिनं अनिरीक्ष्य समग्रे राजगृहनगरे गवेषयन् स्वोपकरणं द्विजेभ्यो दत्वा मुखं शिरश्च मुंडयित्वा कोल्लाके भगवंतं दृष्ट्वा "त्वत्प्रव्रज्या मम भवतु" इत्युक्तवान्। ततस्तेन शिष्येण सह स्वामी 'सुवर्णखल'ग्रामं प्रति प्रस्थितः मार्गे च गोपैर्महास्थाल्यां पायसं पच्यमानं निरीक्ष्य गोशालः स्वामिनं जगौ, अत्र भुक्त्वा गम्यते, सिद्धार्थेन च तद्भंगे कथिते गोशालेन च गोपेभ्यस्तद्भंगे ज्ञापिते गोपैर्यत्नेन रक्षिताऽपि सा स्थाली भग्ना! ततो गोशालेन "यद्भाव्यं तद्भवत्येवेति निश्चयः स्वीकृतः," ततः स्वामी 'ब्राह्मण'ग्राममगात्, तत्र नंदोपनंदभ्रातृद्वयसंबंधिनौ द्वौ पाटकौ, स्वामी नंदपाटके प्रविष्टः, प्रतिलाभितश्च नंदेन, गोशालस्तु उपनंदगृहे पर्युषितान्नदानेन रुष्टो यद्यस्ति मे धर्माचार्यस्य तपस्तेजस्तदाऽस्य गृहं दह्यतां इति शशाप! तदनु तद्गृहं आसन्नदेवता ददाह। पश्चात्प्रभुश्चंपायां उपागतस्तत्र द्विमासक्षपणेन चतुर्मासीं अवसत्, चरमद्विमासपारणां च चंपायां बहिः कृत्वा 'कोला'संनिवेशं गतः स्थितश्च शून्यगृहे कायोत्सर्गेण, गोशालेन तु तत्रैव शून्यगृहे 'सीहो' ग्रामणीपुत्रो विद्युन्मत्या दास्या सह क्रीडन् हसितः! कुट्टितश्च तेन, स्वामिनं प्राह, अहं

अदृष्टधुरौ अपि तथा वाहितौ यथा त्रुटितौ आनीय तस्य गृहे बद्धौ, श्रेष्ठी च तौ तदवस्थौ विज्ञाय साश्रुलोचनो भक्तप्रत्याख्यापननमस्कारदानादिभिर्निर्यामितवान्। ततस्तौ मृत्वा नागकुमारौ देवौ जातौ, तयोश्च नवीनोत्पन्नयोर्दत्तोपयोगयोरेकतरेण नौ रक्षिता, अन्येन च प्रभुं उपसर्गयन् सुदंष्ट्रसुरः प्रतिहतः, ततस्तं निर्जित्य भगवतः सत्त्वं रूपं च गायंतौ नृत्यंतौ समहोत्सवं सुरभिजलपुष्पवृष्टिं कृत्वा तौ स्वस्थानं गतौ ॥

भगवानपि राजगृहे नालंदायां तंतुवायशालैकदेशे अनुज्ञाप्य आद्यं मासक्षपणं उपसंपद्य तस्थौ। तत्र च मंखलिनाममंखपुत्रः सुभद्रांगजो बहुलद्विजगोशालायां जातत्वात् गोशालनामा मंखकिशोरः उपाययौ, स च स्वामिनं मासक्षपणपारणके विजयश्रेष्ठिना कूरादिविपुलभोजनविधिना प्रतिलंभितं, तत्र पंचदिव्यादिमहिमानं च निरीक्ष्य "अहं त्वच्छिष्योस्मीति" स्वामिनं उवाच, ततो द्वितीयपारणायां नंदेन पक्वान्नादिना, ततस्तृतीयायां सुनंदेन परमान्नादिना स्वामी प्रतिलंभितः, चतुर्थमासक्षपणे 'कोल्लाक'सन्निवेशे भगवानागतस्तत्र बहुलनामा द्विजः पायसेन प्रतिलंभितवान्, पंच दिव्यानि

तत्र चैका आभीरी स्वकीयं गोरसं आनीय साधुदास्यै ददाति, सा च यथोचितं मूल्यं ददाति, एवं च कालेन तयोः अत्यंतं प्रीतिर्जाता, एकदा तया आभीर्या विवाहे निमंत्रितौ तौ दंपती ऊचतुः, यदुत भो! आवाभ्यां आगंतुं न शक्यते, परं यद्वस्तु विवाहे युज्यते तदस्मद्गेहाद्ग्राह्यं' ततो व्यवहारिदत्तैश्चन्द्रोदयाद्युपकरणैर्वस्त्राभरणधूपादिभिश्च स आभीरविवाहो अत्यंत उत्कृष्टो जातस्तेन प्रमुदिताभ्यां आभीराभीरीभ्यां अतिमनोहरौ समानवयसौ बालवृषभौ आनीय तयोर्दत्तौ, तौ नेच्छतः, बलाद्गृहे बद्धा तौ स्वगृहं गतौ, व्यवहारिणा चिन्तितं, यदि इमौ पश्चात्प्रेषयिष्येते तदा षंढीकरणभारोद्वहनादिभिर्दुःखिनौ भविष्यतः, इत्यादि विचिंत्य प्रासुकतृणजलादिभिस्तौ पोष्यमाणौ वहनादिश्रमविवर्जितौ सुखं तिष्ठतः। अन्यदा च अष्टम्यादिषु कृतपौषधेन तेन श्रावकेण पुस्तकादिवाच्यमानं निशम्य तौ भद्रको जातौ, यस्मिन् दिने स श्रावक उपवासं करोति, तस्मिन् दिने तौ अपि तृणादि न भक्षयतः, एवं च तस्य श्रावकस्यापि साधर्मिकत्वेन अत्यंतं प्रियौ जातौ। एकदा तस्य जिनदासस्य मित्रेण तौ अतिबलिष्ठौ सुंदरौ च वृषौ विज्ञाय श्रेष्ठिनं अनापृच्छ्यैव भंडीरयक्षयात्रायै

कृतः ! इत्यादि मनसा विचिंतयन्प्रपन्नानशनः पक्षं यावद् विले तुंडं प्रक्षिप्य स्थितो घृतादिविक्रायकाभिर्घृतादिच्छटाभिः पूजितो घृतगंधागतपिपीलिकाभिर्भृशं पीड्यमानः प्रभुदृष्टिसुधावृष्ट्या सिक्तो मृत्वा सहस्रारे सुरो बभूव, प्रभुरपि अन्यत्र विजहार ॥ उत्तरवाचालायां नागसेनः स्वामिनं क्षीरेण प्रतिलंभितवान् पंच दिव्यानि जातानि, ततः श्वेतंव्यां प्रदेशीराजा स्वामिनो महिमानं कृतवान्, ततः सुरभिपुरं गच्छंतं स्वामिनं पंचभी रथैर्नैयकागोत्रिणो राजानो वंदितवंतः, ततः सुरभिपुरंगतस्तत्र गंगानद्युत्तारे सिद्धदत्तो नाविको लोकान्नावमारोहयति, भगवानपि तां नावमारूढस्तस्मिन्नवसरे च कौशिकरटितं श्रुत्वा नैमित्तिकः क्षेमिलो जगौ, अद्याऽस्माकं मरणांतं कष्टं आपतिष्यति, परं अस्य महात्मनः प्रभावात्संकटं विलयं यास्यति ! एवं च गंगां उत्तरतः प्रभोस्त्रिपृष्टभवविदारितसिंहजीवसुदंष्ट्रदेवकृतं नौमज्जनादिकं विघ्नं कंवलशंवलनामानौ नागकुमारौ आगत्य निवारितवंतौ, तयोश्चोत्पत्तिरेवम्—

मथुरायां साधुदासीजिनदासौ दंपती परमश्रावकौ पंचमव्रते सर्वथा चतुष्पदप्रत्याख्यानं चक्रतुः,

तु अत्रैव जीवामीति । ततः प्रभुस्तस्य अप्रीतिं विज्ञाय ततो विहरन् श्वेतंव्यां गच्छन् जनैर्वार्यमाणोऽपि कनकखलतापसाश्रमे चंडकौशिकप्रतिबोधाय गतः ॥

स च प्राग्भवे महातपस्वी साधुः, पारणके विहरणार्थं गमने जातां मंडूकीविराधनां ईर्याप्रतिक्रमणे गोचरचर्याप्रतिक्रमणे सायंप्रतिक्रमणे च त्रिशः क्षुल्लकेन स्मारितः सन् क्रुद्धस्तं शैक्षं हंतुं धावित. । स्तंभेनास्फल्य मृत्वा ज्योतिष्के देवो जातस्ततश्च्युतस्तत्राश्रमे पंचशततापसाधिपतिश्चंडकौशिकाख्यो बभूव, तत्राऽपि राजकुमारान् स्वाश्रमफलानि गृह्णतो विलोक्य क्रुद्धस्तान्निहंतुमुद्यतः परशुहस्तो धावन्स कूपे पतितः, सक्रोधो मृत्वा तत्रैवाश्रमे पूर्वभवनाम्ना दृष्टिविषोऽहिर्बभूव, स च प्रभुं प्रतिमास्थं विलोक्य क्रुधा ज्वलन् सूर्यं दृष्ट्वा दृष्ट्वा दृष्टिज्वालां मुमोच, मुक्त्वा च मा पतन्नयं मां आक्रामतु इत्यपसरति, तथापि भगवान् तथैव तस्थौ, ततो भृशं क्रुद्धो भगवंतं ददंश, तथाऽपि भगवंतमव्याकुलमेव दृष्ट्वा भगवद्रुधिरं च क्षीरसहोदरं दृष्ट्वा "बुज्झ २ चंडकोसिआ" इति भगवद्वचनं च समाकर्ण्य जातजातिस्मृतिः प्रभुं त्रिः प्रदक्षिणीकृत्य अहो! अहं करुणासमुद्रेण भगवता दुर्गतिकूपादु-

कधर्मं च, तत उत्पलो वंदित्वा गतः, तत्र स्वामी अष्टभिः अर्धमासक्षपणैः तां प्रथमां चतुर्मासीमतिक्रम्य ततः स्वामी मोराकसन्निवेशं गतस्तत्र प्रतिमास्थितस्य वीरस्य सत्कारार्थं सिद्धार्थः भगवद्देहं अधिष्ठाय निमित्तानि कथयति, भगवतो महिमा जायते स्म, भगवन्महिमानं दृष्ट्वा प्रद्विष्टेन अच्छंदकेन तृणच्छेदविषये प्रश्ने कृते सिद्धार्थेन न छेत्स्यते इत्युक्ते छेदनोद्यतस्य तस्यांगुलीर्दत्तोपयोगः शक्रः समागत्य वज्रेण चिच्छेद, ततो रुष्टः सिद्धार्थो जनानां चौरोयमित्यवदत्, ततः कथमिति जनेषु पृच्छत्सु सिद्धार्थो जगौ, अनेन कर्मकरवीरघोषस्य दशपलप्रमितं वट्टलकं गृहीत्वा खर्जूरीवृक्षाधः स्थापितं, द्वितीयं इंद्रशर्मण ऊरणको भक्षितस्तदस्थीनि स्वगृहबदर्या अधः स्थापितानि संति, तृतीयं तु अवाच्यं! अस्य भार्यैव कथयिष्यति, ततो जनैर्गत्वा भार्या पृष्टा, साऽपि तद्दिने तेन सह कृतकलहा कोपादुवाच, भो भो जनाः! अद्रष्टव्यमुखोऽयं पापात्मा! यदयं स्वभगिनीमपि भुंक्ते! ततः स भृशं लज्जितो विजने समागत्य स्वामिनं विज्ञापयामास, स्वामिन्! त्वं विश्वपूज्यः सर्वत्र पूज्यसे, अहं

शर्माणौ अपि अधीताष्टांगनिमित्तौ तत्राऽऽगतौ, ते भगवंतं दिव्यगंधचूर्णपुष्पपूजितं निरीक्ष्य प्रमुदिताः प्रणमंति, तत्त उत्पलोऽवोचत्, हेभगवन्! ये त्वया निशाशेषे दश स्वप्ना दृष्टास्तेषां फलं त्वया तु ज्ञायते एव तदपि मया कथ्यते, यत्त्वया तालपिशाचो हतस्तेन त्वं अचिरेण मोहनीयं कर्म हनिष्यसि ( १ ) यच्च सेवमानः सित. पक्षी दृष्टस्तेन त्वं शुक्लध्यानं ध्यास्यसि ( २ ) यश्च चित्रकोकिलः सेवमानो दृष्टस्ततः त्वं द्वादशांगीं प्रथयिष्यसि ( ३ ) यच्च गोवर्गः सेवमानो दृष्टस्तेन साधु–साध्वी–श्रावक–श्राविकारूपश्चतुर्विधः संघस्त्वां सेविष्यते ( ४ ) यश्च त्वया स्वप्ने समुद्रस्तीर्णस्तत्त्वं संसारं तरिष्यसि ( ५ ) यश्चोद्गच्छन् सूर्यो दृष्टस्तेन तव अचिरात् केवलज्ञानं उत्पत्स्यते ( ६ ) यच्च त्वया अंत्रैर्मानुषोत्तरो वेष्टितस्तेन त्रिभुवने तव कीर्तिर्भविष्यति ( ७ ) यच्च त्वं मंदरचूलां आरूढस्तेन त्वं सिंहासने उपविश्य देवमनुजपर्षदि धर्मं प्ररूपयिष्यसि ( ८ ) यच्च त्वया विबुधालंकृतं पद्मसरो दृष्टं तेन चतुर्निकायजा देवास्त्वां सेविष्यते ( ९ ) यत्त्वया मालायुग्मं दृष्टं तदर्थं तु नाऽहं जानामि, तदा भगवता प्रोक्तं, हेउत्पल! यन्मया दामयुग्मं दृष्टं तेन अहं द्विविधं धर्मं कथयिष्यामि, साधुधर्मं श्राव-

भगवांस्तु तत्प्रतिबोधनाय तत्र चैत्ये समागतः, दुष्टोऽयं रात्रौ स्वचैत्ये स्थितं व्यापादयतीति जनैर्वार्यमाणोऽपि तत्रैव रात्रौ स्थितः, तेन च भगवतः क्षोभाय भूमिभेदकरोऽट्टहासः कृतस्ततो हस्तिरूपं, ततः सर्परूपं, ततः पिशाचरूपं च विकृत्य दुस्सहा उपसर्गाः कृताः, भगवांस्तु मनागपि न क्षुभितः! तत एकैकाऽपि याऽन्यजीवितापहा तथाविधाः शिरः ( १ ) कर्ण ( २ ) नासिका ( ३ ) चक्षु ( ४ ) दंत ( ५ ) पृष्ठ ( ६ ) नख ( ७ ) लक्षणेषु सुकुमारेष्वंगेषु विविधा वेदनाः प्रारब्धाः, तथाऽपि अकंपितचित्तं भगवंतं निरीक्ष्य स प्रतिबुद्धः, अस्मिन्नवसरे च सिद्धार्थः समागत्योवाच, भोनिर्भाग्यदुर्लक्षणशूलपाणे! किमेतत् आचरितं ? यत् सुरेंद्रपूज्यस्य भगवत आशातना कृता! यदि शक्रो ज्ञास्यति तदा तव स्थानं स्फेटयिष्यति! ततः पुनर्भीतः सन्नाधिकं भगवंतं पूजयामास, भगवतोऽग्रे गायति नृत्यति च, तदाकर्ण्य च लोकाश्चिंतितवंतो, यदनेन स देवार्यो हतस्ततो गायति नृत्यति च, तत्र च स्वामी देशोनान्, रात्रेश्चतुरोऽपि यामान् यदत्यंतं वेदनां सोढवान् इति प्रभाते क्षणं निद्रां लेभे, तत्र च प्रभुरूर्ध्वस्थ एव दश स्वप्नान् दृष्ट्वा जागरितः, प्रभाते लोको मिलितः, उत्पलेंद्र-

स्वामी प्रथमचतुर्मासकं मोराकसन्निवेशादागत्य शूलपाणियक्षचैत्ये स्थितः, स च यक्षः पूर्वभवे धनदेववणिजो वृषभ आसीत्, तस्य च नदीमुत्तरतः शकटपंचशती पंके निमग्ना, तदा च उल्लसितवीर्येण एकेन वृषभेण धामधुरीणेन भूत्वा,'यदि ममैव खंडद्वयं विधाय द्वयोः पार्श्वयोर्योजयति तदाऽहं एक एव सर्वाणि उत्तारयामीति चिंतयता' सर्वाणि शकटानि निर्व्यूढानि, तथोक्तम्—"धवलु विसूरइ सामि,अहं गरुआ भरु पिक्खेवि हउं किं। न जुत्तउ दुहिं धुरहिं, खंडय दुण्णि करेवि ॥ १॥" स तथाविधेन पराक्रमेण त्रुटितसंधिरशक्तशरीरो जातः, तदा च तं अशक्तं निरीक्ष्य धनदेवेन वर्द्धमानग्रामे गत्वा ग्राममुख्यानां तृणजलनिमित्तं द्रव्यं दत्त्वा स तत्र मुक्तः, ग्राममुख्यैश्च न काचिच्चिंता कृता, स च क्षुत्तृड्बाधितः शुभाध्यवसायान्मृत्वा व्यंतरो जातस्तेन प्राग्भवव्यतिकरस्मरणाज्जातकोपेन तत्र मारिकरणेन अनेके जना मारिताः, कियतां च संस्कारो भवतीति तथैव मुक्तानां मृतकानां अस्थिनिकरे स ग्रामः 'अस्थिकग्राम' इति प्रसिद्धो बभूव, ततश्च अवशिष्टलोकाराधितेन तेन प्रत्यक्षीभूय स्वप्रासादः स्वप्रतिमा च कारिता, तत्र जनाः प्रत्यहं पूजां कुर्वन्ति,

नित्यं दीक्षाग्रहणादनु यावज्जीवं वोसट्ठकाएत्ति व्युत्सृष्टकायः परिकर्मणापरिवर्जनात् चियत्तदेहेत्ति त्यक्तदेहः परीषहसहनात्, एवंविधः सन् प्रभुः ये केचित् उपसर्गा उत्पद्यंते, तद्यथा– दिव्वा वा दिव्याः देवकृताः माणुसा वा मानुष्या मनुष्यकृताः तिरिक्खजोणिआ वा तिर्यग्योनिकाः तिर्यक्कृताः अणुलो-

वोसट्ठकाए चियत्तदेहे जे केइ उवसग्गा उप्पज्जंति, तंजहा–दिव्वा वा, माणुसा वा, तिरिक्खजोणिया वा, अणुलोमा वा, पडिलोमा वा, ते उप्पण्णे सम्मं सहइ, खमइ, तितिक्खइ, अहियासइ ॥ ११८ ॥

मा वा अनुकूला भोगार्थं प्रार्थनादिकाः पडिलोमा वा प्रातिलोमाः प्रतिकूलास्ताडनादिकास्तान् उत्पन्नान् सम्मंसहइ सम्यक् सहते भयाभावेन खमइ क्षमते क्रोधाभावेन तितिक्खइ तितिक्षते दैन्याकरणेन अहियासइ अध्यासयति निश्चलतया, तत्र देवादिकृतोपसर्गसहनं यथा–

मागतो भगवंतं निरीक्ष्य दध्यौ, अहो! मया वृथैव महता कष्टेन सामुद्रिकं अधीतम्! यदि ईदृग् लक्षणलक्षितोऽपि श्रमणो भूत्वा व्रतकष्टं समाचरति तदा सामुद्रिकपुस्तकं जले क्षेप्यमेव, इतश्च दत्तोपयोगः शक्रः शीघ्रं तत्राऽऽगत्य भगवंतं अभिवंद्य पुष्पं उवाच, भो! भोः! सामुद्रिक! मा विषीद, सत्यमेवैतत्तव शास्त्रं, यदयं अनेन लक्षणेन जगत्त्रयस्यापि पूज्यः, सुरासुराणामपि स्वामी, सर्वोत्तमसंपदाश्रयस्तीर्थेश्वरो भविष्यति, किंच—"काय. स्वेदमलामय—विवर्जितः श्वासवायुरपि सुरभिः।

समणे भगवं महावीरे साइरेगाइं दुवालसवासाइं णिच्चं

रुधिरामिषमपि धवलं, गोदुग्धसहोदरं नेतुः ॥ १ ॥" इत्यादीन्यपरिमितानि अस्य बाह्याभ्यंतराणि लक्षणानि केन गणयितुं शक्यानि? इत्यादि वदन्पुष्पं मणिकनकादिभि. समृद्धिपात्रं विधाय शक्र. स्वस्थानं ययौ, सामुद्रिकोऽपि प्रमुदितः स्वदेशं गतः, प्रभुरप्यन्यत्र विजहार ॥ समणे भगवं महावीरे श्रमणो भगवान् महावीर. साइरेगाइं दुवालसवासाइं सातिरेकाणि द्वादशवर्षाणि यावत् णिच्चंति

केचित्, प्रथमं विप्रकुलोत्पन्नं सूचयतीत्यपरे, ] ब्राह्मणस्तु तदर्द्धं गृहीत्वा दशांचलकृते तुन्नवायस्याऽदर्शयत्, विप्रेण तस्याग्रे सकले व्यतिकरे निवेदिते सोप्युवाच, याहि भो ब्राह्मण ! तमेव प्रभुं अनुगच्छ, स हि निर्ममः, करुणांभोधिर्द्वितीयं अपि अर्द्धं दास्यति, ततस्तदर्द्धद्वयं अहं तथा योजयिष्यामि यथा अक्षतस्येव तस्य दीनारलक्षं मूल्यं भविष्यति, तेन अर्द्धमर्द्धं विभक्तेन द्वयोरप्यावयोर्दारिद्र्यं यास्यति, इति तत्प्रेरितो विप्रोऽपि पुनः प्रभुपार्श्वमागतो लज्जया प्रार्थयितुं अशक्तो वर्षं यावत्पृष्ठे बभ्राम, ततश्च स्वयं पतितं तदर्द्धं गृहीत्वा जगाम, तदेवं भगवता सवस्त्रधर्मप्ररूपणाय साधिकमासाधिकं वर्षं यावद्वस्त्रं स्वीकृतं, सपात्रधर्मस्थापनाय च प्रथमां पारणां पात्रेण कृतवान्, ततः परं तु यावज्जीवं अचेलकः पाणिपात्रश्चाभूत् ॥

एवं च विहरतो भगवतः कदाचिद्गंगातटे सूक्ष्ममृत्तिकाकर्दमप्रतिबिंबितपदपंक्तिषु चक्रध्वजांकुशादीनि लक्षणानि निरीक्ष्य पुष्पनामा सामुद्रिकश्चिंतयामास! यदयं एकाकी कोऽपि चक्रवर्ती गच्छति, तद्गत्वाऽस्य सेवां करोमि यथा मम महानुदयो भवतीति त्वरितं पदानुसारेण भगवत्पार्श्वे-

श्रीवर्द्धमानेन सुवर्णं मेघायितं तदा त्वं परदेशे गतः, अधुना पुनर्निर्धनः समागतो! याहि दूरं, मुखं मा दर्शय ! अथवा सांप्रतं अपि तमेव जंगमं कल्पतरुं याचस्व, यथा तव दारिद्र्यं हरति, यतः–"यैः प्राग्दत्तानि दानानि, पुनर्दातुं हि ते क्षमाः । शुष्कोऽपि हि नदीमार्गः, खन्यते सलिलार्थिभिः ॥१॥ इत्यादिवाक्यैर्भार्याप्रेरितो भगवत्पार्श्वमागत्य विज्ञापयामास, प्रभो! त्वं जगदुपकारी विश्वस्याऽपि त्वया दारिद्र्यं निर्मूलितं! अहं तु निर्भाग्यस्तस्मिन्नवसरेऽत्र नाऽभूव ! तत्रापि–"किं किं न कयं को को, न पत्थिओ कह कह न नामियं सीसं । दुब्भरउयरस्स कए, किं न कयं किं न कायव्वं ॥ १ ॥" तथापि भ्रमता मया न किंचित्प्राप्तं, ततोऽहं निष्पुण्यो निराश्रयो निर्धनस्त्वामेव जगद्वांछितदायकं शरणायोपेतोऽस्मि, तव विश्वदारिद्र्यहरस्य मद्दारिद्र्यहरणं कियन्मात्रं! यतः–"संपूरिताशेषमहीतलस्य, पयोधरस्याद्भुतशक्तिभाजः । किं तुंबपात्रप्रतिपूरणाय, भवेत्प्रयासस्य कणोऽपि नूनम् ॥१ ॥" एवं च याचमानाय विप्राय करुणापरेण भगवता देवदूष्यवस्त्रस्य अर्द्धं दत्तं, [ इदं च तादृग्दानदायिनोऽपि भगवतो निष्प्रयोजनस्यापि वस्त्रस्य यदर्द्धदानं तत् भगवत्संततेर्वस्त्रपात्रेषु मूर्च्छां सूचयति इति

त्सरं यावत् चीवरधारी वस्त्रधारी होत्था अभूत्, तेणपरं अचेलए तत ऊर्द्धं साधिकमासाधिकवर्षादूर्द्धं च अचेलकः पाणिपडिग्गहिए पाणिपतद्ग्रहः करपात्रश्चाभवत्। तत्र अचेलकभवनं चैवम्—

साधिकमासाधिकसंवत्सरादूर्द्धं विहरन् दक्षिणवाचालपुरासन्नसुवर्णवालुकानदीतटे कंटके विलग्य देवदूष्यार्द्धे पतिते सति भगवान् सिंहावलोकनेन तदद्राक्षीत्, "ममत्वेनेति केचित्, स्थंडिले अस्थंडिले वा पतितं इति विलोकनायेत्यन्ये, अस्मत्संततेर्वस्त्रपात्रं सुलभं दुर्लभं वा भावीति विलोकनार्थं इति अपरे, वृद्धास्तु कंटके वस्त्रविलगनात्स्वशासनं कंटकबहुलं भविष्यतीति विज्ञाय निर्लोभत्वात्तद्वस्त्रार्द्धं न जग्राहेति भावः," ततः पितुर्मित्रेण ब्राह्मणेन गृहीतं, अर्द्धन्तु तस्यैव पूर्वं प्रभुणा दत्तं अभूत्, तच्चैवं— स हि पूर्वं दरिद्रो भगवतो वार्षिकदानावसरे परदेशं गतोऽभूत्, तत्रापि निर्भाग्यत्वात्किंचिदप्राप्य गृहमागतो भार्यया तर्जितो, रे! अभाग्यशेखर! यदा भगवत

चीवरधारी होत्था, तेण परं अचेलए पाणिपडिग्गहिए।

विजहार, अष्टौ मासान् विहृत्य पुनर्वर्षार्थं तत्रागतः, आगत्य च कुलपतिसमर्पिते तृणकुटीरके तस्थौ, तत्र च बहिस्तृणाप्राप्त्या क्षुधिता गावोऽन्यैस्तापसैः स्वस्वकुटीरकान्निवारिता. सत्यः प्रभुभूषित कुटीरं निःशंकं खादंति, ततः कुटीरस्वामिना कुलपतेः पुरतो रावा कृता, कुलपतिरप्यागत्य भगवंतं उवाच, वर्द्धमान ! पक्षिणोऽपि स्वस्वनीडरक्षणे दक्षा भवंति, त्व तावत् राजपुत्रोऽपि स्वं आश्रयं रक्षितुं अशकोऽसि ? ततः प्रभुर्मयि सति एषां अप्रीतिरिति विचिंत्याऽऽषाढशुक्लपूर्णिमाया आरभ्य पक्षे अति-

समणे भगवं महावीरे संवच्छरं साहियं मासं

क्रांते वर्षायां एव इमान् पंच अभिग्रहान् अभिगृह्य अस्थिकग्रामं प्रति प्रस्थितः, अभिग्रहाश्चेमे— "नाप्रीतिमद्गृहे वासः (१), स्थेयं प्रतिमया सदा (२)। न गेहिविनयः कार्यो (३), मौनं (४) पाणौ च भोजनम् (५) ॥ १ ॥"

समणे भगवं महावीरे श्रमणो भगवान्महावीरः संवच्छरं साहियं मासं साधिकं मासाधिकसंव-

तिष्ठामि," ततः प्रभुरवादीद्देवेंद्र! "कदाप्येतन्न भूतं, न भवति, न भविष्यति च, यत्कस्यचिद्देवेंद्रस्य असुरेंद्रस्य वा साहाय्येन तीर्थंकराः केवलज्ञानं उत्पादयन्ति किंतु स्वपराक्रमेणैव केवलज्ञानं उत्पादयंति," ततः शक्रोऽपि मरणान्तोपसर्गवारणाय प्रभोर्मातृष्वस्रेयं व्यंतरं वैयावृत्यकरं स्थापयित्वा त्रिदिवं जग्मिवान् ॥

ततः प्रभुः प्रातः कोल्लाकसन्निवेशे बहुलब्राह्मणगृहे 'मया सपात्रो धर्मः प्रज्ञापनीयः' इति प्रथमपारणां गृहस्थपात्रे परमान्नेन चकार, तदा च चेलोत्क्षेपः ( १ ) गंधोदकवृष्टिः ( २ ) दुन्दुभिनादः ( ३ ) अहोदानमहोदानमित्युद्घोषणा ( ४ ) वसुधारावृष्टि ( ५ ) श्चेति पंच दिव्यानि प्रादुर्भूतानि, एषु वसुधारास्वरूपं चेदं—"अद्धत्तेरस कोडी, उक्कोसा तत्थ होइ वसुहारा। अद्धत्तेरस लक्खा, जहन्निया होइ वसुहारा ॥ १ ॥" ततः प्रभुर्विहरन्मोराकसन्निवेशे दूइज्जंततापसाश्रमे गतस्तत्र सिद्धार्थभूपमित्रं कुलपतिः प्रभुं उपस्थितः, प्रभुणापि पूर्वाभ्यासान्मिलनाय बाहू प्रसारितौ, तस्य प्रार्थनया च एकां रात्रिं तत्र स्थित्वा नीरागचित्तोऽपि तस्याग्रहेण तत्र चतुर्मासावस्थानं अंगीकृत्य अन्यतो

किंच–प्रभुदीक्षामहोत्सवे यैर्देवैर्गोशीर्षचंदनादिभिः पुष्पैश्च पूजितोऽभूत् साधिकमासचतुष्कं यावत्तदवस्थेन तद्गंधेन आकृष्टा भ्रमरा आगत्य गाढं त्वचं दशंति, युवानश्च गंधपुटीं याचंते, मौनवति च भगवति रुष्टास्ते दुष्टान् उपसर्गान् कुर्वंति, स्त्रियोऽपि भगवंतं अद्भुतरूपं सुगंधशरीरं च निरीक्ष्य कामपरवशा अनुकूलान् उपसर्गान् कुर्वंति, भगवांस्तु मेरुरिव निष्प्रकंपः सर्वं सहमानो विहरति, तस्मिन्दिने च मुहूर्त्तावशेषे कुमारग्रामं प्राप्तस्तत्र रात्रौ कायोत्सर्गेण स्थितः ॥

इतश्च तत्र कश्चिद्गोपः सर्वं दिनं हले वृषान् वाहयित्वा संध्यायां तान्प्रभुपार्श्वे मुक्त्वा गोदोहाय गृहं गतः, वृषभास्तु वने चरितुं गताः, स चागत्य प्रभुं पृष्टवान्, देवार्य! क मे वृषाः? अजल्पति च प्रभौ अयं न वेत्तीति वने विलोकितुं लग्नः, वृषास्तु रात्रिशेषे स्वयमेव प्रभुपार्श्वं आगताः, गोपोऽपि तत्रागतस्तान् दृष्ट्वा अहो! जानतापि अनेन समग्रां रात्रिं अहं भ्रामित इति कोपात्सेल्हकमुत्पाट्य प्रहर्तुं धावित., इतश्च शक्रस्तं वृत्तांतं अवधिना ज्ञात्वा गोपं शिक्षितवान्, अथ तत्र शक्रः प्रभुं विज्ञापयामास, "प्रभो! तवोपसर्गा भूयांसः संति! ततो द्वादशवर्षीं यावत् वैयावृत्त्यनिमित्तं तवांतिके

# ॥ अथ षष्ठः क्षणः ॥

ततश्चतुर्ज्ञानो भगवान् बंधुवर्गं आपृच्छ्य विहारार्थं प्रस्थितो, बंधुवर्गोऽपि दृष्टिविषयं यावत्तत्र स्थित्वा—

"त्वया विना वीर! कथं व्रजामो ? गृहेऽधुना शून्यवनोपमाने ।
गोष्टीसुखं केन सहाचरामो ? भोक्ष्यामहे केन सहाथ बंधो ! ॥ १ ॥
सर्वेषु कार्येषु च वीर वीरे—त्यामंत्रणाद्दर्शनतस्तवार्य !
प्रेमप्रकर्षादभजाम हर्षं, निराश्रयाश्चाथ कमाश्रयामः ? ॥ २ ॥
अतिप्रियं बांधव ! दर्शनं ते, सुधांजनं भावि कदास्मदक्ष्णोः ।
नीरागचित्तोऽपि कदाचिदस्मान्, स्मरिष्यसि ? प्रौढगुणाभिराम ! ॥ ३ ॥"

इत्यादि वदन् कष्टेन निवर्त्य साश्रुलोचनः स्वगृहं जगाम ॥

सूरिं श्रीविजयानन्द, विजयानन्दकारकम् । "आत्माराम" इति ख्यात, वन्दे सद्गुणलब्धये ॥ १ ॥

## ॥ इति पंचमः क्षणः समाप्तः ॥

वल्लभविजयस्त्वेष, शिष्यशिष्यस्य शिष्यकः । नित्य जपति च भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

भगवान्न केनापि सहेत्यतोऽद्वितीयः मुंडेभवित्ता द्रव्यतः शिरःकूर्चलोचनेन, भावतः क्रोधाद्यपनयनेन मुंडो भूत्वा अगारात् गृहात् अनगारितां साधुतां प्रव्रजितः प्रतिपन्नः। तद्विधिश्चायं–एवं पूर्वोक्तप्रकारेण कृतपंचमौष्टिकलोचो भगवान् यदा सामायिकं उच्चरितुं वांछति तदा शक्रः सकलमपि वादित्रादि कोलाहलं निवारयति, ततः प्रभुः "नमो सिद्धाणं" इति कथनपूर्वकं "करेमि सामाइयं सव्वं

मुंडे भवित्ता आगाराओ अणगारियं पव्वइए ॥ १६ ॥

सावज्जं जोगं पच्चक्खामि" इत्यादि उच्चरति, नतु "भंते" इति भणति, तथाकल्पत्वात्, एवं च चारित्रग्रहणानंतरमेव भगवतश्चतुर्थं ज्ञानं उत्पद्यते, ततः शक्रादयो देवा भगवंतं वंदित्वा नंदीश्वरयात्रां कृत्वा स्वं स्वं स्थानं जग्मुः ॥ ११६ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां पंचमः क्षणः समाप्तः ॥ ५ ॥

मियंकसिद्धत्थजच्चखत्तियसुएसि णं तुमं जाया! जच्चखत्तियाणीए तिसलाए सुएसि णं तुमं जाया! देविंदनरिंदपहियकित्तीसि णं तुमं जाया! एत्थ सिग्घं चंकमिअव्वं, गुरुअं आलंबेअव्वं, असिधारं महव्वयं चरियव्वं जाया! परक्कमियव्वं जाया! अस्सिं चणं अट्ठे नो पमाएअव्वं" इत्यादि उक्त्वा वंदित्वा नमस्कृत्य च एकतोऽपक्रामति, ततश्च भगवानेकया मुष्ट्या कूर्चं, चतसृभिस्तु ताभिः

ओमुइत्ता सयमेव पंचमुट्ठियं लोयं करेइ, करित्ता छट्ठेणं भत्तेणं अपाणएणं हत्थुत्तराहिं णक्खत्तेणं जोगमुवागएणं एगं देवदूसमादाय एगे अबीए

शिरोजान्, एवं स्वयमेव पंचमुट्ठियं पंचमौष्टिकं लोचं करोति, तथा कृत्वा च षष्ठेन भक्तेन अपानकेन उत्तरफल्गुन्या चंद्रयोगे सति एगंदेवदूसं शक्रेण वामस्कंधे स्थापितं एकं देवदूष्यं आदाय एगे एको रागद्वेषसहायविरहात् अबीए अद्वितीयो, यथा हि ऋषभश्चतुःसहस्रया राज्ञां, मल्लिपार्श्वौ त्रिभिस्त्रिभिः शतैः, वासुपूज्यः षट्शत्या, शेषाश्च सहस्रेण सह प्रव्रजितास्तथा एको

निर्गत्य ज्ञातखंडवने उद्याने यत्राशोकवृक्षस्तत्र भगवानुपागच्छति ॥ ११५ ॥ उवागच्छित्ता उपागत्य असोगवरपायवस्स अहे सीयं ठावेइ अशोकवृक्षस्याधः शिबिकां स्थापयति, स्थापयित्वा च शिबिकातः पच्चोरुहइ प्रत्यवरोहति अवतरतीत्यर्थः, तथा कृत्वा च स्वयमेव आभरणमाल्यालंकारान् ओमुयइ उन्मुंचति, तच्चैवं—"अंगुलीभ्यश्च मुद्रावलीं श्रोणितो, वीरवलयं

च्छित्ता जेणेव णायसंडवणे उज्जाणे जेणेव असोगवरपायवे तेणेव उवागच्छइ॥११५॥ उवागच्छित्ता असोगवरपायवस्स अहे सीयं ठावेइ, ठावित्ता सीयाओ पच्चोरुहइ, पच्चोरुहित्ता सयमेव आभरणमल्लालंकारं ओमुयइ,

भुजाभ्यां झटित्यंगदे । हारमथ कंठतः कर्णतः कुंडले, मस्तकान्मुकुटमुन्मुंचति श्रीजिनः ॥ १ ॥" तानि चाभरणानि कुलमहत्तरिका हंसलक्षणपटशाटकेन गृह्णाति, गृहीत्वा च भगवंतं एवं अवादीत् । "इक्खागकुलसमुप्पण्णोसि णं तुमं जाया! कासवगुत्तेसि णं तुमं जाया! उदितोदितणायकुलणहयल-

कैः, सर्वतालाचरैः, सर्वावरोधेन सर्वांतःपुरेण, सर्वपुष्पवस्त्रगंधमाल्यालंकारविभूषया प्रतीतया, सर्वत्रुटितशब्दानां सर्ववाद्यशब्दानां यः संगतो निनादो महाघोपस्तेन, सर्वत्वं च स्तोकानां समुदाये स्तोकैरपि स्यात्तत आह महया इड्ढीए महया जुईए इत्यादि सर्वं प्राग्वत्, एवंरूपया ऋद्ध्या

रोहेणं,सव्वपुप्फवत्थगंधमल्लालंकारविभूसाए, सव्वतुडियसद्दसंणिणाएणं, महया इड्ढीए,महया जुईए,महया बलेणं,महया वाहणेणं, महया समुदएणं, महया वरतुडियजमगसमगप्पवाईएणं, संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कदुंदुहिणिग्घोसणाइयरवेणं, कुंडपुरं णगरं मज्झंमज्झेणं णिग्गच्छइ, णिग्ग-

व्रताय व्रजंतं भगवंतं पृष्ठतश्चतुरंगसैन्यपरिकलितो ललितछत्रचामरविराजितो नंदिवर्द्धननृपोऽनुगच्छति, क्रमाच्च पूर्वोक्ताडंबरेण युक्तो भगवान् क्षत्रियकुंडनगरस्य मध्यभागेन निर्गच्छति,

घोपेण च अतिकोमलेन जनस्वरेण पडिवुज्झमाणे पडिवुज्झमाणे त्ति सावधानी भवन् 'सविड्डी' इत्यादि सर्वर्द्ध्या समस्तछत्रादिराजचिह्नरूपया, सर्वद्युत्या आभरणादिसंबंधिन्या कांत्या, सर्वबलेन हस्तितुरगादिरूपकटकेन, सर्ववाहनेन करभवेसरशिविकादिरूपेण, सर्वसमुदयेन महाजनमेलकेन, सर्वादरेण सर्वौ-

तुडियगीयवाईयरवेणं महुरेण य मणहरेणं जयजयसद्दघोसमीसिएणं
मंजुमंजुणा घोसेण य पडिवुज्झमाणे पडिवुज्झमाणे, सव्विड्ढीए, सव्वज्जुईए,
सव्वबलेणं, सव्ववाहणेणं, सव्वसमुदएणं, सव्वायरेणं, सव्वविभूईए, सव्वविभूसाए,
सव्वसंभमेणं, सव्वसंगमेणं, सव्वपगईहिं, सव्वणाडएहिं, सव्वतालायरेहिं, सव्वाव-

चित्यकरणेन, सर्वविभूत्या सर्वसंपदा, सर्वविभूषया समस्तशोभया, सर्वसंभ्रमेण प्रमोदजनितौत्सुक्येन, सर्वसंगमेन सर्वस्वजनमेलापकेन, सर्वप्रकृतिभिः अष्टादशभिर्नैगमादिनगरवास्तव्यप्रजाभिः, सर्वनाट-

प्पमाणेत्ति विशेपेण स्पृह्यमानः, वयं एतस्य सेवका अपि भवामस्तदापि वरं इति चिंत्यमानः, पुनः किं०? कांतिरूपगुणैः पत्थिज्जमाणे पत्थिज्जमाणेत्ति प्रार्थ्यमानः २ स्वामित्वेन भर्तृत्वेन वांछ्यमान इत्यर्थः, पुनः किं०? अंगुलिमालासहस्रैः दाइज्जमाणे दाइज्जमाणेत्ति दर्श्यमान० २, पुनः किं०? दक्षिणहस्तेन बहूनां नरनारीसहस्राणां अंजलिसहस्राणि नमस्कारान् पडिच्छमाणे

पत्थिज्जमाणे पत्थिज्जमाणे, अंगुलिमालासहस्सेहिं दाइज्जमाणे दाइज्जमाणे, दाहिणहत्थेणं बहूणं णरणारिसहस्साणं अंजलिमालासहस्साइं पडिच्छमाणे पडिच्छमाणे, भवणपंतिसहस्साइं समइक्कमाणे समइक्कमाणे, तंतीतलताल-

पडिच्छमाणेत्ति प्रतीच्छन् २ गृह्णन् २, पुनः किं०? भवनपंक्तिसहस्राणि समइक्कमाणे समइक्कमाणेत्ति समतिक्रामन् २, पुनः किं०? तंतीत्यादि– तंत्रीतलतालत्रुटितगीतवादित्राणि प्राग्वर्णितानि तेषां रवेण मधुरेण मनोहरेण जयजयशब्दस्य यो घोष उद्घोषणं तेन मिश्रितेन मंजुमंजुना

तएणं इत्यादि– ततः श्रमणो भगवान् महावीरः क्षत्रियकुंडग्रामनगरमध्येन भूत्वा यत्र ज्ञातखंडवनं यत्राऽशोकपादपस्तत्र उपागच्छतीति योजना, अथ किंविशिष्टः सन् ? णयणमालासहस्सेहिं नयनमालासहस्रैः पिच्छिज्जमाणे पिच्छिज्जमाणे प्रेक्ष्यमाणः २ पुनः पुनर्विलोकमानसौन्दर्यः, पुनः किं० ?

तएणं समणे भगवं महावीरे णयणमाला सहस्सेहिं पिच्छिज्जमाणे
पिच्छिज्जमाणे, वयणमालासहस्सेहिं अभिथुव्वमाणे अभिथुव्वमाणे,
हियमालासहस्सेहिं उण्णंदिज्जमाणे उण्णंदिज्जमाणे, मणोरह-
मालासहस्सेहिं विच्छिप्पमाणे विच्छिप्पमाणे, कंतिरूवगुणेहिं

वदनमालासहस्रैः श्रेणिस्थितलोकानां मुखपंक्तिसहस्रैः अभिथुव्वमाणे अभिथुव्वमाणेत्ति पुनः पुनः अभिष्टूयमानः, पुनः किं० ? हृदयमालासहस्रैः उण्णंदिज्जमाणे उण्णंदिज्जमाणेत्ति उन्नंद्यमानो जयतु जीवतु इत्यादिध्यानेन समृद्धिं प्राप्यमाणः, पुनः किं० ? मनोरथमालासहस्रैः विच्छिप्पमाणे विच्छिप-

हंता इति हत्वा, कां? परीसहचमूं परीषहसेनां, जयजयेत्यादि— जय जय क्षत्रियवरवृषभ! बहून् दिवसान्, बहून् पक्षान्, बहून्मासान्बहून् ऋतून् मासद्वयप्रमितान् हेमंतादीन्, बहूनि अयनानि षाण्मासिकानि दक्षिणोत्तरायणलक्षणानि,बहून् सवत्सरान् यावत् ,परीषहोपसर्गेभ्योऽभीत• सन् भयभैर-

अकुडिलेण, हंता परीसहचमूं, जय जय खत्तियवरवसहा! बहूइं दिवसाइं, बहूइं पक्खाइं, बहूइं मासाइं,बहूइं उऊइं, बहूइं अयणाइं, बहूइं संवच्छराइं, अभीए परीसहोवसग्गाणं, खंतिखमे भयभेरवाणं,धम्मे ते अविग्घं भवउत्तिकट्टु जय-जय सद्दं पउंजंति॥११४॥

वाणां विद्युत्सिंहादिकानां खंतिखमे क्षांत्या क्षमो नत्वसामर्थ्यादिना एवंविधः सन् त्वं जय, अपरं च ते तव धर्मे अविघ्नं विघ्नाभावोऽस्तु, इति कृत्वा इत्युक्त्वा जयजयशब्दं प्रयुंजते स्वजना एव ॥११४॥

इत्यर्थः, केन ? तपसा वाह्याभ्यंतरेण, तथा धिइधणियवद्धकच्छे धृतौ संतोषे, धैर्ये वा 'धणिअत्ति' अत्यर्थं वद्धकक्षः सन् अष्ट कर्मशत्रून् मर्दय, परं केनेत्याह, ध्यानेन उत्तमेन शुक्लेनेत्यर्थः, तथा हेवीर! अप्रमत्तः सन् तेलोक्करंगमज्झे त्रैलोक्यं एव यो रंगो मल्लयुद्धमंडपस्तस्य मध्ये आराहणपडागं आरा-

तवेणं धिइधणियवद्धकच्छे मद्दाहि अट्ठकम्मसत्तू झाणेणं उत्तमेणं सुक्केणं,
अप्पमत्तो हराहि आराहणपडागं च वीर! तेलुक्करंगमज्झे, पावय वितिमि-
रमणुत्तरं केवलवरणाणं, गच्छ य मुक्खं परमपयं जिणवरोवइट्ठेण मग्गेण

धनपताकां हराहि आहर गृहाणं, यथा—कश्चिन्मल्लः प्रतिमल्लं विजित्य जयपताकां गृह्णाति तथा त्वं कर्मशत्रून् विजित्य आराधनपताकां गृहाण इति भावः, प्राप्नुहि च वितिमिरं तिमिररहितं अनुपमं केवलवरज्ञानं, गच्छ च मोक्षं परं पदं, केन ? जिनवरोपदिष्टेन अकुटिलेन मार्गेण, अथ किंकृत्वेत्याह,

ताभिरिष्टादिविशेषणोपेताभिर्वाग्भिः अभिनंदंतः अभिष्टुवंतश्च एवं अवादिषुः ॥ ११३ ॥ जयजयणंदा जयजयवान् भव हे समृद्धिमन् ! जयजयभद्दा भद्दं ते जयजयवान् भव, हे 'भद्दा' भद्रकारक ! ते तुभ्यं भद्रं अस्तु, किंच अभग्नैर्निरतिचारैर्ज्ञानदर्शनचारित्रैः अजितानि इंद्रियाणि जिणाहित्ति जय

जय जय णंदा ! जय जय भद्दा ! भद्दं ते अभग्गेहिं णाणदंसणचरित्तेहिं
अजिआइं जिणाहि इंदियाइं, जिअं च पालेहि समणधम्मं, जिअ-
विग्घोविय वसाहि तं देव ! सिद्धिमज्झे, निहणाहि रागदोसमल्ले,

वशीकुरु, जितं च स्ववशीकृतं पालय श्रमणधर्मं जियविग्घोविय जितविघ्नोऽपि च हे देव ! प्रभो ! त्वं वस, कुत्र ? सिद्धिमध्ये, अत्र सिद्धिशब्देन श्रमणधर्मस्य वशीकारस्तस्य मध्यं लक्षणया प्रकर्षस्तत्र त्व निरंतरायं तिष्ठेत्यर्थः, तथा णिहणाहिरागदोसमल्ले रागद्वेषमल्लौ निजहि निग्रहाण तयोर्निग्रहं कुरु,

तदनंतरं सदेवमणुयासुराए देवमनुजासुरसहितया परिसाए स्वर्गमर्त्यपातालवासिन्या पर्षदा समणुगम्ममाणमग्गे सम्यग् अनुगम्यमानं 'अग्गेत्ति' अग्रतः संखियत्तिः शांखिकाः शंखवादकाः चक्कियत्ति चाक्रिकाश्चक्रप्रहरणधारिणः लंगलियत्ति लांगलिका गलावलंबितसुवर्णादिमयलांगलाकारधारिणो

चंदप्पभाए सिवियाए सदेवमणुयासुराए परिसाए समणुगम्ममाणमग्गे
संखिय-चक्किय-लंगलिय-मुहमंगलिय-वद्धमाण-पूसमाण-घंटियगणेहिं ताहिं
जाव वग्गूहिं अभिणंदमाणा य अभिथुव्वमाणा य एवं वयासी ॥ ११२ ॥

भट्टविशेषाः मुहमंगलिअत्ति मुखे प्रियवक्तारश्चाटुकारिण इत्यर्थः वद्धमाणत्ति वर्द्धमानाः स्कंधारोपितपुरुषाःपुरुषाः पूसमाणत्ति पुष्पमाणवा मागधाः घंटियत्ति घंटया चरंतीति घांटिकाः 'राउलिया' इति लोके प्रसिद्धाः एतेषां गणैः परिवृतं च भगवंतं प्रक्रमात् कुलमहत्तरादयः स्वजनाः 'ताहिं' इत्यादि–

॥ ७ ॥ हस्तांबुजाभ्यां शुचिमौक्तिकौघै–रवाकिरन् काश्चन चंचलाक्ष्यः । काश्चिज्जगुर्मंजुलमंगलानि, प्रमोदपूर्णा ननृतुश्च काश्चित् ॥ ८ ॥" इत्थं नागरनागरीनिरीक्ष्यमाणविभवप्रकर्षस्य भगवतः पुरतः प्रथमतो रत्नमयान्यष्टौ मंगलानि क्रमेण प्रस्थितानि, तद्यथा–स्वस्तिकः (१) श्रीवत्सो (२) नंद्यावर्त्तो (३) वर्द्धमानकं (४) भद्रासनं (५) कलशो (६) मत्स्ययुग्मं (७) दर्पणश्च (८) ततः क्रमेण पूर्णकलशभृंगारचामराणि, ततो महती वैजयंती, ततः छत्रं, ततो मणिस्वर्णमयं सपादपीठं सिंहासनं, ततोऽष्टशतं आरोहरहितानां वरकुंजरतुरगाणां, ततस्तावंतो घंटापताकाभिरामा शस्त्रपूर्णरथा, ततस्तावंतो वरपुरुषाः, ततः क्रमेण हय (१) गज (२) रथ (३) पदात्य (४) नीकानि, ततो लघुपताकासहस्रपरिमंडितः सहस्रयोजनोच्चो महेंद्रध्वजः, ततः खड्गग्राहाः कुंतग्राहाः पीठफलकग्राहाः, ततो हासकारका नर्तकारकाः कांदर्पिका जय २ शब्दं प्रयुंजानास्तदनंतरं बहव उग्रा भोगा राजन्याः क्षत्रियास्तलवरा माडंबिकाः कौटुंबिकाः श्रेष्ठिनः सार्थवाहा देवा देव्यश्च स्वामिनः पुरतः प्रस्थिताः,

विविधचेष्टाभिर्जनान् विस्मापयंति स्म, यतः–"तिन्निवि थीआं वल्लहां, कलिकज्जलसिंदूर। ए पुण अतिहिं वल्लहां, दुद्धजमाईतूर ॥ १ ॥" चेष्टाश्चेमाः–"स्वगल्लयोः काचनकज्जलांकं, कस्तूरिकाभिर्नयनांजनं च । गले चलन्नूपुरमंघ्रिपीठे, ग्रैवेयकं चारु चकार वाला ॥ १ ॥ कटीतटे कापि ववंध हारं, कांची क्कणत्किंकिणिकां च कंठे । गोशीर्षपंकेन ररंज पादा–वलक्तपंकेन वपुर्लिलेप ॥ २ ॥ अर्धस्नाता काचन वाला, विगलत्सलिला विश्लथवाला । तत्र प्रथममुपेता त्रासं, व्यधित न केषां ज्ञाता हासम् ॥ ३ ॥ कापि परिच्युतविश्लथवसना, मूढा करधृतकेवलरसना । चित्रं तत्र गता न ललज्जे, सर्वजने जिनवीक्षणसज्जे ॥ ४ ॥ संत्यज्य काचित्तरुणी रुदंतं, स्वपोतमोतुं च करे विधृत्य । निवेश्य कट्यां त्वरया व्रजंती, हासावकाशं न चकार केषाम् ॥ ५ ॥ अहो ! महो रूपमहो ! महौजः, सौभाग्यमेतत्कटरे शरीरे । गृह्णामि दुःखानि करस्य धातु–र्यच्छिल्पमीदृग्वदाति स्म काचित् ॥ ६ ॥ काश्चिन्महेला विकसत्कपोलाः, श्रीवीरवक्त्रेक्षणगाढलोलाः । विस्रस्य दूरं पतितानि तानि, नाऽज्ञासिषुः कांचनभूषणानि

श्याकः पूर्वाभिमुखः सिंहासने निषीदति, शिविकारूढस्य च प्रभोर्दक्षिणतः कुलमहत्तरिका हंसलक्षणं पटशाटकमादाय, वामपार्श्वे च प्रभोरंबधात्री दीक्षोपकरणमादाय, पृष्टे चैका वरतरुणी स्फारश्रृंगारा धवलच्छत्रहस्ता, ईशानकोणे चैका पूर्णकलशहस्ता, अग्निकोणे चैका मणिमयतालवृंतहस्ता भद्रासने निषीदंति । ततः श्रीनंदिनृपादिष्टाः पुरुषा यावत् शिविकामुत्पाटयंति तावत् शक्रो दाक्षिणात्यां उपरितनीं बाहां, ईशानेंद्र औत्तराहां उपरितनीं बाहां, चमरेंद्रो दाक्षिणात्यां अधस्तनीं बाहां, बलींद्र औत्तराहां अधस्तनीं बाहां, शेषाश्च भवनपतिव्यंतरज्योतिष्कवैमानिकेंद्राश्चंचलकुंडलाद्याभरणकिरणरमणीयाः पंचवर्णपुष्पवृष्टिं कुर्वंतो दुंदुभीस्ताडयंतो यथार्हं शिविकां उत्पाटयंति, ततः शक्रेशानौ तां बाहां त्यक्त्वा भगवतश्चामराणि वीजयतः, तदा च भगवति शिविकारूढे प्रस्थिते सति शरदि पद्मसर इव, पुष्पितं अतसीवनमिव, कर्णिकारवनमिव, चंपकवनमिव, तिलकवनमिव, रमणीयं गगनतलं सुरवरैरभूत्, किंच निरंतरवाद्यमानभंभाभेरीमृदंगदुंदुभिशंखाद्यनेकवाद्यध्वनिर्गगनतले भूतले च प्रससार, तन्नादेन च नगरवासिन्यस्त्यक्तस्वकार्या नार्यः समागच्छंत्यो

स्तीर्णां षट्त्रिंशद्धनुरुच्चां बहुस्तंभशतसन्निविष्टां मणिकनकविचित्रां दिव्यानुभावतः सुरकृततादृक्शिविकामनुप्रविष्टां चंद्रप्रभाभिधां शिबिकां आरूढो दीक्षाग्रहणार्थं प्रतस्थे, शेषं सूत्रकृत्स्वयं वक्ष्यंति ॥ ११२ ॥ तेणं कालेणं तस्मिन्काले तस्मिन्समये मार्गशीर्षकृष्णदशम्यां पाईणगामिणीए छायाए

**तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से हेमंताणं पढमे मासे पढमे पक्खे मग्गसिरबहुले तस्सणं मग्गसिरबहुलस्स दसमीपक्खे णं पाईणगामिणीए छायाए पोरिसीए अभिणिविट्ठाए पमाणपत्ताए सुव्वए णं दिवसे णं विजए णं मुहुत्ते णं**

पूर्वदिग्गामिन्यां छायायां पोरिसीए अभिणिविट्ठाए पौरुष्यां पाश्चात्यपौरुष्यां अभिनिर्वृत्तायां जातायां, कथंभूतायां ? पमाणपत्ताए प्रमाणप्राप्तायां नतु न्यूनाधिकायां सुव्वएणं दिवसेणं सुव्रताख्ये दिवसे विजएणं मुहुत्तेणं विजयाख्ये मुहूर्ते, चंद्रप्रभायां पूर्वोक्तायां शिबिकायां कृतषष्ठतपाः विशुद्धमानले-

यूयमित्यूचिरे ॥ १ ॥ एवं च दानं दत्वा पुनर्भगवता नंदिवर्धनः पृष्टः, राजंस्तव सत्कोऽपि अवधिः पूर्णस्तदहं दीक्षां गृह्णामि, ततो नंदिनापि ध्वजहट्टालंकारतोरणादिभिः कुंडपुरं सुरलोकसमं कृतं, ततो नंदिराजः शक्रादयश्च, कनकमयान् (१) रूप्यमयान् (२) मणिमयान् (३) कनकरूप्यमयान् (४) कनकमणिमयान् (५) रूप्यमणिमयान् (६) कनकरूप्यमणिमयान् (७) मृन्मयांश्च (८) प्रत्येकं अष्टोत्तरसहस्रं कलशान् अन्यामपि च सकलां सामग्रीं कारयंति, ततोऽच्युतेंद्राद्यैश्चतुःषष्ट्या सुरेंद्रैरभिषेके कृते, ते सुरकृताः कलशा दिव्यानुभावेन नृपकारितकलशेषु प्रविष्टास्ततस्तेऽत्यंतं शोभितवंतस्ततः श्रीनंदिराजः स्वामिनं पूर्वाभिमुखं निवेश्य सुरानीतक्षीरोदनीरैः सर्वतीर्थमृत्तिकादिभिः सर्वकषायैश्चाभिषेकं करोति, इंद्राश्च सर्वेऽपि भृंगारादर्शादिहस्ता जयजयशब्दं प्रयुंजाना: पुरतस्तिष्ठंति, ततश्च भगवान् स्नातो गंधकाषाय्या रूक्षितांगः सुरचंदनानुलिप्तगात्रः कल्पतरुपुष्पमालामनोहरकंठपीठः कनकखचितांचलस्वच्छोज्ज्वललक्षमूल्यसदशश्वेतवस्त्राधृतशरीरो हारविराजद्वक्षःस्थलः केयूरकटकमंडितभुजदंडः कुंडलललितगल्लतलः श्रीनंदिराजकारितां पंचाशद्धनुरायतां पंचविंशतिधनुर्वि-

याचकास्तेभ्यः परिभाइत्ता विभागैर्दत्वा, यद्वा परिभाव्य आलोच्य इदं अमुकस्य देयं इदं अमुकस्यैवं
विचार्येत्यर्थः, पुनः किंकृत्वा ? दाणं दानं धनं दाइयाणं दायिका गोत्रिकास्तेभ्यः परिभाइत्ता परिभा-
ज्य विभागशो दत्वेत्यर्थः । अनेन च सूत्रेण वार्षिकदानं सूचितं, तच्चैवं—भगवान् दीक्षादिवसात्प्राग्
वर्षेऽवशिष्यमाणे प्रातःकाले वार्षिकं दानं दातुं प्रवर्तते, सूर्योदयादारभ्यकल्पवर्तवेलापर्यंतं अष्टल-
क्षाधिकां एकां कोटिं सौवर्णिकानां प्रतिदिनं ददाति, 'वृणुत वरं वृणुत वरं' इत्युद्घोषणापूर्वकं यो

दाणं दाइयाणं परिभाइत्ता ॥ ११२ ॥

यन्मार्गयति तस्मै तद्दीयते, तच्च सर्वं देवाः शक्रादेशेन पूरयंति, एवं च वर्षेण यद्धनं दत्तं तदुच्यते ।
" तिण्णेव य कोडिसया, अट्ठासीइं च हुंति कोडीओ । असिइं च सयसहस्सं, एयं संवच्छरे दिण्णं
॥ १ ॥" तथाच कवयः—"तत्तद्वार्षिकदानवर्षविरमद्दारिद्र्यदावानलाः, सद्यः सज्जितवाजिराजिवसनालं-
कारदुर्लक्षभाः । संप्राप्ताः स्वगृहेऽर्थिनः सशपथं प्रत्याययंतोऽङ्गनाः, स्वामिन् ! षिङ्गजनैर्निरुद्धहसितैः के

आभोगिकेन ज्ञानदर्शनेन अप्पणोणिक्खमणकालं आत्मनो दीक्षाकालं आभोएइ आभोगयति विलोकयति, आभोग्य च चिच्चा हिरण्णं त्यक्त्वा हिरण्यं, हिरण्यादीनि प्राग्वद्व्याख्येयानि, एतत्सर्वं त्यक्त्वा, पुनः किंकृत्वा ? विच्छड्डइत्ता विच्छर्द्य विशेषेण त्यक्त्वा, पुनः किंकृत्वा ? विगोवइत्ता विगोप्य तदेव

आहोइएणं णाणदंसणेणं अप्पणो णिक्खमणकालं आभोएइ आभोइत्ता चिच्चा हिरण्णं, चिच्चा सुवण्णं, चिच्चा धणं, चिच्चा रज्जं, चिच्चा रट्ठं, एवं बलं वाहणं कोसं कोट्ठागारं, चिच्चा पुरं, चिच्चा अंतेउरं, चिच्चा जणवयं, चिच्चा विपुलधण-कणग-रयण-मणि-मोत्तिय-संख-सिल-प्पवाल-रत्तरयणमाइयं संतसारसावतेज्जं, विच्छड्डइत्ता, विगोवइत्ता, दाणं दायारेहिं परिभाइत्ता

गुप्तं सत् दानातिशयात्प्रकटीकृत्येति भावः, अथवा विगोप्य कुत्सनीयमेतदस्थिरत्वादित्युक्त्वा, पुनः किंकृत्वा ? दीयते इति दानं धनं तत् दायारेहिं दायाय दानार्थं एयूति आगच्छन्तीति दायाराः

जगज्जीवहितं प्रवर्तय धर्मतीर्थं, यत इदं हिअसुहनिस्सेअसकरं हितं हितकारकं, सुखं शर्म, निःश्रेयसं मोक्षस्तत्करं, सर्वलोके सर्वजीवानां भविष्यतीति कृत्वा जय जय शब्दं प्रयुंजते ॥ १११ ॥ 'पुव्विंपिणं' इत्यादितः 'परिभाइत्ता' इति यावत्, तत्र श्रमणस्य भगवतो महावीरस्य माणुस्सगाओ मनुष्यो-

पवत्तेहि धम्मतित्थं हिअसुहणिस्सेयसकरं सव्वलोए सव्वजीवाणं भविस्स-
इत्तिकट्टु जयजयसद्दं पउंजंति ॥ १११ ॥ पुव्विंपि णं समणस्स भगवओ
महावीरस्स माणुस्सगाओ गिहत्थधम्माओ अणुत्तरे आहोइए अप्पडि-
वाई णाणदंसणे होत्था । तएणं समणे भगवं महावीरे तेणं अणुत्तरेणं

चितात् गृहस्थधर्मात् विवाहादेः पुव्विंपि पूर्वं अपि अनुत्तरं अनुपमं आहोइए आभोग उपयोगः सः प्रयोजनं यस्य तत् आभोगिकं अप्पडिवाइ अप्रतिपाति आकेवलोत्पत्तेः स्थिरं एवंविधं णाणदंसणे ज्ञानदर्शनं अवधिज्ञानं अवधिदर्शनं च होत्थत्ति अभूत्, ततः श्रमणो भगवान्महावीरस्तेन अनुत्तरेण

एहिं जीतेन अवश्यंभावेन कल्प आचारो जीतकल्पः सोऽस्ति येषां ते जीतकल्पिकास्तैः देवेहिं विभक्तिपरावर्त्तात् ते देवाः ताहिं ताभिः इट्ठाहिं इष्टाभिः जावत्ति यावच्छब्दात् 'कंताहिं मणुण्णाहिं'इत्यादिः पूर्वोक्तः पाठो वाच्यः वग्गूहिं वाग्भिः अणवरयं निरंतरं भगवंतं अभिणंदमाणायत्ति अभिनंदयंतः समृद्धिमंतं आचक्षाणाः अभिथुव्वमाणायत्ति अभिष्टुवंतः स्तुतिं कुर्वन्तः सन्तः एवंवयासित्ति एवं

देवेहिं ताहिं इट्ठाहिं जाव वग्गूहिं अणवरयं अभिणंदमाणा य अभिथुव्वमाणा य एवं वयासी ॥ ११० ॥ जय २ णंदा ! जय २ भद्दा! भद्दं ते जय जय खत्तियवरवसहा! बुज्झाहि भगवं! लोगणाहा! सयलजगज्जीवहियं

अवादिषुः ॥ ११० ॥ जयजयणंदा ! 'जयजयत्ति' जयं लभस्व संभ्रमे द्विर्वचनं, नंदति समृद्धो भवतीति नंदस्तस्य संबोधनं हे नंद ! दीर्घत्वं प्राकृतत्वात्, एवं जयजयभद्दत्ति जय जय भद्र ! कल्याणवन् ! भद्दं ते ते तव भद्रं भवतु, जय जय क्षत्रियवरवृषभ ! बुज्झाहि बुध्यस्व भगवन् ! लोकनाथ ! सकल-

भगवता अचित्तजलेनापि सर्वस्नानं न कृतं, ब्रह्मचर्यं च यावज्जीवं पालितं, दीक्षोत्सवे तु सचित्तोदकेनापि स्नानं कृतं, तथाकल्पत्वात्। एवं भगवंतं वैरंगिकं विलोक्य चतुर्दशस्वप्नसूचितत्वात् चक्रवर्त्तिधिया सेवमानाः श्रेणिकचंडप्रद्योतादयो राजकुमाराः स्वं स्वं स्थानं जग्मुः। पुणरविलोअंतिएहिं पुनरपीति विशेषद्योतने, एकं तावत्समाप्तप्रतिज्ञः स्वयमेव भगवान् वर्त्तते, पुनरपि लौकांतिकैर्देवैर्बोधित इति विशेषो द्योत्यते, 'लोकांते संसारांते भवा लौकांतिका एकावतारत्वात्, अन्यथा ब्रह्मलो-

## पुणरवि लोअंतिएहिं जीअकप्पिएहिं

कवासिनां तेषां लोकांतभवत्वं विरुद्ध्यते, ते च नवविधाः, यदुक्तम्—"सारस्सय १ माइच्चा २, वण्ही ३ वरुणा य ४ गद्दतोया य ५। तुसिआ ६ अव्वाबाहा ७, अग्गिच्चा ८ चेव रिट्ठा य ९॥ १॥ एए देवनिकाया, भयवं बोहिंति जिणवरिंदं तु। सव्वजगज्जीवहिअं, भयवं! तित्थं पवत्तेहि ॥ २ ॥" यद्यपि स्वयंबुद्धो भगवांस्तदुपदेशं नाऽपेक्षते, तथापि तेषां अयं आचारो वर्त्तते, तदेवाह। जीअकप्पि-

अष्टाविंशतिवर्षातिक्रमे भगवतो मातापितरौ आवश्यकाभिप्रायेण तुर्यं स्वर्गं, आचारांगाभिप्रायेण तु अनशनेन अच्युतं गतौ। ततो भगवता ज्येष्ठभ्राता पृष्टः, राजन्! ममाऽभिग्रहः संपूर्णोऽस्ति ततोऽहं प्रव्रजिष्यामि, ततो नंदिवर्द्धनः प्रोवाच, भ्रातः! मम मातापितृविरहदुःखितस्य अनया वार्तया किं क्षते क्षारं क्षिपसि? ततो भगवता प्रोक्तं–"पिअमाइभाइभयणी–भज्जापुत्तत्तणेण सव्वेवि। जीवा जाया बहुसो, जीवस्स उ एगमेगस्स ॥ १ ॥" ततः कुत्र २ प्रतिबंधः क्रियते? इति निशम्य नंदिवर्द्धनो-

गुरुमहत्तरएहिं अब्भणुण्णाए सम्मत्तपइण्णे ॥

ऽवोचत्, भ्रातः! अहमपीदं जानामि, किंतु प्राणतोऽपि प्रियस्य तव विरहो मां अतितमां पीडयति, ततो मदुपरोधाद्वर्षद्वयं गृहे तिष्ठ, भगवानपि एवं भवतु, किंतु राजन्! मदर्थं न कोऽपि आरंभः कार्यः, प्रासुकाशनपानेनाहं स्थास्यामि इत्यवोचत्, राज्ञाऽपि तथाप्रतिपन्ने सति समधिकं वर्षद्वयं वस्त्रालंकारविभूषितोऽपि प्रासुकैषणीयाहारः सचित्तं जलं अपि अपिबन् भगवान् गृहे स्थितः, ततः प्रभृति

विणीए विनीतो विनयवान् णाए ज्ञातः प्रख्यातः णायपुत्ते ज्ञातः सिद्धार्थस्तस्य पुत्रः, न केवलं पुत्रमात्रः, किंतु णायकुलचंदे ज्ञातकुले चंद्र इव विदेहे वज्रऋषभनाराचसंहननसमचतुरस्रसंस्थानमनोहरत्वात् विशिष्टं देहं यस्य स विदेहः विदेहदिण्णे विदेहदिन्ना त्रिशला तस्या अपत्यं वैदेहदिन्नः विदेहजच्चे विदेहा त्रिशला तस्यां जाता 'अच्चत्ति' अर्चा शरीरं यस्य स तथा विदेहसूमाले विदेह-

विणीए णाए णायपुत्ते णायकुलचंदे विदेहे विदेहदिण्णे विदेहजच्चे
विदेहसूमाले तीसं वासाइं विदेहंसि कट्टु अम्मापिईहिं देवत्तगएहिं

शब्देन अत्र गृहवास उच्यते, तत्र 'सुमालेत्ति' सुकुमालः, दीक्षायां तु परीषहादिसहने अतिकठोरत्वात् तीसं वासाइं त्रिंशद्वर्षाणि विदेहंसि गृहवासे कट्टु कृत्वा त्रिंशद्वर्षाणि गृहस्थभावे स्थित्वेत्यर्थः अम्मापिईहिं इत्यादि– मातापित्रोर्देवत्वं गतयोर्गुरुमहत्तरैर्नंदिवर्द्धनादिभिरभ्यनुज्ञातः समाप्तप्रतिज्ञश्च 'मातापित्रोर्जीवतोर्नाहं प्रव्रजिष्यामीति' गर्भगृहीतायाः प्रतिज्ञायाः पूरणात् । स व्यतिकरस्त्वेवम्—

गमनिका त्वेवम् । श्रमणस्य भगवतो महावीरस्य पितुः काश्यपगोत्रिणः त्रीणि नामध्येयानि–सिद्धार्थः (१) श्रेयांसः (२) यशश्वी (३)। मातुर्वाशिष्ठगोत्रायास्त्रीणि नामानि–त्रिशला (१) विदेहदिन्ना (२) प्रीतिकारिणी (३)। पितृव्यः 'सुपार्श्व.'। ज्येष्ठभ्राता 'नंदिवर्द्धनः'। भगिनी 'सुदर्शना'। भार्या 'यशोदा' गोत्रेण कौडिन्या। पुत्री काश्यपगोत्रा तस्या द्वे नामधेये 'अणोज्जा' (१) 'प्रिय-

समणे भगवं महावीरे दक्खे दक्खपइण्णे पडिरूवे आलीणे भद्दए

दर्शना' (२)। दौहित्र्या द्वे नाम्नी 'शेपवती' (१) 'यशस्वती' (२) ॥ १०९ ॥

समणेभगवंमहावीरे श्रमणो भगवान् महावीरः दक्खे दक्षः सकलकलाकुशलः दक्खपइण्णे दक्षा निपुणा प्रतिज्ञा यस्य स तथा, समीचीनां एव प्रतिज्ञां करोति, तां च सम्यक् निर्वहतीति भावः, तथा पडिरूवे प्रतिरूपः सुंदररूपवान् आलीणे आलीनः सर्वगुणैरालिंगितः भद्दए भद्रकः सरलः

शिशुरेष विप्र ! नाशंकनीयो भवता स्वचित्ते । विश्वत्रयीनायक एष वीरो, जिनेश्वरो वाङ्मयपारदृश्वा ॥ ३ ॥" इत्यादि श्रीवर्द्धमानस्तुतिं निर्माय शक्रः स्वस्थानं जगाम । भगवानपि सकलज्ञातक्षत्रियपरिकलितः स्वगृहमगात् ॥ इति लेखशालाकरणम् ॥

एवं बाल्यावस्थानिवृत्तौ संप्राप्तयौवनो भोगसमर्थो भगवान् मातापितृभ्यां शुभे मुहूर्ते समरवी-

तीसे दो णामधिज्जा एवमाहिज्जंति, तंजहा—अणोज्जा इवा, पियदंसणा इवा । समणस्स णं भगवओ महावीरस्स नत्तुई कोसियगोत्तेणं तीसे णं दो णामधिज्जा एवमाहिज्जंति, तंजहा—सेसवई इवा, जसवई इवा ॥ १०९ ॥

रनृपपुत्रीं यशोदां परिणायितः, तया च सह सुखमनुभवतो भगवतः पुत्री जाता, साऽपि प्रवरनरपतिसुतस्य स्वभागिनेयस्य जमालेः परिणायिता, तस्या अपि शेषवती नाम्नी पुत्री, सा च भगवतो 'नत्तुई' दौहित्रीत्यर्थः । समणस्स णं भगवओ महावीरस्स इत्यादितः जसवई इवा इत्यंतं सुगमम् ।

नान्, यान् संशयान्कोऽपि निरासयन्न । बिभेद तांस्तान्निखिलान् स एष, बालोऽपि भोः ! पश्यत चित्रमेतत् ॥ १ ॥" किंच- अहो ! ईदृशस्य विद्याविशारदस्यापि ईदृशं गांभीर्यम् ! अथवा युक्तमेवेदं ईदृशस्य महात्मनः, यतः-"गर्जति शरदि न वर्षति, वर्षति वर्षासु निःस्वनो मेघः । नीचो वदति न

॥ ५ ॥

गुत्ते णं तीसे तओ णामधिज्जा एवमाहिज्जंति, तंजहा—तिसला इवा, विदेहदिण्णा इवा, पीइकारिणी इवा । समणस्सणं भगवओ महावीरस्स पित्तिज्जे सुपासे, जेट्ठे भाया णंदिवद्धणे, भगिणी सुदंसणा, भारिया जसोया कोडिण्णगोत्ते णं, समणस्स णं भगवओ महावीरस्स धूआ कासवगोत्ते णं

कुरुते, न वदति साधुः करोत्येव ॥१॥" तथा-"असारस्य पदार्थस्य, प्रायेणाडंबरो महान् । नहि स्वर्णे ध्वनिस्तादृक्, यादृक् कांस्ये प्रजायते ॥ २ ॥" इत्यादि चिंतयंतं पंडितं शक्रः प्रोवाच,-"मनुष्यमात्रं

बुराशेः, प्रभोः पुरो यद्वचसां विलासः ॥२॥" यतः—"अनध्ययनविद्वांसो, निर्द्रव्यपरमेश्वराः । अनलंकारसुभगाः, पांतु युष्मान् जिनेश्वराः ॥ १ ॥" इत्यादि वदन् कृतब्राह्मणरूपस्त्वरितं यत्र भगवान् तिष्ठति तत्र पंडितगेहे समाजगाम, आगत्य च पंडितयोग्ये आसने भगवंतं उपवेश्य पंडितमनोगतान् संदेहान् पप्रच्छ, श्रीवीरोऽपि बालोऽयं किं वक्ष्यतीत्युत्कर्णेषु सकललोकेषु सर्वाणि उत्तराणि

समणस्स णं भगवओ महावीरस्स पिया कासवगोत्ते णं तस्स णं
तओ णामधिज्जा एवमाहिज्जंति, तंजहा—सिद्धत्थे इवा,सिज्जंसे इवा,
जसंसे इवा । समणस्स णं भगवओ महावीरस्स माया वासिट्ठस-

ददौ, ततो 'जैनेंद्रं व्याकरणं' जज्ञे । यतः—"सक्को य तस्समक्खं, भगवंतं आसणे निवेसित्ता । सद्दस्स लक्खणं पुच्छे, वागरणं अवयवा इंदं ॥ १ ॥" सर्वेऽपि जना विस्मयं प्रापुः, अहो ! बालेनाऽपि वर्द्धमानकुमारेण एतावती विद्या कुत्राऽधीतेति, पंडितोऽपि चिंतयामास,—"आबालकालादपि मामकी-

टक-खर्जूरसितोपलास्तथा खंडा । चारुकुलिचारुबीजा-द्राक्षादिसुखाशिकावृंदम् ॥ ५ ॥ सौवर्णराजरा-जत-मिश्राणि च पुस्तकोपकरणानि । कमनीयमषीभाजन- लेखनिकापट्टिकादीनि ॥ ६ ॥ वाग्देवी-प्रतिमार्चा- कृतये सौवर्णभूषणं भव्यम् । नव्यबहुरत्नखचितं, छात्राणां विविधवस्त्राणि ॥ ७ ॥ इत्या-दिसमग्रपठनसामग्रीसहितः कुलवृद्धाभिस्तीर्थोदकैः स्नापितः परिहितप्रचुरालंकारभासुरः शिरोधृतमे-घाडंबरच्छत्रश्चतुश्चामरवीजितांगश्चतुरंगसैन्यपरिवृतो वाद्यमानानेकवादित्रः पंडितगेहं उपाजगाम, पंडितोऽपि भूपालपुत्रपाठनोचितां पर्वपरिधेयक्षीरोदकधौतिकहेमयज्ञोपवीतकेसरतिलकादिसामग्रीं यावत्करोति तावत्पिप्पलपर्णवत्, गजकर्णवत्, कपटिध्यानवन्नृपतिमानवत्, चलाचलसिंहासनः शक्रो-ऽवधिना ज्ञाततत्स्वरूपो देवान् इत्थं अवादीत् । अहो ! महच्चित्रं ! यद्भगवतोऽपि लेखशालायां मोचनं, यतः—"साम्रे वंदनमालिका स मधुरीकारः सुधायाः स च, ब्राह्म्याः पाठविधिः स शुभ्रिमगुणारोपः सुधादीधितौ । कल्याणे कनकच्छटाप्रकटनं पावित्र्यसंपत्तये, शास्त्राध्यापनमर्हतोऽपि यदिदं सल्लेख-शालाकृतेः ॥ १ ॥ मातुः पुरो मातुलवर्णनं तत्, लंकानगर्यां लहरीयकं तत् । तत्प्राभृतं लावणमं-

वर्द्धमानेनेति वदन् श्रीवीरं स्कंधे समारोप्य भगवद्भापनाय सप्ततालप्रमाणशरीरः संजातो, भगवानपि तत्स्वरूपं विज्ञाय वज्रकठिनया मुष्ट्या तत्पृष्ठं जघान, सोऽपि तत्प्रहारवेदनापीडितो मशक इव संकोचं प्राप, ततश्च शक्रवचनं सत्यं मन्यमानः प्रकटितस्वरूपः सर्वं पूर्वं व्यतिकरं निवेद्य भूयो भूयो निजं अपराधं क्षमयित्वा स्वस्थानं जगाम स देवः । तदा च संतुष्टचित्तेन शक्रेण 'श्रीवीर' इति भगवतो नाम कृतम् । यदुक्तम्—"बालत्तणेवि सूरो, पयईए गुरुपरक्कमो भयवं । वीरुत्ति कयं णाम, सक्केणं तुट्ठचित्तेणं ॥ १ ॥" इत्यामलकीक्रीडा ॥

अथ तं मातापितरौ, विज्ञौ ज्ञात्वाऽष्टवर्षमिति मोहात् । वरममितालंकारै-रुपनयतो लेखशालायाम् ॥ १ ॥ लग्नदिवसव्यवस्थिति-पुरःसरं परमहर्षसंपन्नौ । प्रौढोत्सवान् महार्हान्, वितेनतुर्घनधनव्ययतः ॥ २ ॥ तथाहि—गजतुरगसमूहैः स्फारकेयूरहारैः, कनकघटितमुद्राकुंडलैः कंकणाद्यैः । रुचिरतरदुकूलैः पंचवर्णैस्तदानीं, स्वजनमुखनरेंद्राः सत्क्रियंते स्म भक्त्या ॥ ३ ॥ तथा—पंडितयोग्यं नानावस्त्रालंकारनालिकेरादि । अथ लेखशालिकानां, दानार्थमनेकवस्तूनि ॥ ४ ॥ तथाहि—पूगीफलशृंगा-

क्रीडानिमित्तं पुराद्बहिर्जगाम, तत्र च कुमारा वृक्षारोहणादिप्रकारेण क्रीडंतिस्म, अत्रांतरे सौधर्मेन्द्रः सभायां श्रीवीरस्य धैर्यगुणं वर्णयन्नास्ते, यदुत पश्यत भो देवाः! सांप्रतं मनुष्यलोके श्रीवर्द्धमानकुमारो बालोऽप्यबालपराक्रमः शक्रादिभिर्देवैरपि भापयितुं अशक्यः, कटरे बालस्यापि धैर्यम्! तदाकर्ण्य च कश्चिन्मिथ्यादृग्देवश्चिंतयामास, अहो शक्रस्य प्रभुत्वाभिमानेन निरंकुशा निर्विचारा पुम्बिकापातेन नगराक्रमणमिवाऽश्रद्धेया च वचनचातुरी! यदिमं मनुष्यकीटपरमाणुं अपि इयंतं प्रकर्षं प्रापयति! तदद्यैव तत्र गत्वा तं भापयित्वा शक्रवचनं मृषा करोमि, इति विचिंत्य मर्त्यलोकमागत्य शिंशपामुसलस्थूलेन लोलजिह्वायुगलेन भयंकरफूत्कारेण क्रूरतराकारेण प्रसरत्कोपेन पृथुफटाटोपेन दीप्रमणिना महाफणिना तं क्रीडातरुं आवेष्टितवान्, तद्दर्शनाच्च पलायितेषु सर्वेषु बालेषु मनागप्यऽभीतमनाः श्रीवर्द्धमानकुमारः स्वयं तत्र गत्वा तं फणिनं करेण गृहीत्वा दूरं निक्षिप्तवान्, ततः पुनः संगतैः कुमारैः कंदुकक्रीडारसे प्रस्तुते सति स देवोऽपि कुमाररूपं विकुर्व्य तां क्रीडां कर्तुं प्रवृत्ते, तत्र चाऽयं पणः 'पराजितेन जितः स्वस्कंधमारोपणीय इति' क्षणाच्च पराजितं मया, जितं

वीर्यं पराक्रमस्तेन संपन्नः, यतो भगवान् एवंविधस्ततो देवैः 'से' इति तस्य भगवतो नाम कृतं 'श्रमणो भगवान्महावीर' इति तृतीयम् (३) ॥ १०८ ॥

तदिदं नाम देवैः कथं कृतं ? इत्यत्र संप्रदायः—अथैवं पूर्वोक्तयुक्त्या सुरासुरनरेश्वरैः कृतजन्मोत्सवो भगवान् द्वितीयाशशीव मंदारांकुर इव वृद्धिं प्राप्नुवन् क्रमेण एवंविधो जातः—

देवेहिं से णाम कयं समणे भगवं महावीरे ॥ १०८ ॥

[ त्रोटकवृत्ते ]—द्विजराजमुखो गजराजगतिः, अरुणोष्ठपुटः सितदंततति: ।
शितिकेशभरोऽम्बुजमंजुकरः, सुरभिश्वसितः प्रभयोल्लसितः ॥ १ ॥
मतिमान् श्रुतवान् प्रथितावधियुक्, पृथुपूर्वभवस्मरणो गतरुक् ।
मतिकांतिधृतिप्रभृतिस्वगुणै—र्जगतोऽप्यऽधिको जगतीतिलकः ॥ २ ॥

स चैकदा कौतुकरहितोऽपि तेषां उपरोधात्समानवयोभिः कुमारैः सह क्रीडां कुर्वाणः आमलकी-

भगवतो महावीरस्य त्रीणि नामधेयानि एवं आख्यायंते, तत्र मातापितृसत्कं 'वर्धमान' इति प्रथमं(१) सहसमुइयाए सह समुदिता सहभाविनी तपःकरणादिशक्तिस्तया 'श्रमण' इति द्वितीयं नाम (२) अयले भयभेरवाणं भयभैरवयोर्विषये अचलो निष्प्रकंपः, तत्र भयं अकस्माद्भयं विद्युदादिजातं, भैरवं तु सिंहादिकं, तथा परीसहोवसग्गाणं परीषहाः क्षुत्पिपासादयो द्वाविंशति. ( २२ ) उपसर्गाश्च

सहसमुइयाए समणे । अयले भयभेरवाणं परीसहोवसग्गाणं
खंतिखमे पडिमाणं पालए धीमं अरतिरतिसहे दविए वीरियसंपन्ने

दिव्यादयश्चत्वारः, सप्रभेदास्तु षोडश ( १६ ) तेषां खंतिखमे क्षांत्या क्षमया क्षमते, नत्वऽसमर्थतया, यः सः क्षांतिक्षमः पडिमाणं पालए प्रतिमानां भद्रादीनां, एकरात्रिक्यादीनां वा अभिग्रहविशेषाणां पालकः धीमंति धीमान् ज्ञानत्रयाभिरामत्वात् अरतिरतिसहे अरतिरती सहते, न तु तत्र हर्षविषादौ कुरुते इति भावः दविए द्रव्यं तत्तद्गुणानां भाजनं 'रागद्वेषरहित इति वृद्धाः' वीरियसंपन्ने

सुगमम् ॥१०६॥ त जयाण इत्यादितः णामेणं इति पर्यंतं सुगमम् ॥१०७॥ समणेभगवं इत्यादि—श्रमणो

अम्हे हिरण्णेणं वड्ढामो सुवण्णेणं धणेणं धण्णेणं रज्जेणं जाव सावएज्जेणं पीइसक्कारेणं अईव अईव अभिवड्ढामो सामंतरायाणो वसमागया य ॥ १०६ ॥ तं जयाणं अम्हं एस दारए जाए भविस्सइ तयाणं अम्हे एयस्स दारगस्स इमं एयाणुरूवं गुण्णं गुणणिप्पण्णं णामधिज्जं करिस्सामो वद्धमाणुत्ति । ता अम्हं अज्ज मणोरहसंपत्ती जाया तं होऊणं कुमारे वद्धमाणे णामे णं ॥ १०७ ॥ समणे भगवं महावीरे कासवगुत्ते णं तस्स णं तओ णामधिज्जा एवमाहिज्जंति तंजहा—अम्मापिउसंतिए वद्धमाणे ।

भगवान् महावीरः, काश्यपनामकं गोत्रं यस्य स तथा तस्सणं तओ णामधिज्जा एवमाहिज्जंति तस्य

कृताचमनौ, ततश्च चोक्खत्ति लेपसिक्थाद्यपनयनेन चोक्षौ, अत एव परमशुचीभूतौ, तं मित्रादिवर्गं विपुलेन पुष्पवस्त्रादिना सत्कारयतः सन्मानयतः, तथा कृत्वा च तस्य मित्रादि (७) वर्गस्य पुरतो

मित्त-णाइ-णियग-सयण-संबंधि-परिजणं णाए अ खत्तिए अ विउलेणं पुप्फ-वत्थ गंधमल्लालंकारेणं सक्कारेंति सम्माणेंति सक्कारित्ता सम्माणित्ता तस्सेव मित्त-णाइ-णियग-सयण-संबंधि-परिजणस्स णायाणं खत्तियाण य पुरओ एवं वयासि ॥१०५॥ पुव्विंपि णं देवाणुप्पिया! अम्हं एयंसि दारगंसि गब्भं वक्कंतंसि समाणंसि इमे एयारूवे अब्भत्थिए जाव समुप्पज्जित्था, जप्प-भिइं चणं अम्हं एस दारए कुच्छिसि गब्भत्ताए वक्कंते तप्पभिइं चणं

भगवन्मातापितरौ एवं अवादिषाम् ॥ १०५ ॥ पुव्विंपिणं इत्यादितः अभिवड्ढामो इति यावत्सर्वं

भोजनवेलायां भोजनमंडपे सुखासनवराणि गतौ सुखासीनौ इत्यर्थः, तैर्मित्रादिभिः सार्द्धं तद्विपुलं अशनादि ४ आसाएमाणत्ति आ ईषत् स्वादयंतौ वहुत्यजंतौ इक्ष्वादेरिव, विसाएमाणत्ति विशेषेण स्वादयंतौ अल्पं त्यजंतौ खर्जूरादेरिव, परिभुंजेमाणत्ति सर्वमपि भुंजानौ अल्पमपि अत्यजंतौ भोज्या-

णाएहिं खत्तिएहिं सद्धिं तं विउलं असणं पाणं खाइमं साइमं आसाएमाणा विसाएमाणा परिभुंजेमाणा परिभाएमाणा एवं वा विहरंति ॥ १०४ ॥

जिमियभुत्तुत्तरागयाविय णं समाणा आयंता चोक्खा परमसुइभूया तं

देरिव, परिभाएमाणत्ति परिभाजन्तौ परस्परं यच्छंतौ एवं वा विहरंति अनेन प्रकारेण भुंजानौ तिष्ठतः इति भावः ॥ १०४ ॥ ततो जिमिअत्ति जिमितौ भुत्तुत्तरागयाविअणंति भुक्तोत्तरं भोजनोत्तरकाले इत्यर्थः, आगतौ उपवेशनस्थाने इति गम्यं समाणत्ति एवंविधौ संतौ आयंतत्ति आचांतौ शुद्धोदकेन

मित्तणाइ इत्यादि–तत्र मित्राणि सुहृदः, ज्ञातयः सजातीयाः,निजकाः स्वकीयाः पुत्रादयः, स्वजनाः पितृव्यादयः, संबंधिनः पुत्रपुत्रीणां श्वशुरादयः,परिजनो दासीदासादिः,'णाए अत्ति' ज्ञाताश्च क्षत्रियाः

साइमं उवक्खडावेंति, उवक्खडावित्ता मित्त-णाइ-णियग-सयण-संबंधि-परियणं, णाए अ खत्तिए अ आमंतेंति आमंतित्ता तओ पच्छा ण्हाया कयवलिकम्मा कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं पवराइं वत्थाइं परिहिया अप्पमहग्घाभरणालंकियसरीरा भोअणवेलाए भोअणमंडवंसि सुहासणवरगया तेणं मित्त-णाइ-णियग-सयण-संबंधि-परिजणेणं

श्रीऋषभदेवसजातीयास्तान् आमंत्रयत आमंत्र्य च तओपच्छा ततः पश्चात् ण्हायाकयवलिकम्मा स्नातौ, कृता पूजा याभ्यां तथा तौ, 'कयकोउयमंगलपायच्छित्ता'इत्यादिविशेषणविशिष्टौ भोअणवेलाए

कर्मिंदुः सततं प्रसन्नः ॥ १ ॥" एवं सूर्यस्यापि दर्शनम्, नवरं मूर्तिः स्वर्णमयी ताम्रमयी वा, मंत्रश्च, "ॐ अँर्ह सूर्योसि दिनकरोऽसि तमोपहोऽसि सहस्रकिरणोऽसि जगच्चक्षुरसि प्रसीद" आशीर्वादश्चायम्—"सर्वसुरासुरवंद्यः, कारयिताऽपूर्वसर्वकार्याणाम् । भूयात्रिजगच्चक्षुर्मंगलदस्ते सपुत्रायाः ॥ २ ॥" इतिचंद्रसूर्यदर्शनविधिः ॥ 'सांप्रतं च तत्स्थाने शिशोर्दर्पणो दर्श्यते' ॥

**दिवसे धम्मजागरियं जागरेंति, एक्कारसमे दिवसे विइक्कंते, निव्वत्तिए असुइजम्मकम्मकरणे, संपत्ते बारसाहे दिवसे, विउलं असणपाणखाइम-**

ततः षष्ठे दिवसे धम्मजागरियं धर्मेण कुलधर्मेण षष्ठ्यां रात्रौ जागरणं धर्मजागरिका तां जाग्रतः, षष्ठे दिने जागरणमहोत्सवं कुरुत इति भावः । एवं च एक्कारसमे इत्यादि— एकादशे दिवसे व्यतिक्रांते सति अशुचीनां जन्मकर्मणां नालच्छेदादीनां करणे निवर्त्तिते सति संपत्तेति समापिते सति द्वादशे च दिवसे संप्राप्ते सति भगवन्मातापितरौ विपुलं अशनादि ४ उपस्कारयत उपस्कार्य च,

प्रतीच्छन् स्वयं गृह्णन् पडिच्छावेमाणे प्रतिग्राहयन् सेवकादिभिः एवं विहरति आस्ते ॥ १०२ ॥ तएणं इत्यादि—ततः श्रमणस्य भगवतो महावीरस्य मातापितरौ प्रथमे दिवसे स्थितिपतितां कुरुतः, तृतीये दिवसे चंद्रसूर्यदर्शनिकां उत्सवविशेषं कुरुतः, तद्विधिश्चायम्—

जन्मदिनाद्दिनद्वयातिक्रमे गृहस्थगुरुरर्हत्प्रतिमाग्रे रूप्यमयीं चंद्रमूर्तिं प्रतिष्ठाप्य अर्चित्वा विधिना

**तएणं समणस्स भगवओ महावीरस्स अम्मापियरो पढमे दिवसे ठिइवडियं करेंति, तइए दिवसे चंदसूरदंसणियं करेंति, छट्ठे**

स्थापयेत्, ततः स्नातां सुवस्त्राभरणां सपुत्रां मातरं चंद्रोदये प्रत्यक्षं चंद्रसन्मुखं नीत्वा "ॐ अर्हं चंद्रोसि निशाकरोसि नक्षत्रपतिरसि सुधाकरोसि ओषधीगर्भोसि अस्य कुलस्य वृद्धिं कुरु २ स्वाहा" इत्यादि चंद्रमंत्रमुच्चरमाणश्चंद्रं दर्शयेत्, सपुत्रा माता च गुरुं प्रणमति, गुरुश्चाशीर्वादं ददाति, स चायम्—"सर्वौषधीमिश्रमरीचिराजिः, सर्वापदां संहरणप्रवीणः। करोतु वृद्धिं सकलेपि वंशे, युष्मा-

दसाहियाए दशाहिकायां दशदिवसप्रमाणायां ठिइवडियाए स्थितिपतितायां वट्टमाणीए वर्तमानायां सइएत्ति शतपरिमाणान् साहस्सिएत्ति सहस्रपरिमाणान् सयसाहस्सिएत्ति लक्षप्रमाणान् जाएत्ति यागान् अर्हत्प्रतिमापूजाः कुर्वन् कारयंश्चेति शेषः " भगवन्मातापित्रोः श्रीपार्श्वनाथसंतानीयश्रावकत्वात्, यजधातोश्च देवपूजार्थत्वात् यागशब्देन प्रतिमापूजा एव ग्राह्या, अन्यस्य यज्ञस्य असंभवा-

वट्टमाणीए, सइए अ, साहस्सिए अ, सयसाहस्सिए अ, जाए अ, दाए अ, भाए अ, दलमाणे अ, दवावेमाणे अ, सइए अ, साहस्सिए अ, सयसाहस्सिए अ, लंभे पडिच्छेमाणे अ, पडिच्छावेमाणे अ, एवं वा विहरइ ॥१०३॥

त्। पार्श्वनाथसंतानीयश्रावकत्वं चानयोराचारांगे प्रतिपादितम् "। दाएअत्ति दायान् पर्वदिवसादौ दानानि भाएअत्ति भागान् लब्धद्रव्यविभागान् मानितद्रव्यांशान् वा दलमाणे अ दवावेमाणे अत्ति ददत् दापयंश्च, तथा पूर्वोक्तप्रमाणान् लंभेत्ति लाभान् 'वधामणां–वधाई–' इति लोके, पडिच्छेमाणे

कुदंडो महत्यपराधे अल्पं राजग्राह्यं धनं, ताभ्यां रहितां, पुनः किं० ? अधरिमं धरिमं ऋणं तेन रहितां ऋणस्य राज्ञा दत्तत्वात्, पुनः किं० ? गणियावरणाडइज्जकलियं गणिकावरैर्नाटकीयैर्नाटकप्रतिबद्धैः पात्रैः कलितां, पुनः किं० ? अणेगतालायराणुचरियं अनेकैस्तालाचरैः प्रेक्षाकारिभिः अनुचरितां सेवितां, पुनः किं० ? अणुद्धुयमुइंगं अनुद्धुता वादकैः अपरित्यक्ता मृदंगा यस्यां सा तथा तां, पुनः किं० ?

**गणियावरणाडइज्जकलियं अणेगतालायराणुचरियं अणुद्धुयमुइंगं[ग्रं०५००] अमिलायमल्लदामं पमुइयपक्कीलियसपुरजणजाणवयं दसदिवसं ठिइवडियं करेइ ॥ १०२ ॥ तएणं सिद्धत्थे राया दसाहियाए ठिइवडियाए**

अमिलायमल्लदामं अम्लानानि माल्यदामानि यस्यां सा तथा तां, पुन. किं० ? पमुइयपक्कीलियत्ति प्रमुदिता. प्रमोदवंतः अत एव प्रक्रीडिताः क्रीडितुं आरब्धाः सपुरजणत्ति पुरजनसहिताः जाणवयत्ति जानपदा देशलोका यत्र सा तथा ताम् ॥ १०२ ॥ तएणंसिद्धत्थेराया ततः स सिद्धार्थो राजा

दशदिवसान् यावत् ठिइवडियं स्थितिपतितां कुलमर्यादां महोत्सवरूपां करोतीति योजना, अथ किंविशिष्टां स्थितिपतितामित्याह । उस्सुक्कं उत्शुल्कां शुल्कं विक्रेतव्यक्रयाणकं प्रति मंडपिकायां राजग्राह्यं द्रव्यं, 'दाण' इति लोके, तेन रहितां, पुनः किं०? उक्करं उत्करां करो गवादीन् प्रति प्रतिवर्ष राजग्राह्यं द्रव्यं तेन रहितां, अत एव उक्किट्ठं उत्कृष्टां सर्वेषां हर्षहेतुत्वात्, पुनः किं० ? अदिज्जं

भेरि-झल्लरि-खरमुहि-हुडुक्क-मुरज-मुइंग-दुंदुहिनिग्घोसणाइयरवेणं उस्सुक्कं
उक्करं उक्किट्ठं अदिज्जं अमिज्जं अभडप्पवेसं अदंडकोदंडिमं अधरिमं

अदेयां, यत् यस्य युज्यते तत्सर्वं तेन अट्टात् ग्राह्यं न तु मूल्यं देयं, मूल्यं तु तस्य राजा ददातीति भावः, अत एव अमिज्जं अमेयां अमितानेकवस्तुयोगात्, अथवा अदेयां विक्रयनिषेधात्, अमेयां क्रयविक्रयनिषेधात्, पुनः किं०? अभडप्पवेसं नास्ति कस्यापि गृहे राजाज्ञादायिनां भटानां राजपुरुषाणां प्रवेशो यत्र सा तथा तां, पुनः किं०? अदंडकोदंडिमं दंडो यथापराधं राजग्राह्यं धनं,

पुरेणेत्यर्थः, सबपुप्फवत्थमल्लगंधमल्लालंकारविभूसाए सर्वा या पुप्पगंधवस्त्रमाल्यालंकारादिरूपा विभूषा तया सबतुडियसद्दणिणाएणं सर्वो यस्त्रुटितानां वादित्राणां शब्दो निनादश्च प्रतिरवस्तेन, एवं महयाइड्ढीए महत्या ऋद्ध्या छत्रादिरूपया युक्त इत्यादिविशेषणसमूहो वाच्यः, यावत् महयावरतुडियजमगसमगप्पवाइएणं महत् विस्तीर्णं यत् वराणां प्रधानानां 'तुडियत्ति' त्रुटितानां वादित्राणां

**तुडियसद्दणिणाएणं महया इड्ढीए महया जुईए महया बलेणं महया वाहणेणं महया समुदएणं महया वरतुडियजमगसमगप्पवाइएणं संख-पणव-**

'जमगसमगत्ति' युगपत् 'पवाइएणंति' प्रवादितं शब्दस्तेन, तथा संखेत्यादि–शंखः प्रसिद्धः, पणवो मृत्पटहः, भेरी ढक्का, झल्लरी 'झालरि' इति लोके प्रसिद्धा, 'खरमुहित्ति' खरमुखी काहला, 'हुडुक्कत्ति' हुडुक्का तिवलितुल्या, मुरजो मर्दलः, मृदंगो मृन्मयः, स एव दुंदुभिर्देववाद्यं, एतेषां यो निर्घोषो महाशब्दो, नादितं च प्रतिशब्दस्तद्रूपो यो रवस्तेन, एवंरूपया सकलसामग्र्या युक्तः सिद्धार्थो राजा

इति यावत्सुगमम् ॥१०१॥ तएणं से सिद्धत्थे राया इत्यादितः ठिइवडिअं करेइ इति पर्यंतं, तत्र 'जाव सव्वोरोहेणं' इत्यत्र यावच्छब्दात् 'सव्विड्ढीए सव्वजुईए सव्वबलेणं सव्ववाहणेणं सव्वसमुदएणं' इत्येतानि पदानि वाच्यानि, तेषां चायमर्थः, सव्विड्ढिए सर्वया ऋद्ध्या युक्त इति गम्यं, एवं सर्वेष्वपि

ऊसवित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति उवागच्छित्ता करयल-
जाव कट्टु सिद्धत्थस्स खत्तियस्स रण्णो तमाणत्तियं पच्चप्पिणंति ॥ १०१ ॥
तएणं से सिद्धत्थे राया जेणेव अट्टणसाला तेणेव उवागच्छइ उवा-
गच्छित्ता जाव सव्वोरोहेणं सव्वपुप्फगंधवत्थमल्लालंकारविभूसाए सव्व-

विशेषणेषु वाच्यं, सर्वया युक्त्या उचितवस्तुसंयोगेन सर्वद्युत्या वाभरणादिदीप्त्या, सर्वेण बलेन सैन्येन, सर्वेण वाहनेन शिबिकातुरगादिना, सर्वेण समुदयेन परिवारादिसमूहेन, एवं यावच्छब्द-सूचितं अभिधाय ततः 'सव्वोरोहेणं' इत्यादि वाच्यम् । तत्र सव्वोरोहेणं सर्वाऽवरोधेन सर्वेण अंतः-

लान् कुट्टयंतो वा ये कथां कथयंति, तैः अनुचरितं संयुक्तं एवंविधं क्षत्रियकुंडग्रामनगरं कुरुत स्वयं, कारयत अन्यैः, कृत्वा कारयित्वा च जूयसहस्सति यूपाः युगानि तेषां सहस्रं, तथा मुसलसहस्सं मुसलानि प्रतीतानि तेषां सहस्रं उस्सवेहत्ति ऊर्द्धीकुरुत "युगमुसलोर्द्धीकरणेन च तत्रोत्सवे प्रवर्तमाने

यराणुचरियं करेह कारवेह करित्ता कारवित्ता अ, जूयसहस्सं मुसलसहस्सं च उस्सवेह, उस्सवित्ता मम एयमाणत्तियं पच्चप्पिणह ॥ १००॥ तएणं ते कोडुंवियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठ-तुट्ठ-जाव-हियया करयलजाव-पडिसुणित्ता खिप्पामेव कुंडपुरे णगरे चारगसोहणं जाव-

शकटखेटनकंडनादिनिषेधः प्रतीयते इति वृद्धाः" तथा कृत्वा च मम एतां आज्ञां पच्चप्पिणहत्ति प्रत्यर्पयत कार्यं कृत्वा कृतं इति मम कथयतेत्यर्थः ॥१००॥ तएणं ते कोडुंविय इत्यादितः पच्चप्पिणंति

पुनः किं०? णडणट्टग इत्यादि—नटा नाटयितारः, नर्तकाः स्वयं नृत्यकर्तारः, जल्ला वरत्राखेलकाः, मल्लाः प्रतीताः, मुट्ठियत्ति मौष्टिका ये मुष्टिभिः प्रहरंति ते मल्लजातीयाः वेलंबगत्ति विडंबका विदूषकाः जनानां हास्यकारिणः, ये समुखविकारमुत्प्लुत्योत्प्लुत्य नृत्यंति ते वा, पवगत्ति प्लवका ये उत्प्लवनेन गर्त्तादिकमुल्लंघयंति, नद्यादिकं वा तरंति पढगत्ति पाठकाः सूक्तादीनां कहगत्ति सरसकथावक्तारः,

**सुगंधवरगंधियं गंधवट्टिभूअं णड-णट्टग-जल्ल-मल्ल-मुट्ठिय-वेलंबग-पवग-पढग-कहग-लासग-आरक्खग-लंख-मंख-तूणइल्ल-तुंबवीणिय-अणेगताला-**

लासका ये रासकान् ददति आरक्खगत्ति आरक्षास्तलाराः लंखत्ति लंखा वंशाग्रखेलकाः, मंखाश्चित्रफलकहस्ता भिक्षाकाः 'गौरीपुत्र' इतिप्रसिद्धाः तूणइल्लत्ति तूणाभिधानवाद्यवंतः भिक्षुविशेषाः, तुंबवीणियत्ति तुंबवीणिका वीणावादकाः, तथा अनेके ये तालाचरास्तालादानेन प्रेक्षाकारिणस्ता-

चंदनं, तैः दिन्नत्ति दत्ताः पंचांगुलितला हस्तकाः कुड्यादिषु यत्र तत्तथा, पुनः किं० ? उवचियचंदणकलसं उपचिता उपनिहिताः चंदनकलशा मंगलघटाः गृहांतश्चतुष्केषु यत्र तत्तथा, पुनः किं० ? चंदणघडसुकयतोरणपडिदुवारदेसभागं चंदनघटैः सुकृतानि रमणीयानि तोरणानि च प्रतिद्वारदेशभागं द्वारस्य २ देशभागे यस्मिन् तत्तथा, पुनः किं० ? आसत्तोसत्तविपुलत्ति आसक्तो भूमिलग्नः,

उवचियचंदणकलसं चंदणघडसुकयतोरणपडिदुवारदेसभागं आसत्तोसत्तविपुलवट्टवग्घारियमल्लदामकलावं पंचवण्णसरससुरहिमुक्कपुप्फपुंजोवयारकलियं कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंतगंधुद्धुयाभिरामं

उत्सक्तश्च उपरिलग्नो विपुलो विस्तीर्णः वट्टत्ति वर्त्तुलः वग्घारिअत्ति प्रलंबितो माल्यदामकलापः पुष्पमालासमूहो यस्मिन् तत्तथा, पुनः किं० ? पंचवण्णेत्यादि–पंचवर्णाः सरसाः सुरभयो ये मुक्ताः पुष्पपुंजास्तैर्य उपचारो भूमेः पूजा, तया कलितं, पुनः किं० ? कालागुरुपवरेत्यादि विशेषणं प्राग्वत्,

एतेषु स्थानेषु सित्तत्ति सिक्तानि जलेन, अत एव सुइत्ति शुचीनि पवित्राणि संमट्ठत्ति संमृष्टानि कचवरापनयनेन समीकृतानि रत्थंतरत्ति रथ्यांतराणि मार्गमध्यानि, तथा आवणवीहिअत्ति आपणवीथयश्च हट्टमार्गा यस्मिन् तत्तथा, पुनः किं० ? मंचाइमंचकलिअं मंचा महोत्सवविलोककजनानां उपवेशननिमित्तं मालकाः, अतिमंचास्तेषां अपि उपरि कृता मालकास्तैः कलितं, पुनः किं० ?

सुइसंमट्ठरत्थंतरावणवीहियं मंचाइमंचकलियं णाणाविहरागभूसियज्झय
पडागमंडियं लाउल्लोइयमहियं गोसीससरससरत्तचंदणदद्दरदिण्णपंचंगुलितलं

णाणाविहेत्यादि– नानाविधै रागैर्भूषिता ये ध्वजाः सिंहादिरूपोपलक्षिताः बृहत्पटाः, पताकाश्च लघ्व्यस्ताभिर्मंडितं विभूषितं, पुनः किं० ? लाउल्लोइयमहियं 'लाइयंति' छगणादिना भूमौ लेपनं, 'उल्लोइयंति' सेटिकादिना भित्त्यादौ धवलीकरणं, ताभ्यां 'महिअंति' महितं इव पूजितं इव, पुनः किं० ? गोसीसेत्यादि– गोशीर्षं चंदनविशेषः, तथा सरसं यद्रक्तचंदनं, तथा दद्दरत्ति दर्दरनामपर्वतजातं

क्षत्रियकुंडग्रामे नगरे चारगसोहणं करेह चारकशब्देन कारागारं उच्यते, तस्य शोधनं शुद्धिं कुरुत, बंदिमोचनं कुरुत इत्यर्थः । यत उक्तम्–"युवराजाभिषेके च, परराष्ट्रापमर्दने ॥ पुत्रजन्मनि वा मोक्षो, बद्धानां प्रविधीयते ॥ १ ॥ इति" तथा माणुम्माणे वद्धणं करेह तत्र मानं रसधान्यविषयं, उन्मानं तुलारूपं, तयोर्वर्द्धनं कुरुत, तत्कृत्वा च कुंडपुरं नगरं सब्भिंतरबाहिरियंति अभ्यंतरे बहिश्च

माणुम्माणवद्धणं करेह करित्ता कुंडपुरं णगरं सब्भिंतरबाहिरियं आसिय-संमज्जिओवलित्तं सिंघाडगतियचउक्कचच्चरचउम्मुहमहापहपहेसु सित्त-

यथोक्तविशेषणविशिष्टं कुरुत, कारयत । अथ किंविशिष्टं ? आसियत्ति आसिक्तं सुगंधजलच्छटादानेन संसज्जिअत्ति संमार्जितं कचवरापनयनेन, उपलिप्तं छगणादिना, ततः कर्मधारयः, पुनः किंविशिष्टम् ? सिंघाडगेत्यादि–शृंगाटकं त्रिकोणं स्थानं, त्रिकं मार्गत्रयसंगमः, चतुष्कं मार्गचतुष्टयसंगमः, चत्वरं अनेकमार्गसंगमः, चतुर्मुखं देवकुलादि, महापथा राजमार्गाः, पंथानः सामान्यमार्गाः,

पुष्पवृष्टिं, फलवृष्टिं, बीजवृष्टिं, माल्यानां वृष्टिं, कुष्टपुटादयो गंधास्तेषां वृष्टिं, चूर्णवृष्टिं, वर्णवृष्टिं, वसुहारत्ति वसु द्रव्यं तस्य धारा निरंतरा श्रेणिः तस्या वृष्टिं चावर्षयन् ॥९८॥ तएणं इत्यादितः एवं

च, वत्थवासं च, आभरणवासं च, पत्तवासं च, पुप्फवासं च, फलवासं च, बीअवासं च, मल्लवासं च, गंधवासं च, चुण्णवासं च, वण्णवासं च, वसुहारवासं च वासिंसु ॥ ९८ ॥ तएणं से सिद्धत्थे खत्तिए भवणवइवाणमंतरजोइसवेमाणिएहिं देवेहिं तित्थयरजम्मणाभिसेयमहिमाए कयाए समाणीए पच्चूसकालसमयंसि णगरगुत्तिए सद्दावेइ सद्दाविता एवं वयासी ॥ ९९ ॥ खिप्पामेव भो देवाणुप्पिया कुंडग्गामे णयरे चारगसोहणं करेह

वयासि इति यावत् प्रायः सुगमं, नवरं—णगरगुत्तिए नगरगुप्तिकान् पुरारक्षकान् सद्दावेइ शब्दयति आकारयतीत्यर्थः, शब्दयित्वा च एवं अवादीत् ॥ ९९ ॥ खिप्पामेव क्षिप्रमेव भो देवानुप्रियाः !

स्वाम्यंगुष्ठेऽमृतं न्यस्ये–त्यर्हज्जन्मोत्सवं सुराः ॥ नंदीश्वरेऽष्टाहिकां च, कृत्वा जग्मुर्यथागतम् ॥ ४७ ॥

इति देवकृतः श्रीमहावीरजन्मोत्सवः ॥ ९७ ॥

"अस्मिन्नवसरे राज्ञे, दासी नाम्ना प्रियंवदा ॥ तं पुत्रजननोदंतं, गत्वा शीघ्रं न्यवेदयत् ॥ १ ॥
सिद्धार्थोऽपि तदाकर्ण्य, प्रमोदभरमेदुरः ॥ हर्षगद्गदगीरोमो–द्गमदंतुरभूघनः ॥ २ ॥

**जं रयणिं चणं समणे भगवं महावीरे जाए तं रयणिं चणं वहवे वेसमणकुंडधारी-तिरियजंभगा देवा सिद्धत्थरायभवणंसि हिरण्णवासं च, सुवण्णवासं च, वयरवासं**

विना किरीटं तस्यै स्वां, सर्वांगालंकृतिं ददौ ॥ तां धौतमस्तकां चक्रे, दासत्वापगमाय सः ॥ ३ ॥"

जं रयणिं चणं इत्यादि— यस्यां च रजन्यां श्रमणो भगवान् महावीरो जातस्तस्यां च रजन्यां वहवो वैश्रमणस्याज्ञाधारिणस्तिर्यग्जृंभका देवाः सिद्धत्थरायभवणंसि सिद्धार्थराजमंदिरे हिरण्णवासं हिरण्यं रूप्यं तस्यवृष्टिं, सुवर्णवृष्टिं, वज्रवृष्टिं, वस्त्रवृष्टिं, आभरणवृष्टिं, नागवल्लीप्रमुखपत्राणां वृष्टिं, ॥१२०॥

भ्रश्यद्दुग्धाब्धिपाथश्चरमजिनपतेरंगसंगि श्रिये वः ॥ ३६ ॥"
चतुर्वृषभरूपाणि, शक्रः कृत्वा ततः स्वयम् ॥ शृंगाष्टकक्षरत्क्षीरै–रकरोदभिषेचनम् ॥ ३७ ॥
सत्यं ते विबुधा देवा, यैरंतिमजिनेशितुः ॥ सृजद्भिः सलिलैः स्नानं, स्वयं नैर्मल्यमादधे ॥ ३८ ॥
समंगलप्रदीपं ते, विधायारात्रिकं पुनः ॥ सनृत्यगीतवाद्यादि, व्यधुर्विविधमुत्सवम् ॥ ३९ ॥
उन्मृज्य गंधकाषाय्या, दिव्ययांगं हरिर्विभोः ॥ विलिप्य चंदनाद्यैश्च, पुष्पाद्यैस्तमपूजयत् ॥ ४० ॥
दर्पणो १ वर्द्धमानश्च २, कलशो ३ मीनयोर्युगम् ४॥ श्रीवत्सः ५ स्वस्तिको ६ नंद्यावर्त्त ७ भद्रासने ८ इति।४१।
शक्रः स्वामिपुरो रत्न–पट्टके रूप्यतंदुलैः ॥ आलिख्य मंगलान्यष्टा–विति स्तोतुं प्रचक्रमे ॥ ४२ ॥
शक्रोऽथ जिनमानीय, विमुच्यांबांतिके ततः ॥ संजहार प्रतिबिंबा-ऽवस्वापिन्यौ स्वशक्तितः ॥ ४३ ॥
कुंडले क्षौमयुग्मं चो-च्छीर्षे मुक्त्वा हरिर्व्यधात् ॥ श्रीदामरत्नदामाढ्य-मुल्लोचे स्वर्णकंदुकम् ॥ ४४ ॥
द्वात्रिंशद्रत्नरैरूप्य–कोटिवृष्टिं विरच्य सः ॥ बाढमाघोषयामास, सुरैरित्याभियोगिकैः ॥ ४५ ॥
स्वामिस्वाम्यंबयोर्योऽत्र, करिष्यत्यशुभं मनः ॥ सप्तधार्यमंजरीव, शिरस्तस्य स्फुटिष्यति ॥ ४६ ॥

क्षीरनीरघटैर्वक्षः—स्थलस्थैस्त्रिदशा बभुः ॥ संसारौघं तरीतुं द्राक्, घृतकुंभा इव स्फुटम् ॥ २८ ॥
सिंचंत इव भावद्रुं, क्षिपंतो वा निजं मलम् ॥ कलशं स्थापयंतो वा, धर्मचैत्ये सुरा बभुः ॥ २९ ॥
संशयं त्रिदशेशस्य, मत्वा वीरोऽमराचलम् ॥ वामांगुष्ठाग्रसंपर्कात्, समंतादप्यचीचलत् ॥ ३० ॥
कंपमाने गिरौ तत्र, चकंपेऽथ वसुंधरा ॥ शृंगाणि सर्वतः पेतु—श्चुक्षुभुः सागरा अपि ॥ ३१ ॥
ब्रह्मांडस्फोटसदृशे, शब्दाऽद्वैते प्रसर्पति ॥ रुष्टः शक्रोऽवधेर्ज्ञात्वा, क्षमयामास तीर्थपम् ॥ ३२ ॥
संख्यातीतार्हतां मध्ये, स्पृष्टः केनापि नांह्रिणा ॥ मेरुः कंपमिषादित्था—नंदादिव ननर्त्त सः ॥ ३३ ॥
शैलेषु राजता मेऽभूत्, स्नात्रनीराभिषेकतः ॥ तेनाऽमी निर्जरा हाराः, स्वर्णापीडो जिनस्तथा ॥३४॥
तत्र पूर्वमच्युतेंद्रो, विदधात्यभिषेचनम् ॥ ततोऽनुपरिपाटीतो, यावच्चंद्रार्यमादयः ॥ ३५ ॥
"जलस्नात्रे कविघटना—"श्वेतच्छत्रायमाणं शिरसि मुखशशिन्यंशुपूरायमाणं,
कंठे हारायमाणं वपुषि च निखिले चीनचोलायमानम् ॥
श्रीमज्जन्माभिषेकप्रगुणहरिगणोदस्तकुंभौघगर्भाद्,

अग्रगः पृष्टगं स्तौति, पृष्ठस्थोऽप्यऽग्रगं पुनः ॥ नेत्रे पश्चात्समीहंते, केचनाग्रेतनाः सुराः ॥ २२ ॥
शक्रः सुमेरुशृंगस्थं, गत्वाऽथो पांडुकं वनम् ॥ मेरुचूलादक्षिणेनाऽतिपांडुकंबलासने ॥ २३ ॥
कृत्वोत्संगे जिनं पूर्वा-भिमुखोऽसौ निषीदति ॥ समस्ता अपि देवेंद्राः, स्वामिपादांतमैयरुः ॥ २४ ॥
"दशवैमानिकाः, विंशतिर्भवनपतयः, द्वात्रिंशद्व्यंतराः, द्वौ ज्योतिष्कौ, इति चतुःषष्टिरिंद्राणाम् ।"
सौवर्णा राजता रात्नाः, स्वर्णरूप्यमया अपि ॥ स्वर्णरत्नमयाश्चाऽपि, रूप्यरत्नमया अपि ॥ २५ ॥
स्वर्णरूप्यरत्नमया, अपि मृत्स्नामया अपि ॥ कुंभाः प्रत्येकमष्टाढ्यं, सहस्रं योजनाननाः ॥ २६ ॥
यतः-पणवीसजोयणतुंगो,बारस य जोअणाइं वित्थारो ॥ जोअणमेगं नालुअ, इगकोडीसट्ठिलक्खाइं।२७।

एवं भृंगार-दर्पण-रत्नकरंडक-सुप्रतिष्ठक-स्थाल-पात्रिका-पुष्पचंगेरिकादिपूजोपकरणानि कुंभवदष्ट-प्रकाराणि प्रत्येकमष्टोत्तरसहस्रमानानि, तथा मागधादितीर्थानां मृदं, जलं च गंगादीनां, पद्मानि च जलं च पद्मह्रदादीनां, क्षुल्लहिमवद्वर्षधर-वैताढ्य-विजय-वक्षस्कारादिपर्वतेभ्यः सिद्धार्थपुष्पगंधान् सर्वौषधीश्च; आभियोगिकसुरैरच्युतेंद्र आनाययत् ।

सुराणां कोटिकोटिभि-र्विमानैर्वाहनैर्घनैः ॥ विस्तीर्णोऽपि नभोमार्गो-ऽतिसंकीर्णोऽभवत्तदा ॥ ११ ॥
मित्रं केऽपि परित्यज्य, दक्षत्वेनाग्रतो ययुः ॥ प्रतीक्षस्व क्षणं भ्रात-र्मामित्रेत्यपरोऽवदत् ॥ १२ ॥
केचिद्वदंति भोदेवाः ! संकीर्णाः पर्ववासराः ॥ भवंत्येवंविधा नूनं, तस्मान्मौनं विधत्त भोः ! ॥ १३ ॥
नभस्यागच्छतां तेषां, शीर्षे चंद्रकरैः स्थितैः ॥ शोभंते निर्जरास्तत्र, सजरा इव केवलम् ॥ १४ ॥
मस्तके घटिकाकाराः, कंठे ग्रैवेयकोपमाः ॥ स्वेदबिंदुसमा देहे, सुराणां तारका बभुः ॥ १५ ॥
नंदीश्वरे विमानानि, संक्षिप्यागात्सुराधिपः ॥ जिनेंद्रं च जिनांबां च, त्रिः प्रादक्षिणयत्ततः ॥ १६ ॥
वंदित्वा च नमस्यित्वे-त्येवं देवेश्वरोऽवदत् ॥ नमोऽस्तु ते रत्नकुक्षि-धारिके ! विश्वदीपिके ! ॥ १७ ॥
अहं शक्रोऽस्मि देवेंद्रः, कल्पादाद्यादिहाऽगमम् ॥ प्रभोरन्तिमदेवस्य, करिष्ये जननोत्सवम् ॥ १८ ॥
भेतव्यं देवि ! तन्नैवे-त्युक्त्वाऽवस्वापिनीं ददौ ॥ कृत्वा जिनप्रतिबिंबं, जिनांबासन्निधौ न्यधात् ॥१९॥
भगवंतं तीर्थकरं, गृहीत्वा करसंपुटे ॥ विचक्रे पंचधारूपं, सर्वश्रेयोऽर्थिकः स्वयम् ॥ २० ॥
एको गृहीततीर्थेशः, पार्श्वे द्वावात्तचामरौ ॥ एको गृहीतातपत्र, एको वज्रधरः पुर. ॥ २१ ॥

"पालकविमाने च इंद्रसिंहासनस्य अग्रे अग्रमहिषीणां अष्टौ भद्रासनानि, वामतश्चतुरशीति-सहस्रसामानिकसुराणां तावंति भद्रासनानि, दक्षिणतो द्वादशसहस्राभ्यंतरपार्षदानां तावंति भद्रासनानि, चतुर्दशसहस्रमध्यमपार्षदानां तावंत्येव भद्रासनानि, एवं षोडशसहस्रबाह्यपार्षदानामपि षोडशसहस्रभद्रासनानि, पृष्ठतः सप्तानीकाधिपतीनां सप्त भद्रासनानि, चतसृषु दिक्षु प्रत्येकं चतुरशीतिसहस्रात्मरक्षकदेवानां चतुरशीतिसहस्रभद्रासनानि।" तथा—

अन्यैरपि घनैर्देवै—र्वृतः सिंहासनस्थितः ॥ गीयमानगुणोऽचाली—दपरेऽपि सुरास्ततः ॥ ५ ॥
देवेंद्रशासनात्केचित्, केचिन्मित्रानुवर्तनात् ॥ पत्नीभिः प्रेरिताः केचित्, केचिदात्मीयभावतः ॥ ६ ॥
केऽपि कौतुकतः केऽपि, विस्मयात्केऽपि भक्तितः ॥ चेलुरेवं सुराः सर्वे, विविधैर्वाहनैर्युताः ॥ ७ ॥
विविधैस्तूर्यनिर्घोषै—र्घंटानां क्वणितैरपि ॥ कोलाहलेन देवानां, शब्दाद्वैतं तदाऽजनि ॥ ८ ॥
सिंहस्थो वक्ति हस्तिस्थं, दूरे स्वीयं गजं कुरु ॥ हनिष्यत्यन्यथा नूनं, दुर्द्धरो मम केसरी ॥ ९ ॥
वाजिस्थं कासरारूढो, गरुडस्थो हि सर्पगम् ॥ छागस्थं चित्रकस्थोऽथ, वदत्येवं तदादरात् ॥ १० ॥

बद्धा तद् दूर्वया जन्म–गेहाद्रंभागृहत्रयम् ॥ ताः पूर्वस्यां दक्षिणस्या–मुत्तरस्यां व्यधुस्ततः ॥ १५ ॥
याम्यरंभागृहे नीत्वाऽभ्यंगं तेनुस्तु तास्तयोः ॥ स्नानचर्चांशुकालंका–रादि पूर्वगृहे तत. ॥ १६ ॥
उत्तरेऽरणिकाष्टाभ्या–मुत्पाद्याऽग्निं सुचंदनैः ॥ होमं कृत्वा बबंधुस्ता, रक्षापोट्टलिकां द्वयोः ॥ १७ ॥
पर्वतायुर्भवेत्युक्त्वा, स्फालयंत्योऽश्मगोलकौ ॥ जन्मस्थाने च तौ नीत्वा, स्वस्वदिक्षु स्थिता जगुः॥१८॥
[एताश्च]सामानिकानां प्रत्येकं, चत्वारिंशच्छतैर्युताः ॥ महत्तराभिः प्रत्येकं, तथा चतसृभिर्युताः ॥१९॥
अंगरक्षैः षोडशभिः, सहस्रैः सप्तभिस्तथा ॥ कटकैस्तदधीशैश्च, सुरैश्चान्यैर्महर्द्धिभिः ॥ २० ॥
आभियोगिकदेवकृतैर्योजनप्रमाणैर्विमानैः अत्रायांति, इति दिक्कुमारिकामहोत्सवः ॥
ततः सिंहासनं शाक्रं, चचालाऽचलनिश्चलम् ॥ प्रयुज्याथावधिं ज्ञात्वा, जन्मांतिमजिनेशितुः ॥ १ ॥
वृज्येकयोजनां घंटां, सुघोषां नैगमेषिणा ॥ अवादयत्ततो घंटा, रेणु. सर्वविमानगाः ॥ २ ॥
शक्रादेशं ततः सोच्चैः, सुरेभ्योऽज्ञापयत्स्वयम् ॥ तेन प्रमुदिता देवाश्चलनोपक्रमं व्यधुः ॥ ३ ॥
पालकाख्यामरकृतं, लक्षयोजनसंमितम् ॥ विमानं पालकं नामा–ऽध्यारोहत्त्रिदशेश्वरः ॥ ४ ॥

अथ नंदो १ त्तरानंदे २, आनंदा ३ नंदिवर्द्धने ४॥ विजया ५ वैजयंती च ६, जयंती ७ चाऽपराजिता॥८॥
एताः पूर्वरुचकादेत्य विलोकनार्थं दर्पणं अग्रे धरंति ॥

समाहारा १ सुप्रदत्ता २, सुप्रबुद्धा ३ यशोधरा ४ ॥ लक्ष्मीवती ५ शेषवती ६, चित्रगुप्ता ७ वसुंधरा ८ ।९।
एता दक्षिणरुचकादेत्य स्नानार्थं करे पूर्णकलशान् धृत्वा गीतगानं विदधति ॥

इलादेवी १ सुरादेवी २, पृथिवी ३ पद्मवत्यपि ४ ॥ एकनासा ५ नवमिका ६, भद्रा ७ शीतेति ८ नामतः।१०।
एताः पश्चिमरुचकादेत्य वातार्थं व्यजनपाणयोऽग्रे तिष्ठंति ॥

अलंबुसा १ मितकेशी २,पुंडरीका ३ च वारुणी ४॥ हासा ५ सर्वप्रभा ६ श्री ७ ह्रीं ८–रष्टोदक्रुचकाद्रितः।११।
एता उत्तररुचकादेत्य चामराणि वीजयंति ॥

चित्रा च १ चित्रकनका २, शतेरा ३ वसुदामिनी ४॥ दीपहस्ता विदिक्ष्वेत्याऽस्थुर्विदिग्रुचकाद्रितः ॥१२॥
रुचकद्वीपतोऽभ्येयु-श्चतस्रो दिक्कुमारिकाः ॥ रूपा १ रूपासिका २ चापि, सुरूपा ३ रूपकावती ४ ॥१३॥
चतुरंगुलतो नालं, छित्त्वा खातोदरेऽक्षिपन् ॥ समापूर्य च वैडूर्यै–स्तस्योर्द्ध्वं पीठमादधुः ॥ १४ ॥

एवंविधा सा रात्रिः द्दुत्था अभवत्, अनेन च सूत्रेण सुरकृतः सविस्तरो जन्मोत्सवः सूचितः, स चायम्—

अचेतना अपि दिशः, प्रसेदुर्मुदिता इव । वायवोऽपि सुखस्पर्शा, मंदं २ ववुस्तदा ॥ १ ॥
उद्योतस्त्रिजगत्यासी-द्ध्वान दिवि दुंदुभिः ॥ नारका अप्यमोदंत, भूरप्युच्छ्वासमासदत् ॥ २ ॥

तत्र तीर्थकृतां जन्मनः सूतिकर्मणि प्रथमतः षट्पंचाशत् (५६) दिक्कुमार्यः समागत्य शाश्वतिकं स्वाचारं कुर्वंति, तद्यथा—

" दिक्कुमार्योऽष्टाऽधोलोक-वासिन्यः कंपितासनाः ॥ अर्हज्जन्माऽवधेर्ज्ञात्वा-ऽभ्येयुस्तत्सूतिवेश्मनि ॥ ३ ॥
भोगंकरा१ भोगवती २, सुभोगा ३ भोगमालिनी४॥ सुवत्सा ५ वत्समित्रा च६, पुष्पमाला ७ त्वनिंदिता।८।
नत्वा प्रभुं तदंबां चे-शाने सूतिगृहं व्यधुः ॥ संवर्तेनाऽशोधयन् क्ष्मा-मायोजनमितो गृहात् ॥ ५ ॥
मेघंकरा १ मेघवती २, सुमेघा ३ मेघमालिनी ४ ॥ तोयधारा ५ विचित्रा च ६, वारिषेणा ७ बलाहका ८ ।६।
अष्टोर्द्धलोकादेत्यैता, नत्वाऽर्हंतं समातृकम् ॥ तत्र गंधांबुपुष्पौघ-वर्षं हर्षाद्वितेनिरे ॥ ७ ॥

# ॥ अथ पंचमः क्षणः ॥

जं रयणिं चणं यस्यां च रात्रौ श्रमणो भगवान् महावीरो जातः सा रजनी बहूहिं देवेहिं देवीहि य बहुभिर्देवैः शक्रादिभिर्बह्वीभिर्देवीभिः दिक्कुमार्यादिभिश्च ओवयंतेहिं अवपतद्भिर्जन्मोत्सवार्थं

जं रयणिं चणं समणे भगवं महावीरे जाए साणं रयणी बहूहिं देवेहिं देवीहि य ओवयंतेहिं उप्पयंतेहि य उप्पिंजलमाणभूया कहकहगभूया आवि हुत्था ॥९७॥

स्वर्गाद्भुवमागच्छद्भिः उप्पयंतिहिं उत्पतद्भिरूर्द्धं गच्छद्भिर्मेरुशिखरगमनाय तैः कृत्वा उप्पिंजलमाण-भूआ भृशं आकुला इव कहकहगभूआ हर्षाट्टहासादिना कहकहकभूतेव अव्यक्तवर्णकोलाहलमयीव

सूरिं श्रीविजयानन्दं, विजयानन्दकारकम्। "आत्माराम" इति ख्यातं, वन्दे सद्गुणलब्धये ॥ १ ॥

## ॥ इति चतुर्थः क्षणः समाप्तः ॥

वल्लभविजयस्त्वेष, शिष्यशिष्यस्य शिष्यकः। नित्यं स्मरति यं भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

क्रीडितुं आरब्धेषु वसंतोत्सवादिना, एवंविधेषु जनपदेषु जनपदवासिषु लोकेषु सत्सु पुव्वरत्तावरत्तकाल समयंसि पूर्वरात्रापररात्रकालसमये हत्थुत्तराहिं णक्खत्तेणं जोगमुवागयेणं उत्तरफल्गुनीभिः समं योगं

पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहिं णक्खत्तेणं जोगमुवागएणं
आरोग्गारोग्गं दारयं पयाया ॥ ९६ ॥

उपागते चंद्रे सति आरोग्गारोग्गं आरोग्या आबाधारहिता सा त्रिशला, आरोग्यं आबाधारहितं दारयं दारकं पुत्रं पयाया प्रजाता सुषुवे इति भावः ॥ ९६ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां
कल्पसुबोधिकायां चतुर्थः क्षणः समाप्तः ॥ ४ ॥

शिष्टासु दिक्षु ? वितिमिरासु अंधकाररहितासु भगवज्जन्मसमये सर्वत्र उद्योतसद्भावात्, पुनः किंविशिष्टासु ? विसुद्धासु विशुद्धासु दिग्दाहाद्यभावात् जइएसुसव्वसउणेसु सर्वेषु शकुनेषु काकोलूकदुर्गादिषु जयिकेषु जयकारकेषु सत्सु पयाहिणाणुकूलंसि प्रदक्षिणे प्रदक्षिणावर्त्तत्वात्, अनुकूले सुरभिशीतत्वा-

**वितिमिरासु विसुद्धासु जइएसु सव्वसउणेसु पयाहिणा-
णुकूलंसि भूमिसप्पंसि मारुयंसि पवायंसि णिप्पण्णमे-
इणीयंसि कालंसि पमुइयपक्कीलिएसु जणवएसु**

त्सुखप्रदे भूमिसप्पंसि मृदुत्वाद्भूमिसर्पिणि, प्रचंडो हि वायुः उच्चैः सर्पति, एवंविधे मारुयंसि मारुते वायौ पवायंसि प्रवातुं आरब्धे सति णिप्पण्णमेइणीयंसि कालंसि निष्पन्ना कोऽर्थः ? निष्पन्नसर्वशस्या मेदिनी यत्र, एवंविधे काले सति पमुइयपक्कीलिएसुजणवएसु प्रमुदितेषु सुभिक्षादिना, प्रक्रीडितेषु

उच्चट्ठाणगएसु गहेसु तदानीं ग्रहेषु उच्चस्थानस्थितेषु, ग्रहाणां उच्चत्वं चैवम्—
" अर्काद्युच्चान्यज १ वृष २, मृग ३ कन्या ४ कर्क ५ मीन ६ वणिजों ७ शैः । दिग् १० दहना-३ऽष्टाविंशति २८, तिथी १५ षु ५ नक्षत्र २७ विंशतिभिः २० ॥" अयं भावः मेषादिराशिस्थाः सूर्या-

## उच्चट्ठाणगएसु गहेसु पढमे चंदजोगे सोमासु दिसासु

द्य उच्चास्तत्रापि दशादीनंशान् यावत्परमोच्चाः । एषां फलं तु " सुखी १ भोगी २ धनी ३ नेता, ४, जायते मंडलाधिपः । नृपतिश्चक्रवर्ती च, क्रमादुच्चग्रहे फलम् ॥ १ ॥ तिहिं उच्चेहिं नरिंदो, पंचहिं तह होइ अद्धचक्की अ । छहिं होइ चक्कवट्टी, सत्तहिं तित्थंकरो होइ ॥ २ ॥" पढमे चंदजोगे प्रथमे प्रधाने चंद्रयोगे सति सोमासुदिसासु सौम्यासु रजोवृष्ट्यादिरहितासु दिक्षु वर्तमानासु, पुनः किंवि-

" दु १ चउत्थ २ नवम ३ बारस ४, तेरस ५ पणणरस ६ सेस १८ गब्भठिई । मासा अड नव तदुवरि, उसहाओ कमेणिमे दिवसा ॥ १ ॥ चउ १ पणवीसं २ छद्दिण ३, अडवीसं ४ छच्च ५ छच्चि ६ गुणवीसं ७ । सग ८ छवीसं ९ छ १० च्छय ११, वीसि १२ गवीसं १३ छ १४ छव्वीसं १५ ॥ २ ॥ छ १६ प्पण १७ अड १८ सत्त १९ दुय २०, अड २१ दुय २२ छ २३ सत्त २४ होंति गब्भदिणा । "
इति सप्ततिशतस्थानके श्रीसोमतिलकसूरिकृते, सुखाववोधाय चास्य यंत्रकम् ।

| १ आदिनाथ | २ अजितनाथ | ३ संभवनाथ | ४ अभिनंदन | ५ सुमतिनाथ | ६ पद्मप्रभ | ७ सुपार्श्वनाथ | ८ चंद्रप्रभ | ९ सुविधिनाथ | १० शीतलनाथ | ११ श्रेयांसनाथ | १२ वासुपूज्य |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मा ९ | ८ | ९ | ८ | ९ | ९ | ९ | ९ | ८ | ९ | ९ | ८ |
| दि ४ | २५ | ६ | २८ | ६ | ६ | १९ | ७ | २६ | ६ | ६ | २० |
| १३ विमलनाथ | १४ अनंतनाथ | १५ धर्मनाथ | १६ शांतिनाथ | १७ कुंथुनाथ | १८ अरनाथ | १९ मल्लिनाथ | २० मुनिसुव्रत | २१ नमिनाथ | २२ नेमिनाथ | २३ पार्श्वनाथ | २४ महावीरस्वामी |
| मा. ८ | ९ | ८ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| दि २१ | ६ | २६ | ६ | ५ | ८ | ७ | ८ | ८ | ८ | ६ | ७ |

समये श्रमणो भगवान् महावीरो योऽसौ उष्णकालस्य प्रथमो मासो द्वितीयः पक्षः, चैत्रमासस्य शुक्लपक्षः तस्य चैत्रशुद्धस्य त्रयोदशी दिवसे णवण्हं मासाणं बहुपडिपुण्णाणं नवसु मासेषु बहुप्रतिपूर्णेषु अद्धट्ठमाणराइंदियाणं विइक्कंताणं अर्द्धाष्टमरात्रिंदिवाधिकेषु सार्द्धसप्तदिनाधिकेषु नवसु मासेषु

समएणं समणे भगवं महावीरे जे से गिम्हाणं पढ़मे मासे दुच्चे
पक्खे चित्तसुद्धे तस्सणं चित्तसुद्धस्स तेरसीदिवसेणं णवण्हं
मासाणं बहुपडिपुण्णाणं अद्धट्ठमाण राइंदियाणं विइक्कंताणं

व्यतिक्रांतेषु इति भावः । तदुक्तम्—

"दुण्हं वरमहिलाणं, गब्भे वसिऊण गब्भसुकुमालो । णव मासे पडिपुण्णे, सत्त य दिवसे समइरेगे ॥ १ ॥" इदं च गर्भस्थितिमानं न सर्वेषां तुल्यं, तथाचोक्तम्—

अविमानितदोहदा कस्यापि दोहदस्य अवगणनाभावात्, पुनः किंविशिष्टा? वुच्छिण्णदोहला व्युच्छिन्नदोहदा पूर्णवांछितत्वात्, अत एव ववणीयदोहला व्यपनीतदोहदा सर्वथा असद्दोहदा सुहंसुहेण सुखंसुखेन गर्भानाबाधया आसइ आश्रयति आश्रयणीयं स्तंभादिकं अवलंबते सयइ

वुच्छिण्णदोहला ववणीयदोहला सुहंसुहेणं आसइ
सयइ चिट्ठइ णिसीयइ तुअट्टइ विहरइ सुहंसुहेणं
तं गब्भं परिवहइ ॥ ९५ ॥ तेणं कालेणं तेणं

शेते निद्रां करोति चिट्ठइ तिष्ठति ऊर्ध्वं तिष्ठति णिसीयइ निषीदति आसने उपविशति तुयट्टइ त्वग् वर्त्तयति निद्रां विना शय्यायां शेते इत्यर्थः, विहरइ विहरति कुट्टिमतले विचरति, अनेन प्रकारेण च सुखंसुखेन तं गर्भं परिवहतीति भावः ॥ ९५ ॥ तेणंकालेणं इत्यादि, तस्मिन् काले तस्मिन्

" जानात्यमारिपटहं पटु घोषयामि, दानं ददामि सुगुरून्परिपूजयामि ।
तीर्थेश्वरार्चनमहं रचयामि संघे, वात्सल्यमुत्सवभृतं बहुधा करोमि ॥ १ ॥
सिंहासने समुपविश्य वरातपत्रा, संवीज्यमानकरणा सितचामराभ्याम् ।
आज्ञेश्वरत्वमुदितानुभवामि सम्यक्, भूपालमौलिमणिलालितपादपीठा ॥ २ ॥

## संपुण्णदोहला सम्माणियदोहला अविमाणियदोहला

आरुह्य कुंजरशिरः प्रचलत्पताका, वादित्रनादपरिपूरितदिग्विभागा ।
लोकैः स्तुता जयजयेति रवैः प्रमोदा–दुद्यानकेलिमनघां कलयामि जाने ॥३॥ इत्यादि "

पुनः सा किं० ? संपुण्णदोहला संपूर्णदोहदा सिद्धार्थराजेन सर्वमनोरथपूरणात्, अत एव सम्माणियदोहला सन्मानितदोहदा पूर्णीकृत्य तेषां निवर्त्तितत्वात्, तत एव अविमाणियदोहला

अधिकं वा पत्थं पथ्यं आरोग्यकारणं, अत एव गर्भपोषणं, तदपि देशे उचितस्थाने, नतु आकाशादौ, तदपि काले भोजनसमये, नतु अकाले, आहारं आहारयंती, विवित्तमउएहिं सयणासणेहिं विविक्तानि दोषरहितानि मृदुकानि कोमलानि यानि शयनासनानि तैः, तथा पइरिक्कसुहाए मणाणुकूलाए विहारभूमीए प्रतिरिक्ता अन्यजनापेक्षया निर्जना, अत एव सुखा सुखकारिणी तया मनोनुकूलया म-

काले अ आहारमाहारेमाणी विवित्तमउएहिं सयणासणेहिं
पइरिक्कसुहाए मणाणुकूलाए विहारभूमीए पसत्थदोहला

नःप्रमोददायिन्या एवंविधया विहारभूम्या चंक्रमणासनादिभूम्या कृत्वा, अथ सा त्रिशला किंविशिष्टा सती तं गर्भं परिवहतीत्याह । पसत्थदोहला प्रशस्ता दोहदा गर्भप्रभावोद्भूता मनोरथा यस्याः सा तथा, ते चैवम्—

भीतिः, परिश्रमो व्यायामः, एते व्यपगता यस्याः सा तथा, रोगादिरहिता इति भावः । यत एते गर्भस्य अहितकारिणस्तदुक्तं सुश्रुते—"दिवा स्वपत्याः स्त्रियाः स्वापशीलो गर्भः, अंजनादंधः, रोदनाद्विकृतदृष्टिः, स्नानानुलेपनात् दुःशीलः, तैलाभ्यंगात्कुष्टी, नखापकर्त्तनात्कुनखी, प्रधावनाच्चंचलः, हसनात् श्यामदंतोष्ठतालुजिह्वः, अतिकथनाच्च प्रलापी, अतिशब्दश्रवणाद्बधिरः, अवलेखनात्खलतिः, व्यजनक्षेपादिमारुतायाससेवनादुन्मत्तः स्यात्" । तथा च कुलवृद्धास्त्रिशलां शिक्षयंति"मंदं संचर मंदमेव निगद व्यामुंच कोपक्रमं, पथ्यं भुंक्ष्व बधान नीविमनघां मा माऽट्टहासं कृथाः। आकाशे भव मा सुशेष्व शयने नीचैर्बहिर्गच्छ मा, देवी गर्भभरालसा निजसखीवर्गेण सा शिक्ष्यते ॥ १ ॥" अथ सा त्रिशला पुनः किं कुर्वती? जं तस्स गब्भस्स यत्तस्य गर्भस्य हियं हितं तदपि मियं मितं, नतु न्यूनं

जं तस्स गब्भस्स हियं मियं पत्थं गब्भपोसणं तं देसे अ

१ यान २ वाहन ३ मार्गगमन ४ प्रस्खलन ५ प्रपतन ६ प्रपीडन ७ प्रधावना ८ ऽभिघात ९ विपमशयन १० विपमासनो ११ पवास १२ वेगविघाता १३ ऽतिरूक्षा १४ ऽतितिक्ता १५ ऽतिकट्ठ १६ ऽतिभोजना १७ ऽतिरागा १८ ऽतिशोका १९ ऽतिक्षारसेवा २० ऽतीसार २१ वमन २२ विरेचन २३ प्रेंखोलना २४ ऽजीर्ण २५ प्रभृतिभिर्गर्भो बंधनान्मुच्यते, ।" ततो नातिशीतलाद्यैराहाराद्यैस्तं गर्भं सा पोप-

सव्वत्तुभयमाणसुहेहिं भोयणाच्छायणगंधमल्लेहिं ववगयरोगसोगमोहभयपरिस्समा

यतीति युक्तम् । पुनः किंविशिष्टैर्भोजनाच्छादनगंधमाल्यैः ? सव्वत्तुभयमाणसुहेहिं सर्वर्तुषु ऋतौ २ भज्यमानाः सेव्यमानाः ये सुखहेतवो गुणकारिणस्तैः । तदुक्तम्—" वर्षासु लवणममृतं, शरदि जलं गोपयश्च हेमंते । शिशिरे चामलकरसो, घृतं वसंते गुडश्चांते ॥ १ ॥ " अथ सा त्रिशला कथंभूता ? ववगयरोगसोगमोहभयपरिस्समा रोगा ज्वराद्याः, शोक इष्टवियोगादिजनितः, मोहो मूर्च्छा, भयं

म्लैर्नातिमधुरैर्नातिस्निग्धैर्नातिरूक्षैः नाइउल्लेहिं नात्यार्द्रैर्नातिशुष्कैः एवंविधैर्भोजनाच्छादनगंधमाल्यैः, तत्र भोजनं प्रतीतं, आच्छादनं वस्त्रं, गंधाः पुटवासादयः, माल्यानि पुष्पमालाः तैर्गर्भं पोषयतीति शेषः। तत्र नातिशीतलादय एव आहारादयो गर्भस्य हिता, न तु अतिशीतलादयस्तेहि केचिद्वा-

नाइउण्हेहिं नाइतित्तेहिं नाइकडुएहिं नाइकसाएहिं नाइअंबिलेहिं
नाइमहुरेहिं नाइनिद्धेहिं नाइलुक्खेहिं नाइउल्लेहिं नाइसुक्केहिं

तिकाः, केचित्पैत्तिकाः, केचित्श्लेष्मकराश्च, ते च अहिताः। यदुक्तं वाग्भट्टे—"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः। पित्तलैः खलतिः[1] पिंगः[2], श्वित्री[3] पांडुः कफात्मभिः ॥१॥" तथा—" अतिलवणं नेत्रहरं, अतिशीतं मारुतं प्रकोपयति। अत्युष्णं हरतिबलं, अतिकामं जीवितं हरति ॥ २ ॥ " अन्यच्च— मैथुन

१ खल्वाटः। २ दीपशिखावर्णवद्वर्णवान्। ३ श्वित्रं पांडुरं कुष्ठं तद्वान्।

उदरस्थेऽपि मयि मातुरीदृशः स्नेहो वर्तते तर्हि जाते तु मयि कीदृशो भविष्यतीति धिया अन्येषां मातरि बहुमानप्रदर्शनार्थं च। यदुक्तम् " आस्तन्यपानाज्जननी पशूना-मादारलाभाच्च नराधमानाम्। आगेहकृत्याच्च विमध्यमानां, आजीवितात्तीर्थमिवोत्तमानाम् ॥ १ ॥ ९४ ॥ तएणं सा तिसला खत्ति-

मे कप्पइ अम्मापिऊहिं जीवंतेहिं मुंडेभवित्ता अगाराओ अणगारियं पव्वइत्तए ॥ ९४ ॥ तएणं सा तिसला खत्तियाणी ण्हाया कयवलिकम्मा कयकोउयमंगलपायच्छित्ता सव्वालंकारविभूसिया तं गब्भं नाइसीएहिं

याणी ततः सा त्रिशला क्षत्रियाणी ण्हाया कयवलिकम्मा स्नाता कृतं बलिकर्म पूजा यया सा तथा कयकोउयमंगलपायछित्ता कृतानि कौतुकमांगल्यान्येव प्रायश्चित्तानि यया सा तथा सव्वालंकारवि-भूसिया सर्वालंकारैर्विभूषिता सती तं गर्भं नातिशीतैर्नात्युष्णैर्नातितिक्तैर्नातिकटुकैर्नातिकषायैर्नाम्ल-

संत्यथ मम भाग्यानि, त्रिभुवनमान्या तथा च धन्याऽहम् ॥ श्लाघ्यं च जीवितं मे, कृतार्थतामाप मे जन्म ।३।
श्रीजिनपादाः प्रसेदुः, कृताः प्रसादाश्च गोत्रदेवीभिः ॥ जिनधर्मकल्पवृक्ष-स्त्वाजन्माराधितः फलितः ॥४॥
एवं सहर्षचित्तां, देवीमालोक्य वृद्धनारीणाम् ॥ जय जय ! नंदेत्याद्या-शिषः प्रवृत्ता मुखकजेभ्यः ॥ ५ ॥
हर्षात्प्रवर्तितान्यथ, कुलनारीभिश्च ललितधवलानि ॥ उत्तंभिताः पताका, मुक्तानां स्वस्तिका न्यस्ताः ।६।
आनंदाद्वैतमयं, राजकुलं तद्बभूव सकलमपि ॥ आतोद्यगीतनृत्यैः, सुरलोकसमं महाशोभम् ॥ ७ ॥

तएणं समणे भगवं महावीरे गब्भत्थे चेव इमेयारूवं अभिग्गहं अभिगिण्हइ णो खलु

वर्द्धापनागताधन- कोटीर्गृह्णन् ददच्च धनकोटीः ॥ सुरतरुरिव सिद्धार्थः, संजातः परमहर्षभरः ॥ ८ ॥

तएणं इत्यादि—ततः श्रमणो भगवान्महावीरो गर्भस्थ एव पक्षाधिके मासषट्के व्यतिक्रांते इमं एतद्रूपं अभिग्रहं अभिगृह्णाति, कं ? इत्याह । णोखलु इत्यादि— खलु निश्चयेन नो मम कल्पते मातापितृषु जीवत्सु आगारात् अनगारितां प्रव्रजितुं गंतुं दीक्षां ग्रहीतुं इत्यर्थः । इदं अभिग्रहग्रहणं च

हावीरो मातुरिमं एतद्रूपं संकल्पं समुत्पन्नं विज्ञाय एगदेसेणं एकदेशेन अंगुल्यादिना एयइ एजते कंपते, ततः सा त्रिशला क्षत्रियाणी हृष्टतुष्टादिविशेषणविशिष्टा एवं अवादीत् ॥ ९२ ॥ अथ किं अवादीत् ? नो खलु मे गब्भे हडे इत्यादि सुगमं प्राग् व्याख्यातं च ।

एगदेसेणं एयइ। तएणं सा तिसला खत्तियाणी हट्ठ-तुट्ठ-जाव हियया एवं वयासी ॥ ९३ ॥ णो खलु मे गब्भे हडे ! जाव णो गलिए! एस मे गब्भे पुव्विं णो एयइ, इयाणिं एयइत्तिकट्टु हट्ठ-तुट्ठ-जाव हियया एवं वा विहरइ ।

अथ हर्षिता त्रिशलादेवी यथाचेष्टत तथा लिख्यते—

प्रोल्लसितनयनयुगला, स्मेरकपोला प्रफुल्लमुखकमला ॥ विज्ञातगर्भकुशला, रोमांचितकंचुका त्रिशला ॥१॥
प्रोवाच मधुरवाचा, गर्भे मे विद्यतेऽथ कल्याणम् ॥ हा धिक् मयकाऽनुचितं, चिंतितमतिमोहमतिकतया ॥२॥

भावः, एतेषां यत् 'मणुज्जं' मनोज्ञत्वं तत् 'उवरयत्ति' उपरतं निवृत्तं यस्मिन् एवंविधं अत एव दीणविमणं दीनं सत् विमनस्कं व्यग्रचेतस्कं विहरइ विहरति आस्ते ॥ ९२ ॥ तएणं से इत्यादि— तं तथाविधं पूर्वोदितं व्यतिकरं अवधिना अवधार्य भगवान् चिंतयति । " किं कुर्मः? कस्य वा ब्रूमो ?,

तलतालनाडइज्जजणमणुज्जं दीणविमणं विहरइ ॥ ९२ ॥
तएणं से समणे भगवं महावीरे माऊए एयमेयारूवं
अब्भत्थियं पत्थियं मणोगयं संकप्पं समुप्पण्णं विजाणित्ता

मोहस्य गतिरीदृशी । दुषेर्धातोरिवास्माकं, दोषनिष्पत्तये गुणः ॥ १ ॥ मया मातुः प्रमोदाय, कृतं जातं तु खेदकृत् । भाविनः कलिकालस्य, सूचकं लक्षणं ह्यदः ॥ २ ॥ पंचमारे गुणो यस्माद्भावी दोषकरो नृणाम् । नालिकेरांभसि न्यस्तः, कर्पूरो मृतये यथा ॥ ३ ॥ " इत्येवंप्रकारेण स श्रमणो भगवान्म-

हा किमुपस्थितमेतत् ,निष्कारणवैरिविधिनियोगेन॥ हा कुलदेव्यः क गता,यदुदासीनाः स्थिता यूयम्३१
अथ तत्र प्रत्यूहे, विचक्षणाः कारयंति कुलवृद्धाः ॥ शांतिकपौष्टिकमंत्रो-पयाचितादीनि कृत्यानि ॥३२॥
पृच्छंति च दैवज्ञान् ,निषेधयंत्यपि च नाटकादीनि॥ अतिगाढशब्दविरचित-वचनानि निवारयंत्यपि च३३

तंपिय सिद्धत्थरायवरभवणं उवरयमुइंगतंती-

राजाऽपि लोककलितः, शोकाकुलितोऽजनिष्ट शिष्टमतिः ॥ किंकर्तव्यविमूढाः,संजाता मंत्रिणः सर्वे ।३४॥"

अस्मिन्नवसरे च तत्सिद्धार्थराजभवनं यादृशं जातं तत्सूत्रकृत् स्वयं आह । तंपिय सिद्धत्थरायवरभवणं तदपि सिद्धार्थराजवरभवनं, उवरयमुइंगेत्यादि- मृदंगो मर्दलस्तंत्री वीणा, तलताला हस्तताला, यद्वा तला हस्ताः, तालाः कंसिकाः, 'नाडइज्जजणत्ति' नाटकीया नाटकहिता जनाः पात्राणीति

एवं चिंताक्रांता, ध्यायंती म्लानकमलसमवदना ॥ दृष्टा शिष्टेन सखी-जनेन तत्कारणं पृष्टा ॥ २१ ॥
प्रोवाच साश्रुलोचन-रचना निःश्वासकलितवचनेन । किं मंदभागधेया, वदामि? यज्जीवितं मेऽगात् ॥२२॥
सख्यो जगुरथ हेसखि, शांतममंगलमशेषमन्यदिह ॥ गर्भस्य तेऽस्ति कुशलं, न वेति वद कोविदे सत्यम् ।२३।
सा प्रोचे गर्भस्य च, कुशले किमकुशलमस्ति मे सख्यः ! ॥ इत्याद्युक्त्वा मूर्च्छा-मापन्ना पतति भूपीठे ॥२४॥
शीतलवातप्रभृतिभि-रुपचारैर्बहुतरैः सखीभिः सा ॥ संप्रापितचैतन्यो-त्तिष्ठति विलपति च पुनरेवम्॥२५॥
गरुए अणोरपारे, रयणनिहाणे अ सायरे पत्तो ॥ छिद्दघडो न भरिज्जइ, ता किं दोसो जलनिहिस्स ? ॥२६॥
पत्ते वसंतमासे, रिद्धिं पावंति सयलवणराई ॥ जं न करीरे पत्तं, ता किं दोसो वसंतस्स ? ॥ २७ ॥
उत्तुंगो सरलतरू, बहुफलभारेण नमिअसव्वंगो ॥ कुज्जो फलं न पावइ, ता किं दोसो तरुवरस्स ? ॥२८॥

समीहितं यन्न लभामहे वयं, प्रभो ! न दोषस्तव कर्मणो मम ॥
दिवाप्युलूको यदि नावलोकते, तदा स दोषः कथमंशुमालिनः ? ॥ २९ ॥

अथ मम मरणं शरणं, किं करणं विफलजीवितव्येन ॥ तत्श्रुत्वेति व्यलपत् ,सख्यादिः सकलपरिवारः।३०।

पसुपक्खिमाणुसाणं, वाले जोविहुं विओयए पावो ॥ सो अणवच्चो जायइ, अह जायइ तो विवज्जिज्जा ।१३।
तत्पङ्का मया किं, त्यक्ता वा त्याजिता अधमबुद्ध्या ॥ लघुवत्सानां मात्रा, समं वियोगः कृतः किं वा ॥१४॥
तेषां दुग्धापायो-ऽकारि मया कारितोऽथवा लोकैः॥ किं वा सबालकौंदुरु-बिलानि परिपूरितानि जलैः ॥१५॥
किं वा सांडशिशून्यपि, खगनीडानि प्रपातितानि भुवि॥ पिकशुककुक्कुटकादे-र्बालवियोगोऽथवा विहितः१६
किं वा बालकहत्या-ऽकारि सपत्नीसुताद्युपरिदुष्टम् ॥ चिंतितमचिंत्यमपि वा, कृतानि किं कार्मणादीनि ।१७।
किं वा गर्भस्तंभन-शातनपातनमुखं मया चक्रे ? ॥ तन्मंत्रभेषजान्यपि, किं वा मयका प्रयुक्तानि ? ॥१८॥
अथवा भवांतरे किं, मया कृतं शीलखंडनं बहुशः ॥ यदिदं दुःखं तस्मा-द्विना न संभवति जीवानाम् ॥१९॥

यतः— कुरंडरंडत्तणदुब्भगाई, वंझत्तनिंदू विसकन्नगाई ॥
जेम्मंतरे खंडिअसीलभावा, नाऊण कुज्जा दढसीलभावं ॥ २० ॥

---

१ योऽपि च । २ वियोजयति । ३ विपद्येत् । ४ निंदुर्मृतवत्सा । ५ " लहति जम्मतरभग्गसीला " इतितृतीयपदपाठ पुस्तकातरे ।

कल्पतरुर्मरुभूमौ, न प्रादुर्भवति भूम्यभाग्यवशात् ॥ नहि निष्पुण्यपिपासितनृणां पीयूषसामग्री ॥ ३ ॥
हा धिग् ! धिग् ! दैवं प्रति, किं चक्रे तेन सततवक्रेण ॥ यन्मे मनोरथतरु-र्मूलादुन्मूलितोऽनेन ॥ ४ ॥
आत्तं दत्त्वाऽपि च मे, लोचनयुगलं कलंकविकलमलम् ॥ दत्त्वा पुनरुद्दालित-मधमेनानेन निधिरत्नम् ॥५॥
आरोप्य मेरुशिखरं, प्रपातिता पापिनाऽमुनाऽहमियम् ॥ परिवेष्याप्याकृष्टं, भोज्यं भाजनमलज्जेन ॥ ६ ॥
यद्वा मयापराद्धं, भवांतरेऽस्मिन् भवेऽपि किं ? धातः ! यस्मादेवं कुर्व-न्नुचिताऽनुचितं न चिंतयसि ?॥७॥
अथ किं कुर्वे ? क्व च वा, गच्छामि ? वदामि कस्य वा पुरतः? ॥ दुर्दैवेन च दग्धा, जग्धा मुग्धाऽधमेन पुनः॥८॥
किं राज्येनाप्यमुना ?, किं वा कृत्रिमसुखैर्विषयजन्यैः ?॥ किं वा दुकूलशय्या-शयनोद्भवशर्महर्म्येण ? ॥९॥

गजवृषभादिस्वप्नैः, सूचितसुचितं शुचिं त्रिजगदर्च्यम् ।
त्रिभुवनजनासपत्नं, विना जनानंदि सुतरत्नम् ॥ १० ॥ युग्मम् ।

धिक् संसारमसारं, धिक् दुःखव्याप्तविषयसुखलेशान् ॥ मधुलिप्तखड्गधारालेहनतुलितानहो ललितान् ११
यद्वा मयका किंचित्, तथाविधं दुष्कृतं कृतं कर्म ॥ पूर्वभवे यदृषिभिः, प्रोक्तमिदं धर्मशास्त्रेषु ॥ १२ ॥

इदानीं नेजते न कंपते इतिकट्टुत्ति इति कृत्वा इति हेतोः ओहयमणसंकप्पा उपहतः कलुषीभूतो मनःसंकल्पो यस्याः सा तथा चिंतासोगसागरं पविट्ठा चिंता गर्भहरणादिविकल्पसंभवा अर्त्तिस्तया यः शोकः स एव सागरः समुद्रस्तत्र प्रविष्टा ब्रुडिता, अत एव करतले पर्यस्तं स्थापितं मुखं यया सा तथा, आर्तध्यानोपगता, भूमिगतदृष्टिका ध्यायति—

गब्भे ? एस मे गब्भे पुव्विं एयइ, इयाणिं नो एयइत्तिकट्टु ओहयमणसंकप्पा चिंतासोगसागरं पविट्ठा करयलपल्हत्थमुही अट्टज्झाणोवगया भूमीगयदीट्ठिया ज्झियायइ।

अथ सा त्रिशला तदानीं यद्ध्यायतिस्म तल्लिख्यते—

सत्यमिदं यदि भविता,मदीयगर्भस्य कथमपीह तदा॥निष्पुण्यकजीवाना-मवधिरिति ख्यातिमत्यभवम् १ ॥११५॥
यद्वा चिंतारत्नं, नहि नंदति भाग्यहीनजनसदने ॥ नापि च रत्ननिधानं, दरिद्रगृहसंगतीभवति ॥ २ ॥

"एकांते किमु मोहराजविजये मंत्रं प्रकुर्वन्निव, ध्यानं किंचिदगोचरं विरचयत्येकः परब्रह्मणि ।
किं कल्याणरसं प्रसाधयति वा देवो विलुप्यात्मकं, रूपं कामविनिग्रहाय जननीकुक्षावसौ वः श्रिये १* ९१

तएणं तीसे ततो भगवतो निश्चलावस्थानानंतरं तस्यास्त्रिशलायाःक्षत्रियाण्या अयमेतद्रूपोऽध्यवसायः

तएणं तीसे तिसलाए खत्तियाणीए अयमेयारूवे जाव संकप्पे समुप्पज्जित्था, हडे मे से गब्भे ? मडे मे से गब्भे ? चुए मे से गब्भे ? गलिए मे से

समुत्पन्नः, कोऽसौ ? इत्याह हडे मे से गब्भे स मे मदीयो गर्भः किं केनचिद्देवादिना हृतः ? अथवा स मे गब्भः मडेत्ति मृतः ? अथवा स मे गब्भः किं चुएत्ति च्युतो गर्भस्वभावात्परिभ्रष्टः ? अथवा स मे गर्भः किं गलिएत्ति गलितः द्रवीभूय क्षरितः ? यस्मात्कारणात् एष मे गर्भः पूर्वं एजते पूर्वं कंपमानोऽभूत्

* पुस्तकान्तरे तु "किं कल्याणरसं प्रसाधयति वा मारापकाराय वा, योऽर्हन्निश्चलतां बभाज जननीकुक्षावसौ वः श्रिये." इत्येवमुत्तरार्द्धं दृश्यते ॥

तदित्याह वद्धमाणुत्ति वर्द्धमान इति ॥ ९० ॥ तएणं समणे भगवं महावीरे ततः श्रमणो भगवान्महावीरः माउयअणुकंपणट्ठयाए मयि परिस्पंदमाने मातुः कष्टं माभूदिति मातुः अनुकंपनार्थं मातुर्भक्त्यर्थमन्येनाऽपि मातुर्भक्तिः कर्तव्या इति दर्शनार्थं च णिच्चले निश्चलः णिप्फंदे निष्पंदः किंचि-

गुणणिप्पण्णं णामधिज्जं करिस्सामो वद्धमाणुत्ति ॥ ९० ॥
तएणं समणे भगवं महावीरे माउय अणुकंपणट्ठयाए णिच्चले
णिप्फंदे णिरेयणे अल्लीणपल्लीणगुत्ते आवि होत्था ॥ ९१ ॥

दपि चलनाभावात्, अत एव णिरेयणे निरेजनो निष्कंपः अल्लीणत्ति आ ईषल्लीनः अंगगोपनात् पल्लीणत्ति प्रकर्षेण लीनः उपांगगोपनात्, अत एव गुत्ते गुप्तः, ततः पदत्रयस्य कर्मधारयः आवि चापि इति विशेषणसमुच्चये होत्था अभवत् । अत्र कविः—

भगवतो महावीरस्य मातापित्रोः अयमेतद्रूपोऽध्यवसायः समुत्पन्नः ॥ ८९ ॥ कोऽसौ ? इत्याह । जप्पभिइं चणं यतः प्रभृति अम्हं अस्माकं एष दारकः कुक्षौ गर्भतया व्युत्क्रांत उत्पन्नस्ततः प्रभृति अम्हे वयं, हिरण्येन वर्द्धामहे, यावत्प्रीतिसत्कारेण अतीव २ अभिवर्द्धामहे तंति तस्मात्कारणात् यदा

जप्पभिइं चणं अम्हं एस दारए कुच्छिसि गब्भत्ताए वक्कंते, तप्पभिइं चणं अम्हे हिरण्णेणं वड्ढामो, सुवण्णेणं वड्ढामो, धणेणं धण्णेणं वड्ढामो, जाव संतसारसावइज्जेणं पीइसक्कारेणं अईव अईव अभिवड्ढामो, तं जयाणं अम्हं एस दारए जाए भविस्सइ तयाणं अम्हे एयस्स दारगस्स एयाणुरूवं गुण्णं

अस्माकं एष दारको जातो भविष्यति, तयाणं तदा अम्हे वयं एतस्य दारकस्य एयाणुरूवं एतदनु-रूपं धनादिवृद्धेरनुरूपं, अत एव गुण्णं गुणेभ्य आगतं, तत एव गुणनिष्पन्नं नामधेयं करिष्यामः, किं

विस्तीर्णं धनं गवादिकं, कनकं घटिताघटितप्रकाराभ्यां द्विविधं, 'रयणत्ति' रत्नानि कर्केतनादीनि, मणयश्चंद्रकांताद्याः, मौक्तिकानि प्रतीतानि, शंखा दक्षिणावर्ताः, शिला राजपट्टादिकाः, प्रवालानि विद्रुमाणि, 'रत्तरयणत्ति' रक्तरत्नानि पद्मरागादीनि, आदिशब्दाद्वस्त्रकंबलादिपरिग्रहस्ततो द्वंद्वः ।

जणवएणं जसवाएणं वड्ढित्था, विपुलधणकणगरयणमणिमोत्तियसंखसिलप्पवालरत्तरयणमाइएणं संतसारसावइज्जेणं पीइसक्कारसमुदएणं अईव अईव अभिवड्ढित्था, तएणं समणस्स भगवओ महावीरस्स अम्मापिऊणं अयमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था॥८९॥

तथा संतत्ति सद्विद्यमानं नत्विंद्रजालादिवत्स्वरूपतोऽविद्यमानं एवंविधं यत् सारसावइज्जेणं सारस्वापतेयं प्रधानद्रव्यं तेन । तथा– पीइसक्कारेत्यादि–प्रीतिर्मानसी तुष्टिः, सत्कारो वस्त्रादिभिः स्वजनकृता भक्तिस्तत्समुदयेन च तत् ज्ञातकुलं अतीव अतीव अभ्यवर्द्धत, तएणमित्यादि– ततः श्रमणस्य

तु कुंकुमयुडाई २। मिज्झं चोप्पडलोणाइ ३, रयणवत्थाइ परिछिज्जं ४ ॥१॥" धण्णेणं धान्यं चतुर्विंशतिभेदं, तद्यथा—"धन्नाइं चउवीसं, जव १ गोहुम २ सालि ३ वीहि ४ सट्ठि अ ५ ॥ कुद्दव ६ अणुआ ७ कंगू ८, रालय ९ तिल १० मुग्ग ११ मासा य १२ ॥१॥ अयसि १३ हरिमंथ १४ तिउडा १५, निप्फाव १६ सिलिंद १७ रायमासा य १८ ॥ उच्छू १९ मसूर २० तुबरी २१, कुलत्थ २२ तह-

**धण्णेणं रज्जेणं रट्ठेणं बलेणं वाहणेणं कोसेणं कोट्ठागारेणं पुरेणं अंतेउरेणं**

धन्न य २३ कलाया २४ *॥ २ ॥ रज्जेणं राज्यं सप्तांगं, रट्ठेणं राष्ट्रं देशः, बलं चतुरंगं सैन्यं वाहणेणं वाहनं वेसरादि, कोसेणं कोशो भांडागारं कोट्ठागारेणं कोष्ठागारं धान्यगृहं, पुरांतःपुरे प्रतीते, जानपदो देशवासी लोकः, यशोवादः साधुवादः, एभिः अवर्द्धत। तथा—विउलधणेत्यादि— विपुलं

---

* अणुआ—युगंधरी—ज्वार—चरी ७ कंगू—कंगनी ८ रालय—चीना ९ हरिमंथ—चणा १४ तिउडा—लांग १५ निष्पाव-झालर—वाल १६ सिलिंद—मोठ १७ रायमासा—चौला १८ उच्छू—बरटी १९ धन्नय—धाणा—धनिया २३ कलाया—वटाणा—मटर २४ ॥

पर्वतगृहाः पर्वतं उत्कीर्य कृता गृहा इत्यर्थः, 'उवट्ठाणत्ति' उपस्थानगृहाः आस्थानसभाः, 'भवणत्ति' भवनगृहाः कुटुंबिवसनस्थानानि, ततः श्मशानादीनां द्वंद्वः । अथ एतेषु ग्रामादिषु शृंगाटकादिषु च यानि महानिधनानि पूर्वं कृपणपुरुषैः संनिक्षिप्तानि तिष्ठंति तानि तिर्यग्जृंभका देवाः सिद्धार्थराजभवने संहरंति मुंचंतीति योजना ॥ ८८ ॥ जं रयणिं चणं इत्यादितः संकप्पे समुप्पज्जित्था इति

साहरंति ॥८८॥ जं रयणिं चणं समणे भगवं महावीरे णायकुलंसि साहरिए तं रयणिं चणं तं णायकुलं हिरण्णेणं वड्डित्था, सुवण्णेणं वड्डित्था, धणेणं

यावत्, तत्र 'णमिति' वाक्यालंकारे, यस्यां च रात्रौ श्रमणो भगवान् महावीरो ज्ञातकुले संहृतस्ततः प्रभृति तत् ज्ञातकुलं हिरण्यादिभिः अवर्द्धत, तत्र हिरण्यं रूप्यं अघटितं सुवर्णं वा, सुवर्णं घटितं, धनं—गणिम १ धरिम २ मेय ३ पारिच्छेद्यभेदाच्चतुर्विधं, तदुक्तं—"गणिमं जाईफलपुप्फलाई १, धरिमं

'खाल' इति प्रसिद्धास्तेषु, एवं नगरनिर्द्धमनेषु, आवणेसुवा आपणा हट्टास्तेषु, देवकुलेसुवा देवकुलानि यक्षाद्यायतनानि तेषु, सभासुवा सभासु जनोपवेशनस्थानेषु, पवासुवा प्रपासु पानीयशालासु, आरामेसुवा आरामेषु कदल्याद्याच्छादितेषु स्त्रीपुंसयोः क्रीडास्थानेषु, उज्जाणेसुवा उद्यानेषु पुष्पफलोपेतवृक्षशोभितेषु बहुजनभोग्येषु उद्यानिकास्थानेषु इत्यर्थः, वणेसुवा वनेषु एकजातीयवृक्षसमुदा-

**णिद्धमणेसु वा, आवणेसु वा, देवकुलेसु वा, सभासु वा, पवासु वा, आरामेसु वा, उज्जाणेसु वा, वणेसु वा, वणसंडेसु वा, सुसाणसुण्णागारगिरिकंदरसंतिसेलोवट्ठाणभवणगिहेसु वा, सण्णिखित्ताइं चिट्ठंति ताइं सिद्धत्थरायभवणंसि**

येषु, वणसंडेसु वा वनखंडेषु अनेकजातीयोत्तमवृक्षसमुदायेषु, सुसाणत्ति श्मशानं, सुण्णागारत्ति शून्यागारं शून्यगृहं गिरिकंदरत्ति गिरिकंदरा प्रतीता पर्वतगुहेत्यर्थः, संतिसेलोवट्ठाणभवणगिहेसुवा अत्र गृहशब्दः प्रत्येकं योज्यः, ततः 'संतित्ति' शांतिगृहाः शांतिकर्मस्थानानि, 'सेलत्ति' शैलगृहाः

पत्तनानि जलस्थलमार्गयोरन्यतरेण मार्गेण युक्तानि, आश्रमास्तीर्थस्थानानि तापसस्थानानि वा, संवाहाः समभूमौ कृर्षि कृत्वा कृषीवला यत्र धान्य रक्षार्थं स्थापयंति, सन्निवेशाः सार्थकटकादीनां उत्तरणस्थानानि, एतेषां द्वंद्वस्तेषु । तथा सिंघाडएसु वा श्रृंगाटकं सिंघाटकफलाकारं त्रिकोणं स्थानं, तिएसुवा त्रिकं यत्र रथ्यात्रयं मिलति तत्स्थानं, चउक्केसु वा चतुष्कं यत्र रथ्याचतुष्टयं मिलति,

वेसेसु, सिंघाडएसु वा, तिएसु वा, चउक्केसु वा, चच्चरेसु वा, चउम्मुहेसु वा, महापहेसु वा, गामट्ठाणेसु वा, णगरट्ठाणेसु वा, गामणिद्धमणेसु वा, णगर-

चच्चरेसु वा चत्वरं अनेकरथ्यासंगमस्थानं, चउम्मुहेसु वा चतुर्मुखं चतुर्द्वारं देवकुलादि, महापहेसु वा महापथो राजमार्गः, एतेषु । तथा गामट्ठाणेसु वा ग्रामस्थानानि उद्वसग्रामस्थानानि तेपु णगर-ट्ठाणेसुवा उद्वसनगरस्थानानि तेषु, गामणिद्धमणेसु वा ग्रामसंबंधीनि निर्द्धमनानि जलनिर्गमाः

पहीणसामियाइं प्रहीणस्वामिकानि अल्पीभूतस्वामिकानीत्यर्थः, अत एव पहीणसेउयाइं प्रहीणसेक्तृकाणि, सेक्ता हि उपरि धनक्षेप्ता, स तु स्वाम्येव भवति, पुनःकिं०? पहीणगोत्तागाराइं येषां महानिधानानां धनिकसम्बंधीनि गोत्राणि अगाराणि च प्रहीणानि विरलीभूतानि भवंति तानि प्रहीणगोत्रागाराणि, एवं उच्छिन्नः सर्वथा अभावं प्राप्तः स्वामी येषां तानि उच्छिन्नस्वामिकानि, एवं अग्रेऽपि

महाणिहाणाइं भवंति, तंजहा—पहीणसामियाइं, पहीणसेउयाइं, पहीणगोत्तागाराइं, उच्छिण्णसामियाइं, उच्छिण्णसेउयाइं, उच्छिण्णगोत्तागाराइं, गामागरणगरखेडकब्बडमडंबदोणमुहपट्टणासमसंबाहसण्णि-

वाच्यम्। अथ केषु केषु स्थानेषु तानि वर्त्तन्ते? इत्याह। गामेत्यादि— ग्रामाः करवंतः, आकराः लोहाद्युत्पत्तिभूमयः, नगराणि कररहितानि, खेटानि धूलिप्राकारोपेतानि, कर्बटानि कुनगराणि, मडंबानि सर्वतोऽर्द्धयोजनात्परतोऽवस्थितग्रामाणि, द्रोणमुखानि यत्र जलस्थलपथावुभावपि भवतः,

॥ ८७ ॥ जप्पभिइंच णं इत्यादि– यतः प्रभृति यस्माद्दिनादारभ्य श्रमणो भगवान् महावीरः तस्मिन् राजकुले संहृतः ततः प्रभृति तस्माद्दिनादारभ्य बहवः वेसमणकुंडधारिणो तिरियजंभगा देवा वैश्रमणस्य धनदस्य कुंडं आयत्ततां धारयंति एवंविधा ये तिर्यग्लोकवासिनो जृंभकजातीयाः तिर्यग्जृंभका

उवागच्छित्ता सयं भवणं अणुपविट्ठा ॥ ८७ ॥ जप्पभिइं च णं समणे भगवं महावीरे तंसि रायकुलंसि साहरिए, तप्पभिइं च णं बहवे वेसमणकुंड-धारिणो तिरियजंभगा देवा, सक्कवयणेणं से जाइं इमाइं पुरापोराणाइं

देवाः सक्कवयणेणं शक्रवचनेन शक्रेण वैश्रमणाय उक्तं, वैश्रमणेन तिर्यग्जृंभकेभ्य इति भावः 'सेत्ति' अथशब्दार्थे, अथ ते तिर्यग्जृंभका देवाः जाइं इमाइं यानि इमानि वक्ष्यमाणस्वरूपाणि पुरापोराणाइं पुरा पूर्वं निक्षिप्तानि अत एव पुराणानि चिरंतनानि महानिधानानि भवंति, तद्यथा–

यावत् पूर्ववत् ॥ ८४ ॥ इमेयणं इत्यादितः, चक्कवटी इति यावत् प्राग्वत् ॥ ८५ ॥ तएणंसा

पडिबुज्झंति ॥ ८४ ॥ इमेय णं तुमे देवाणुप्पिए! चउद्दस महासुमिणा दिट्ठा तं उराला णं तुमे देवाणुप्पिए! सुमिण्णा दिट्ठा, जाव जिणे वा तेलुक्कणायगे धम्मवरचाउरंतचक्कवट्टी ॥ ८५ ॥ तएणं सा तिसला खत्तिआणी एयमट्ठं सुच्चा णिसम्म हट्ठ-तुट्ठ-जाव हियया करयल-जाव ते सुमिणे सम्मं पडिच्छइ ॥ ८६ ॥ पडिछित्ता सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी णाणामणिरयणभत्ति-चित्ताओ भद्दासणाओ अब्भुट्ठेइ अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सए भवणे तेणेव उवागच्छइ,

इत्यादितः पडिच्छइ इति यावत्प्राग्वत् ॥ ८६ ॥ पडिच्छित्ता इत्यादितः अणुपविट्ठा इति यावत्प्रागवत्

पुष्पैः, अलंकारैर्मुकुटादिभिः सत्कारयति सन्मानयति च, विनयवचनप्रतिपत्त्या सत्कार्य सन्मान्य च विपुलं जीविकार्हं आजन्मनिर्वाहयोग्यं प्रीतिदानं ददाति, प्रीतिदानं दत्वा च प्रतिविसर्जयति ॥८२॥

पुप्फवत्थगंधमल्लालंकारेणं सक्कारेइ, सम्माणेइ, सक्कारित्ता सम्माणित्ता विउलं जीवियारिहं पीइदाणं दलइ दलइत्ता पडिविसज्जेइ ॥ ८२ ॥ तएणं से सिद्धत्थे खत्तिए सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता जेणेव तिसला खत्तियाणी जवणियंतरिया तेणेव उवागच्छइ उवागच्छित्ता तिसलं खत्तियाणीं एवं वयासी ॥ ८३ ॥ एवं खलु देवाणुप्पिए! सुविणसत्थंसि बायालीसं सुविणा, तीसं महासुमिणा, जाव एगं महासुमिणं पासित्ताणं

तएणं इत्यादितः एवं वयासी इति यावत् प्राग्वत् ॥ ८३ ॥ एवं खलु इत्यादितः बुज्झंति इति

यावत् "प्राग्वत् ॥ ८० ॥ तएणं इत्यादितः एवं वयासी इति यावत् प्राग्वत् ॥ ८१ ॥ एवमेयं इत्यादितः पडिविसज्जेइ इति यावत् प्रायः सुगमं, नवरं— ते सुविणलक्खणपाढए तान् स्वप्नलक्षणपाठकान्

सुविणलक्खणपाढगाणं अंतिए एयमट्ठं सोच्चा णिसम्म हट्ठ-तुट्ठ-जाव हियए करयल-जाव ते सुविणलक्खणपाढए एवं वयासी ॥ ८१ ॥ एवमेयं देवाणुप्पिआ ! तहमेयं देवाणुप्पिआ ! अवितहमेयं देवाणुप्पिआ ! इच्छियमेयं देवाणुप्पिआ ! पडिच्छियमेयं देवाणुप्पिआ ! इच्छियपडिच्छियमेयं देवाणुप्पिआ ! सच्चेणं एसमट्ठे से जहेयं तुब्भे वयहत्ति कट्टु, ते सुमिणे सम्मं पडिच्छइ, पडिच्छित्ता, ते सुविणलक्खणपाढए विउलेणं असणेणं

विपुलेन अशनेन शाल्यादिना, पुष्पैः अग्रथितैर्जात्यादिपुष्पैः, वस्त्रैः प्रतीतैर्गंधैर्वासचूर्णैः, माल्यैर्ग्रथित-

(५) चंद्रदर्शनात्कुवलये मुदं दास्यति (६) सूर्यदर्शनाद्भामंडलभूपितो भविष्यति (७) ध्वजदर्शनाद्धर्मध्वजभूपितो भविष्यति (८) कलशदर्शनाद्धर्मप्रासादशिखरे स्थास्यति (९) पद्मसरोदर्शनात्सुरसंचारितकमलस्थापितचरणो भविष्यति (१०) रत्नाकरदर्शनात्कैवल्यरत्नस्थानं भविष्यति (११)

क्कवटी ॥ ७९ ॥ तं उराला णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव आरुग्ग-तुट्ठि-दीहाउ-मंगल्लकारगा णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा ॥ ८० ॥ तएणं सिद्धत्थे राया तेसिं

विमानदर्शनाद्वैमानिकानामपि पूज्यो भविष्यति (१२) रत्नराशिदर्शनाद्रत्नप्राकारभूपितो भविष्यति (१३) निर्धूमाग्निदर्शनात् भव्यकनकशुद्धिकारी भविष्यति (१४) चतुर्दशानामपि समुदितफलं तु चतुर्दशरज्ज्वात्मकलोकाग्रस्थायी भविष्यतीति ॥ ७९ ॥ तं उरालाणं इत्यादितः सुविणा दिट्ठा इति

तद्यथा—अर्थलाभो देवानुप्रिय ! इत्यादि पूर्ववत् ॥ ७८ ॥ सेविअणं इत्यादितः चक्कवट्टी इति यावत्, तत्र सोऽपि च दारक उन्मुक्तबालभावो यौवनावस्थां अनुप्राप्तो राज्यपती राजा चक्रवर्ती भविष्यति, जिनो वा त्रैलोक्यनायको धर्मवरचातुरंतचक्रवर्ती, तत्र जिनत्वे चतुर्दशानां अपि स्वप्नानां पृथक्

पयाहिसि ॥ ७८ ॥ सेविय णं दारए उम्मुक्कबालभावे विण्णायपरिणयमित्ते जोव्वणगमणुप्पत्ते सूरे वीरे विक्कंते वित्थिण्णविपुलबलवाहणे चाउरंतचक्कवट्टी रज्जवई राया भविस्सइ, जिणे वा तेलुक्कणायगे धम्मवरचाउरंतच-

पृथक् फलानि इमानि ॥ चतुर्दंतहस्तिदर्शनाच्चतुर्धा धर्मं कथयिष्यति (१) वृषभदर्शनाद्भरतक्षेत्रे बोधिबीजं वप्स्यति (२) सिंहदर्शनान्मदनादिदुर्गजभज्यमानं भव्यवनं रक्षिष्यति (३) लक्ष्मीदर्शनाद्वार्षिकदानं दत्वा तीर्थंकरलक्ष्मीं भोक्ष्यते (४) दामदर्शनात्त्रिभुवनस्य मस्तकधार्यो भविष्यति

त्रिशलया क्षत्रियाण्या चतुर्दश महास्वप्ना दृष्टास्ततो महास्वप्नत्वात् महाफलत्वं दर्शयति, तंजहा

अत्थलाभो देवाणुप्पिया! भोगलाभो देवाणुप्पिया! पुत्तलाभो देवाणुप्पिया! सुक्खलाभो देवाणुप्पिया! रज्जलाभो देवाणुप्पिया! एवं खलु देवाणुप्पिया! तिसला खत्तियाणी णवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाण राइंदियाणं वइक्कंताणं तुम्हं कुलकेउं, कुलदीवं, कुलपव्वयं, कुलवडिंसय, कुलतिलयं, कुलकित्तिकरं, कुलवित्तिकरं, कुलदिणयरं, कुलआधारं, कुलजसकरं, कुलपायवं, कुलतंतुसंताणविवद्धणकरं, सुकुमालपाणीपायं, अहीणपडिपुण्णपंचिंदियसरीरं, लक्खणवंजणगुणोववेयं, माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं, ससिसोमाकारं, कंतं, पियदंसणं, सुरूवं, दारयं,

बलदेवमायरो वा इत्यादितः बुज्झंति इति यावत्सुबोधम् ॥७६॥ मंडलिय इत्यादितः पडिबुज्झंति इति

मायरो वा बलदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे चत्तारि महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७६ ॥ मंडलियमायरो वा मंडलियंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरं एगं महासुमिणं पासित्ताणं पडिबुज्झंति ॥ ७७ ॥ इमे य णं देवाणुप्पिया! तिसलाए खत्तियाणीए चउद्दस महासुमिणा दिट्ठा तं उराला णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, जाव मंगल्लकारगा णं देवाणुप्पिया! तिसलाए खत्तियाणीए सुमिणा दिट्ठा, तं

यावत्सुखावबोधम् ॥ ७७ ॥ इमेयणं इत्यादितः पयाहिसि इति पर्यंतं, तत्र इमे च देवानुप्रिय!

सामान्यफलाः, त्रिंशत् महास्वप्ना महाफलाः॥ अरहतमायरो वा इत्यादि—अर्हज्जनन्यो वा, चक्रधरजनन्यो वा, अर्हति चक्रधरे वा, गब्भंवक्कममाणंसि गर्भं व्युत्क्रामति गर्भं प्रविशति एतेषां त्रिंशतः महास्वप्नानां

यरो वा, चक्कवट्टिमायरो वा, अरिहंतंसि वा, चक्कहरंसि वा, गब्भं वक्कममाणंसि (ग्रं० ४००) एएसिं तीसाए महासुमिणाणं इमे चउद्दस महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७३ ॥ तंजहा "गयवसह" गाहा ॥ ७४ ॥ वासुदेवमायरो वा वासुदेवंसि गब्भं वक्कममाणंसि एएसिं चउद्दसण्हं महासुमिणाणं अन्नयरे सत्त महासुमिणे पासित्ताणं पडिबुज्झंति ॥ ७५ ॥ बलदेव-

मध्ये इमान् चतुर्दश महास्वप्नान् दृष्ट्वा प्रतिबुध्यन्ते जाग्रतीत्यर्थः ॥७३॥ तंजहा तद्यथा 'गयवसह' इति गाथा वाच्या ॥ ७४ ॥ वासुदेवमायरो वा इत्यादितः पडिबुज्झति इति यावत्सुगमम् ॥ ७५ ॥

पासइ, उप्पाडेमाणे उप्पाडेइ, उप्पाडियमिति अप्पाणं मन्नई, तक्खणामेव बुज्झइ, तेणेव भवग्गहणेणं सिज्झइ, जाव अंतं करेइ ॥ इत्थी वा, पुरिसो वा, सुमिणंते एगं महंतं हिरण्णरासिं वा, सुवण्णरासिं वा, वयररासिं वा, पासमाणे पासइ, दुरूहमाणे दुरूहइ, दुरूढमिति अप्पाणं मन्नइ, तक्खणामेव बुज्झइ,

सुमिणसत्थाइं उच्चारेमाणा उच्चारेमाणा सिद्धत्थं खत्तियं एवं वयासी ॥७२॥
एवं खलु देवाणुप्पिया! अम्हं सुमिणसत्थे बायालीसं सुमिणा, तीसं महासुमिणा, बावत्तरिं सव्वसुमिणा दिट्ठा। तत्थणं देवाणुप्पिया! अरहंतमा-

तेणेव भवग्गहणेणं जाव अंतं करेइ ॥ एवमेव रययरासिं, तउयरासिं, तंबरासिं, सीसगरासिं, इति सूत्राणि वाच्यानि, नवरं– दुच्चेणं भवग्गहणेणं सिज्झइ" इति वाच्यम् ॥ ७२ ॥ एवं खलु इत्यादितः पडिबुज्झइ इति यावत्सूत्रं स्पष्टं, नवरं- बायालीसं सुमिणा तीसं महासुमिणा द्वाचत्वारिंशत् स्वप्नाः

कमलाकररत्नाकर-जलसंपूर्णापगाः सुहृन्मरणम् ॥ यः पश्यति लभतेऽसा-वनिमित्तं वित्तमतिविपुलम् २२
अतितप्तं पानीयं,सगोमयं गड्डुलमौषधेन युतम् ॥ यः पिबति सोऽपि नियतं, म्रियतेऽतीसाररोगेण ॥ २३ ॥
देवस्य प्रतिमायाः, यात्रास्नपनोपहारपूजादीन् ॥ यो विदधाति स्वप्ने, तस्य भवेत्सर्वतो वृद्धिः ॥ २४ ॥
स्वप्ने हृदयसरस्यां, यस्य प्रादुर्भवंति पद्मानि ॥ कुष्टविनष्टशरीरो, यमवसतिं याति स त्वरितम् ॥ २५ ॥
आज्यं प्राज्यं स्वप्ने, यो विंदति वीक्षते यशस्तस्य ॥ तस्याऽभ्यवहरणं वा, क्षीरान्नेनैव सह शस्तम् ॥ २६ ॥
हसने शोचनमचिरात्, प्रवर्तते नर्तने च वधबंधौ ॥ पठने कलहश्च नृणा-मेतत्प्राज्ञेन विज्ञेयम् ॥२७॥
कृष्णं कृत्स्नमशस्तं, मुक्त्वा गोवाजिराजगजदेवान् ॥ सकलं शुक्लं च शुभं,त्यक्त्वा कर्पासलवणादीन्॥२८॥
दृष्टाः स्वप्ना ये स्वं, प्रति तेऽत्र शुभाऽशुभा नृणां स्वस्य ॥ ये प्रत्यपरं तस्य, ज्ञेयास्ते स्वस्य नो किंचित् ॥२९॥
दुःस्वप्ने देवगुरून्, पूजयति करोति शक्तितश्च तपः ॥ सततं धर्मरतानां, दुःस्वप्नो भवति सुस्वप्नः ॥३०॥"

तथा सिद्धांतेऽपि—

पूर्वमनिष्टं दृष्ट्वा, स्वप्नं यः प्रेक्षते शुभं पश्चात् ॥ स तु फलदस्तस्य भवेद्, द्रष्टव्यं तद्वदिष्टेऽपि ॥ ११ ॥
स्वप्ने मानवमृगपति-तुरंगमातंगवृषभसिंहीभिः ॥ युक्तं रथमारूढो, यो गच्छति भूपतिः स भवेत् ॥१२॥
अपहारो हयवारण-यानासनसदननिवसनादीनाम् ॥ नृपशंकाशोककरो, वंधुविरोधार्थहानिकरः ॥१३॥
यः सूर्याचंद्रमसो-र्बिम्वं ग्रसते समग्रमपि पुरुषः ॥ कलयति दीनोऽपि महीं,ससुवर्णां सार्णवां नियतम् ।१४।
हरणं प्रहरणभूषण-मणिमौक्तिककनकरूप्यकुप्यानाम् ॥ धनमानम्लानिकरं, दारुणमरणावहं बहुशः ।१५।
आरूढः शुभ्रमिभं, नदीतटे शालिभोजनं कुरुते ॥ भुंक्ते भूमीमखिलां, स जातिहीनोऽपि धर्मधनः ॥१६॥
निजभार्याया हरणे, वसुनाशः परिभवे च संक्लेशः ॥ गोत्रस्त्रीणां तु नृणां, जायेते वंधुवधबंधौ ॥ १७ ॥
शुभ्रेण दक्षिणस्यां, यः फणिना दश्यते निजभुजायाम् ॥ आसादयति सहस्रं, कनकस्य स पंचरात्रेण ।१८।
जायेत यस्य हरणं, निजशयनोपानहां पुनः स्वप्ने ॥ तस्य म्रियते दयिता, निविडा स्वशरीरपीडा च ॥१९॥
यो मानुषस्य मस्तक-चरणभुजानां च भक्षणं कुरुते ॥ राज्यं कनकसहस्रं, तदर्द्धमाप्नोत्यसौ क्रमशः ॥२०॥
द्वारपरिघस्य शयन-प्रेंखोलनपादुकानिकेतानाम् ॥ भंजनमपि यः पश्यति, तस्यापि कलत्रनाशः स्यात्॥२१॥

"अनुभूतः १ श्रुतो २ दृष्टः ३, प्रकृतेश्च विकारजः ४ ॥ स्वभावतः समुद्भूत ५ श्चिंतासततिसंभवः ६ ॥ १ ॥
देवताद्युपदेशोत्थो ७, धर्मकर्मप्रभावजः ८ ॥ पापोद्रेकसमुत्थश्च ९, स्वप्नः स्यान्नवधा नृणाम् ॥ २ ॥
प्रकारैरादिमैः षड्भि-रशुभश्च शुभोऽपि वा । दृष्टो निरर्थकः स्वप्नः, सत्यस्तु त्रिभिरुत्तरैः ॥ ३ ॥
रात्रेश्चतुर्षु यामेषु, दृष्टः स्वप्नः फलप्रदः ॥ मासैर्द्वादशभिः षड्भि-स्त्रिभिरेकेन च क्रमात् ॥ ४ ॥
निशांत्यघटिकायुग्मे, दशाहात्फलति ध्रुवम् ॥ दृष्टः सूर्योदये स्वप्नः, सद्य. फलति निश्चितम् ॥ ५ ॥
मालास्वप्नोऽह्नि दृष्टश्च, तथाऽऽधिव्याधिसंभवः ॥ मलमूत्रादिपीडोत्थः, स्वप्नः सर्वो निरर्थकः ॥ ६ ॥

[ आर्यावृत्तम् ]

धर्मरतः समधातु-र्यः स्थिरचित्तो जितेन्द्रियः सदय. ॥ प्रायस्तस्य प्रार्थित-मर्थं स्वप्न. प्रसाधयति ॥ ७ ॥
न श्राव्य. कुस्वप्नो, गुर्वादेस्तदितर. पुनः श्राव्यः ॥ योग्यश्राव्याभावे, गोरपि कर्णे प्रविश्य वदेत् ॥ ८ ॥
इष्टं दृष्ट्वा स्वप्नं, न सुप्यते नाप्यते फलं तस्य ॥ नेया निशापि सुधिया, जिनराजस्तवनसंस्तवतः ॥ ९ ॥
स्वप्नमनिष्टं दृष्ट्वा, सुप्यात्पुनरपि निशामवाप्यापि ॥ नाऽयं कथ्य. कथमपि, केषांचित्फलति न स तस्मात् १०

तएणं ते सुविण इत्यादितः एवं वयासी इति यावत्, तत्र अण्णमण्णेणं सद्धिं संचालिंति अन्योन्येन परस्परेण सह संचालयंति संवादयंति पर्यालोचयंतीत्यर्थः, संचाल्य च तेसिंसुमिणाणं तेषां स्वप्नानां लद्धट्ठा लब्धोऽर्थो यैस्ते लब्धार्थाः स्वबुद्ध्याऽवगतार्थाः, गहियट्ठा परस्परतो गृहीतार्थाः पुच्छियट्ठा संशये

ढगा सिद्धत्थस्स खत्तियस्स अंतिए एयमट्ठं सोच्चा णिसम्म हट्ठ-तुट्ठ-जाव हियया ते सुमिणे ओगिण्हंति, ओगिण्हित्ता ईहं अणुपविसंति, अणुपविसित्ता अण्णमण्णेणं सद्धिं संचालेंति, संचालित्ता तेसिं सुमिणाणं लद्धट्ठा, गहिअट्ठा, पुच्छियट्ठा, विणिच्छियट्ठा, अहिगयट्ठा, सिद्धत्थस्स रण्णो पुरओ

सति परस्परं पृष्टार्थाः, तत एव विणिच्छियट्ठा विनिश्चितार्थाः, अत एव च अहिगयट्ठा अभिगतार्थाः अवधारितार्थाः संतः सिद्धार्थस्य राज्ञः पुरतः स्वप्नशास्त्राण्युच्चारयंतः सिध्धार्थ क्षत्रियं एवमवादिषुः। स्वप्नशास्त्राणि पुनरेवं—

यित्वा पुप्फफलपडिपुण्णहत्थे पुष्पैः प्रतीतैः, फलैर्नालिकेरादिभिः प्रतिपूर्णौ हस्तौ यस्य स तथा । यतः—
"रिक्तपाणिर्न पश्येच्च, राजानं दैवतं गुरुम् । निमित्तज्ञं विशेषेण, फलेन फलमादिशेत् ॥ १ ॥" ततः

पुप्फफलपडिपुण्णहत्थे परेणं विणएणं ते सुविणलक्खणपाढए एवं वयासी ॥ ६९ ॥ एवं खलु देवाणुप्पिया ! अज्ज तिसला खत्तियाणी तंसि तारिसगंसि जाव सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे उराले चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा ॥७०॥ तंजहा "गयवसह"गाहा । तं एएसिं चउद्दसण्हं महासुमिणाणं देवाणुप्पिया ! उरालाणं के मन्ने कल्लाणे फलवित्तिविसेसे भविस्सइ ? ॥ ७१ ॥ तएणं ते सुविणलक्खणपा-

पुष्पफलप्रतिपूर्णहस्तः सन् परेण विनयेन तान् स्वप्नपाठकान् एवमवादीत् ॥६९॥ किमित्याह । एवं खलु इत्यादितः पडिबुद्धा इति पर्यंतं सुगमम् ॥७०॥ तंजहा इत्यादितः भविस्सइ इति पर्यंतं सुगमम् ॥७१॥

## ॥ अथ चतुर्थः क्षणः ॥

तएणं ते सुविणलक्खणपाढगा ततस्ते स्वप्नलक्षणपाठकाः सिद्धार्थेन राज्ञा वंदियन्ति वंदिता गुणस्तुतिकरणेन पूइयन्ति पूजिताः पुष्पादिभिः सक्कारियन्ति सत्कारिताः फलवस्त्रादिदानेन सम्माणियन्ति

**तएणं ते सुविणलक्खणपाढगा सिद्धत्थेणं रण्णा वंदियपूइयसक्कारियसम्माणिया समाणा पत्तेयं पत्तेयं पुव्वण्णत्थेसु भद्दासणेसु णिसीअंति ॥ ६८॥**

**तएणं सिद्धत्थे खत्तिए तिसलं खत्तियाणिं जवणियंतरियं ठावेइ ठावित्ता**

सन्मानिता अभ्युत्थानादिभिः एवंविधाः संतः प्रत्येकं प्रत्येकं पूर्वन्यस्तेपु भद्रासनेषु निपीदंति ॥ ६८ ॥

तएणं सिद्धत्थे खत्तिए ततः स सिद्धार्थः क्षत्रियस्त्रिशलां क्षत्रियाणीं यवनिकांतरितां स्थापयति, स्थाप-

सूरिं श्रीविजयानन्द, विजयानन्दकारकम् । "आत्माराम" इति ख्यात, वन्दे सद्गुणलब्धये ॥ १ ॥

## ॥ इति तृतीयः क्षणः समाप्तः ॥

वल्लभविजयस्त्वेष, शिष्यशिष्यस्य शिष्यक. । नित्य करोति च भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां
कल्पसुबोधिकायां तृतीयः क्षणः समाप्तः ॥ ३ ॥

वर्द्धस्व इत्याशीर्वादं दत्तवंतः, सचैवं—"दीर्घायुर्भव वृत्तवान् भव भव श्रीमान् यशस्वी भव, प्रज्ञावान् भव भूरिसत्त्वकरुणादानैकशौण्डो भव ॥ भोगाढ्यो भव भाग्यवान् भव महासौभाग्यशाली भव, प्रौढश्रीर्भव कीर्तिमान् भव सदा विश्वोपजीवी भव ॥ १ ॥" [ "अत्रकिरणावलीकारदीपिकाकाराभ्यां कोटिंभरस्त्वं भवेति पाठो लिखितस्तत्र कोटिंभर इति प्रयोगश्चिंत्यः !"] "कल्याणमस्तु शिवमस्तु धनागमोऽस्तु, दीर्घायुरस्तु सुतजन्मसमृद्धिरस्तु ॥ वैरिक्षयोऽस्तु नरनाथ ! सदा जयोऽस्तु, युष्मत्कुले च सततं जिनभक्तिरस्तु ॥ २ ॥ ६७ ॥ ॥ ॥ ॥ ॥



काचित्सुभटानां पंचशती परस्परं असंबद्धा सेवानिमित्तं कस्यचिद्राज्ञः पुरो ययौ, राज्ञा च मंत्रिवचसा परीक्षार्थं एकैव शय्या प्रेषिता, ते च सर्वेऽपि अहमिंद्राः लघुवृद्धव्यवहाररहिताः परस्परं विवदमानाः सर्वैरपि एषा शय्या व्यापार्या इति बुद्ध्या शय्यां मध्ये मुक्त्वा तदभिमुखपादाः शयितवंतः, प्रातश्च प्रछन्नमुक्तपुरुषैर्यथावद्व्यतिकरे निवेदिते कथं एते स्थितिरहिताः परस्परं असंबद्धा युद्धादि करिष्यंतीति

सिद्धत्थे खत्तिए तेणेव उवागच्छंति उवागच्छित्ता करयलपरिग्गहियं जाव
कट्टु सिद्धत्थं खत्तियं जएणं विजएणं वद्धावेंति ॥ ६७ ॥ ॥

राज्ञा निर्भर्त्स्य निष्कासिताः! इति। ततस्ते स्वप्नपाठका एकतो मिलित्वा यत्र सिद्धार्थः क्षत्रियस्तत्रोपागच्छंति, उपागत्य च "करयलपरिग्गहियं" इत्यत्र यावत्करणात् "दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु" इति वाच्यम्। ततोऽञ्जलिं कृत्वा सिध्धार्थं क्षत्रियं प्रति जएणंविजएणंवद्धावेंति जयेन विजयेन त्वं

निमित्तं मूर्द्धनि यैस्ते तथा, एवंविधाः संतः सएहिं सएहिं गेहेहिंतो स्वकेभ्यः स्वकेभ्यो गृहेभ्यो निर्गच्छंति, निर्गत्य च क्षत्रियकुंडस्य ग्रामस्य नगरस्य मध्यमध्येन यत्रैव सिद्धार्थस्य राज्ञो भवनवरावतंसकप्रतिद्वारं भवनवरेषु भवनश्रेष्ठेषु अवतंसक इव मुकुट इव भवनवरावतंसकस्तस्य प्रतिद्वारं मूलद्वारं तत्र उपागच्छं-

मज्झं मज्झेणं जेणेव सिद्धत्थस्स रण्णो भवणवरवडिंसगपडिदुवारे तेणेव उवागच्छंति उवागच्छित्ता भवणवरवडिंसगपडिदुवारे एगओ मिलंति मिलित्ता जेणेव बाहिरिया उवट्ठाणसाला जेणेव

ति, उपागत्य भवनवरावतंसकप्रतिद्वारे एगओमिलंति एकत्र मिलन्ति सम्मतीभवति सर्वसंमतमेकं पुरस्कृत्य अन्ये तदनुयायिनो भवंतीति तत्त्वम्। यत "सर्वेऽपि यत्र नेतारः, सर्वे पंडितमानिनः। सर्वे महत्त्वमिच्छंति, तद्वृंदमवसीदति ॥ १ ॥" दृष्टांतश्च अत्र पंचशतसुभटानां तद्यथा–

कयकोउयमंगलपायच्छित्ता कौतुकानि तिलकादीनि, मंगलानि दधिदूर्वाक्षतादीनि, तान्येव प्रायश्चित्तानि दुःस्वप्नादिविध्वंसकानि कृतानि यैस्ते तथा, पुनः किं० ? सुद्धत्ति शुद्धानि उज्वलानि पावेसाइं प्रवेश्यानि राजसभाप्रवेशयोग्यानि मंगलाइं उत्सवादिमंगलसूचकानि एवंविधानि प्रवरवस्त्राणि परि-

कयकोउयमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवराइं परिहिया अप्पमहग्घाभरणालंकियसरीरा सिद्धत्थयहरियालियाकयमंगलमुद्धाणा सएहिं सएहिं गेहेहिंतो णिग्गच्छंति णिगच्छित्ता खत्तियकुंडग्गामं णयरं

हितानि यैस्ते तथा, पुनः किं० ? अप्पमहग्घा इत्यादि– अल्पानि स्तोकानि अथ च 'महग्घत्ति' महार्घाणि बहुमूल्यानि एवंविधानि यानि आभरणानि तैः अलंकृतं शरीरं येषां ते तथा, पुनः किं० ? सिद्धत्थ इत्यादि–सिद्धार्थाः श्वेतसर्षपाः, 'हरियालियत्ति' हरितालिका दूर्वा, तत् उभयं कृतं धृतं 'मंगलत्ति' मंगल-

पडिसुणित्ता इत्यादित. सद्दाविंति इति यावत्सुगमम् ॥६५॥ तएणंते ततस्ते स्वप्नलक्षणपाठका. सिद्धार्थस्य राज्ञः कौटुंबिकपुरुषैः शब्दिता. संतः हट्ठतुट्ठ इत्यादि–अत्र यावत्करणात् धाराहय इत्यादि वाच्यं, पुनः

पडिसुणित्ता सिद्धत्थस्स खत्तियस्स अंतियाओ पडिणिक्खमंति पडिणिक्खमित्ता कुंडग्गामं णयरं मज्झं मज्झेणं जेणेव सुविणलक्खणपाढगाणं गहाइं तेणेव उवागच्छति उवागच्छित्ता सुविणलक्खणपाढए सद्दाविंति ॥ ६६ ॥ तएणं ते सुविणलक्खणपाढगा सिद्धत्थस्स खत्तियस्स कोडुंबियपुरिसेहिं सद्दाविया समाणा हट्ठ-तुट्ठ-जावहियया ण्हाया कयवलिकम्मा

किंविशिष्टास्ते ? ण्हाया स्नाताः, पुनः किंवि०? कयवलिकम्मा कृतं वलिकर्म पूजा येस्ते तथा, पुन. किं० ?

निमित्तस्य अष्ट अंगानि इमानि "अंगं १ स्वप्नं २ स्वरं ३ चैव, भौमं ४ व्यंजन ५ लक्षणे ६ ॥ उत्पात ७ मंतरिक्षं च ८, निमित्तं स्मृतमष्टधा ॥१॥" तत्र पुंसां दक्षिणांगे, स्त्रीणां वामांगे, स्फुरणं सुंदरमित्याद्यंगविद्या (१) स्वप्नानां उत्तममध्यमाधमविचारः स्वप्नविद्या (२) दुर्गादीनां स्वरपरिज्ञानं स्वरविद्या (३) भौमं भूमिकंपादिविज्ञानं (४) व्यंजनं मषीतिलकादि (५) लक्षणं करचरणरे-

सद्दावेह, तएणं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा एवं वुत्ता समाणा हट्ठ-तुट्ठ-जावहियया करयलजाव–पडिसुणेंति ॥ ६५ ॥

खादि सामुद्रिकोक्तं (६) उत्पात उल्कापातादिः (७) अंतरिक्षं ग्रहाणां उदयास्तादिपरिज्ञानं (८) तएणं ततस्ते कौटुंबिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः संतः हट्ठतुट्ठ इत्यादि प्राग्वत्, नवरं– करयलजावत्ति यावत्करणात् "करयलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणंति" इति वाच्यं, आज्ञया विनयेन वचनं प्रतिशृण्वंति ॥ ६५ ॥

अंगसुहफरिसगं अंगस्य सुखः सुखकारी स्पर्शो यस्य तत्तथा, अत एव विसिट्ठं विशिष्टं शोभनं तिसलाए खत्तियाणीए त्रिशलायै क्षत्रियाण्यै तद्योग्यं इत्यर्थः, ईदृशं भद्रासनं रचयति, रचयित्वा च कौटुंबिकपुरुषान् शब्दयति, शब्दयित्वा च एवं अवादीत्, किमित्याह ॥६४॥ खिप्पामेव इत्यादितः पडिसुणेइ इति यावत्, तत्र भोदेवानुप्रिया ! क्षिप्रमेव शीघ्रमेव सुविणलक्खणपाढए स्वप्नलक्षणपाठ-

विसिट्ठं तिसलाए खत्तियाणीए भद्दासण रयावेइ रयावित्ता कोडुंबियपुरिसे
सद्दावेइ सद्दावित्ता एवं वयासी ॥ ६४ ॥ खिप्पामेव भोदेवाणुप्पिया !
अट्ठंगमहानिमित्तसुत्तत्थधारए विविहसत्थकुसले सुविणलक्खणपाढए

कान् सद्दावेह शब्दयत, किंविशिष्टान् स्वप्नलक्षणपाठकान् ? अट्ठंगेत्यादि– अष्ट अंगानि यत्र एवंविधं ये महानिमित्तं निमित्तशास्त्रं भाविपदार्थसूचकस्वप्नादिफलव्युत्पादको ग्रंथस्तस्य सूत्रार्थौ धारयंति ये ते तथा तान्, पुनः किंवि० ? विविहसत्थकुसले विविधानि यानि शास्त्राणि तत्र कुशलाः, तत्र

नवरं– ईहामृगा वृकाः, व्यालकाः सर्पाः, रुरवो मृगभेदाः, शरभा अष्टापदा महाकाया अटवीपशवः, 'चमरत्ति' चमर्यो गावः, कुंजराः प्रतीताः,'वणलयत्ति'वनलताः चंपकचूतादयः, पद्मलताः प्रतीताः, एतेषां या भक्तयो रचनाः ताभिश्चित्रां एवंविधां अभ्यंतरां यवनिकां रचयति, रचयित्वा भद्रासनं रचयति, अथ किंविशिष्टं भद्रासनं ? णाणामणि इत्यादि– विविधजातीयमणिरत्नानां भक्तिभी रचना-

अत्थरयमिउमसूरगोत्थयं सेअवत्थपच्चुत्थयं सुमउयं अंगसुहफरिसगं

भिश्चित्रम्, पुनः किंविशिष्टं ? अत्थरयत्ति आस्तरकः प्रतीतः मिउमसूरगोत्थयं मृदुर्यो मसूरकः आस्तरणविशेषस्ताभ्यां अवस्तृतं आच्छादितं, यद्वा अस्तरजसा निर्मलेन मृदुना कोमलेन मसूरकेण 'चाकलो– गादी' इति जनप्रसिद्धेन आच्छादितं, अथ पुनः किंविशिष्टं ? सेअवत्थपच्चुत्थयं श्वेतेन वस्त्रेण प्रत्यवस्तृतं उपरि आच्छादितं, पुनः किं० ? सुमउयं सुतरां मृदुकं अतिकोमलं, पुनः किंवि० ?

च अप्पणोअदूरसामंते आत्मनो नाऽतिदूरे नाऽतिसमीपे इत्यर्थः अब्भिंतरयं जवणियं अंछावेइ अभ्यंतरां यवनिकां आंछयति रचयतीति योजना, अथ किंविशिष्टां यवनिकां ? णाणामणि इत्यादि– नानाप्रकारैर्मणिरत्नैर्मंडितां अत एव अहिअपिच्छणिज्जं अधिकं प्रेक्षणीयां द्रष्टुं योग्याम्, पुनः किं० ?

रयावित्ता अप्पणो अदूरसामंते णाणामणिरयणमंडियं अहियपिच्छणिज्जं महग्घवरपट्टणुग्गयं सण्हपट्टभत्तिसयचित्तताणं ईहामिय-उसभ-तुरग-णर-मगर-विहग-वालग-किन्नर-रुरु-सरभ-चमर-कुंजर-वणलय-पउमलय-भत्तिचित्तं अब्भिंतरियं जवणियं अंछावेइ अंछावित्ता णाणामणिरयणभत्तिचित्तं

महग्धत्ति महार्घा बहुमूल्या वरपट्टणुग्गयं वरे प्रधाने पत्तने वस्त्ररत्नोत्पत्तिस्थाने उद्गता निष्पन्ना ततो विशेषणसमासस्तां, पुनः किं० ? सण्हत्ति श्लक्ष्णं यत् पट्टत्ति पट्टसूत्रं तन्मयः भत्तिसयचित्तत्ति भक्तीनां रचनानां शतानि तैः चित्रः ताणं तानको यस्यां सा तथा तां, पुनः किं० ? ईहामिगेत्यादि– सुबोधं,

कौडुंबिकाः कतिपयकुटुंबस्वामिनः मंतित्ति मंत्रिणो राज्याधिष्ठायकाः सचिवाः महामंतित्ति महामंत्रिणस्ते एव विशेषाधिकारवंतः, गणका ज्योतिषिकाः, दोवारियत्ति दौवारिकाः प्रतीहाराः अमच्चत्ति अमात्याः सहजन्मानो मंत्रिणः चेडत्ति चेटा दासाः पीढमद्दत्ति पीठमर्दकाः पीठं आसनं मर्दयंतीति पीठमर्दका आसन्नसेवका वयस्या इत्यर्थः णगरत्ति नागरा नगरवासिनो लोकाः णिगमत्ति

**मंति-महामंति-गणग-दोवारिय-अमच्च-चेड-पीढमद्द-णगर-**
**णिगम-सिट्ठि-सेणावइ-सत्थवाह-दूय-संधिवालसद्धिं संपरिवुडे**

निगमा वणिजः सिट्ठित्ति श्रेष्ठिनो नगरमुख्यव्यवहारिणः सेणावइत्ति सेनापतयश्चतुरंगसेनाधिकारिणः सत्थवाहत्ति सार्थवाहाः सार्थनायकाः दूयत्ति दूताः अन्येषां गत्वा राजादेशनिवेदकाः संधिवालत्ति संधिपालाः संधिरक्षकाः एतैः सर्वैः सद्धिं संपरिवुडे सार्धं संपरिवृतः, ईदृशो नरपतिर्मज्जनगृहात्प्र-

त्तेस्तेषां दामभिः सहितेन छत्रेण ध्रियमाणेन, श्वेतवरचामरैरुद्धूयमानैश्च शोभित इति शेषः। पुनः किं० ? मंगलजयसद्दकयालोए मंगलभूतो जयशब्दः कृत आलोके दर्शने यस्य स तथा, यस्य दर्शने लोकैर्जयजयशब्दः क्रियमाणोऽस्तीति ज्ञेयं, पुन. किं०? अणेगगणणायग इत्यादि—अनेके ये गणनायकाः स्वस्वसमुदायस्वामिनः दंडणायगत्ति दंडनायकाः तंत्रपाला. स्वदेशचिंताकर्तार इत्यर्थ. राइत्ति राजानो

छत्तेणं धरिज्जमाणेणं सेयवरचामराहिं उद्धुव्वमाणीहिं मंगलजयसद्दकयालोए अणेगगणणायग-दंडणायग-राईसर-तलवर-माडंबिय-कोडुंबिय-

मांडलिकाः ईसरत्ति ईश्वरा युवराजा "अत्रकिरणावलीकारेण दीपिकाकारेण च ईश्वरा युवराजान इति प्रयोगो लिखितः स तु चिंत्य.। अदसमासांतागमनेन युवराजा इति प्रयोगभवनात्" तलवरत्ति तलवरास्तुष्टभूपालप्रदत्तपट्टबंधविभूपिता राजस्थानीयाः माडंबियत्ति माडंबिका मडंबस्वामिनः कोडुंबियत्ति

विरचितानि सुसिलिट्ठुत्ति सुश्लिष्टानि सुयोजितसंधीनि अत एव विसिट्ठुत्ति विशिष्टानि अन्येभ्योऽतिरमणीयानि लट्ठुत्ति लष्टानि मनोहराणि एवंविधानि आविद्धवीरवलए आविद्धानि परिहितानि वीरवलयानि वीरत्वगर्वसूचकानि वलयानि येन स तथा, यः कश्चिद्वीरंमन्यः स मां विजित्य इमानि मोचयतु ! इति बुद्ध्या धृतवीरवलय इत्यर्थः, उपसंहरति किंवहुणा ? वहुना वर्णकवाक्येन किं० ?

सुसिलिट्ठविसिट्ठलट्ठआविद्धवीरवलए किं वहुणा ? कप्परु-
क्खएविव अलंकियविभूसिए णरिंदे सकोरिंटमल्लदामेणं

कप्परुक्खएविव अलंकियविभूसिए कल्पवृक्ष इव अलंकृतविभूषितः, तत्र कल्पवृक्षोऽलंकृतः पत्रादिभिः, विभूषितश्च पुष्पादिभिः, राजा तु अलंकृतो मुकुटादिभिः, विभूषितो वस्त्रादिभिः, ईदृशः णरिंदे नरेंद्रः सकोरिंटमल्लदामेणं कोरिंटवृक्षसंबंधीनि माल्यानि पुष्पाणि मालायै हितानीति व्युत्प-

मुखं यस्य स तथा, पुनः किं० ? मउडदित्तसिरए मुकुटेन दीप्तं शिरो यस्य स तथा, पुनः किं० ? हारुत्थयत्ति हारेण अवस्तृतं आच्छादितं अत एव सुकयरइयत्ति सुष्ठुकृतरतिकं द्रष्टॄणां प्रमोददायि एवंविधं वक्षो हृदयं यस्य स तथा, पुनः किं० ? मुद्दिया इत्यादि–मुद्रिकाभिः पिंगलाः पीतवर्णा अंगुलयो ॥ २ ॥
यस्य स तथा, पुनः किं० ? पालंब पलंब इत्यादि–प्रालंबेन दीर्घेण अत एव 'पलंबमाणत्ति' प्रलम्बमानेन

**रए हारुत्थयसुकयरइयवच्छे मुद्दियापिंगलंगुलिए पालंबपलंबमाणसुकयपड-उत्तरिज्जे णाणामणिकणगरयणविमलमहरिहणिउणोचिअमिसिमिसिंतविरइय-**

ईदृशेन पटेन 'सुकयत्ति' सुष्ठु कृतः 'उत्तरिज्जत्ति' उत्तरासंगो येन स तथा, पुनः किं० ? णाणा इत्यादि–
नानाप्रकारैर्मणिकनकरत्नैर्विमलानि दीप्तिमति अत एव महरिहत्ति महार्हाणि निउणोचिअत्ति निपु- ॥ ९४ ॥
णेन शिल्पिना उचितानि परिकर्मितानि मिसिमिसिंतत्ति देदीप्यमानानि एवंविधानि विरइयत्ति

माणकडिसुत्तसुकयसोहे कल्पिता विन्यस्ता ये हारादयः, तत्र हारोऽष्टादशसरिकः, अर्धहारो नवसरिकस्त्रिसरिकं च प्रतीतं, तथा 'पालंबपलंबमाणत्ति' प्रलंबमानः प्रालंबो झुंबनकं 'कडिसुत्तत्ति' कटिसूत्रं च कट्याभरणं, एतैः कृत्वा 'सुकयत्ति' सुष्ठु कृता शोभा यस्य स तथा, पुनः किं० ? पिणद्धगेविज्जे पिनद्धानि परिहितानि ग्रैवेयाणि ग्रीवाभरणानि येन स तथा, पुनः किं० ? अंगुलिज्जगललियकया-

**णकडिसुत्तसुकयसोहे पिणद्धगेविज्जे अंगुलिज्जगललियकयाभरणे वरकडगतुडियथंभियभुए अहियरूवसस्सिरीए कुंडलुज्जोइयाणणे मउडदित्तसि-**

भरणे अंगुलीयकानि अंगुल्याभरणानि 'ललियत्ति' ललितानि यानि 'कयाभरणत्ति' कचाभरणानि केशमंडनानि पुष्पादीनि यस्य स तथा, पुनः किंविशिष्टः ? वरकडगतुडियथंभियभुए वरैः प्रधानैः कटकैर्वलयैः त्रुटिकैश्च बाह्वाभरणैः स्तंभितौ इव भुजौ यस्य स तथा, पुनः किं० ? अहियरूवसस्सिरीए अधिकरूपेण सश्रीको यः स तथा, पुनः किं० ? कुंडलुज्जोइयाणणे कुंडलाभ्यां उद्योतितं आननं

पायिका कषायरक्ता शाटिका तया लूहियत्ति रूक्षितं निर्जलीकृतं अंगं शरीरं यस्य स तथा, पुनः कीदृशो राजा ? अहयत्ति अहतं अव्यंगं सुमहग्घत्ति सुमहार्घं बहुमूल्यं ईदृशं यत् दूसरयणत्ति दूष्यरत्नं वस्त्ररत्नं तेन सुसंवुडे सुष्ठु संवृतः परिहितदूष्यरत्न इत्यर्थः, पुनः किं० ? सरसेत्यादि– सरसेन सुरभिणा च गोशीर्षचंदनेन अनुलिप्तं गात्रं यस्य स तथा, पुनः किंविशिष्टः ? सुइमालावण्णगविलेवणे

महग्घदूसरयणसुसंवुडे सरससुरभिगोसीसचंदणाणुलित्तगत्ते सुइमालावण्णगविलेवणे आविद्धमणिसुवण्णे कप्पियहारद्धहारतिसरयपालंबपलंबमा-

तत्र माला पुष्पमाला, वर्णकविलेपनं च मंडनकारि कुंकुमादिविलेपनं, तत् उभयं 'सुइत्ति' शुचि पवित्रं यस्य स तथा, पुनः किं० ? आविद्धमणिसुवण्णे आविद्धानि परिहितानि मणिसुवर्णानि लक्षणया मणिसुवर्णमयानि भूषणानि येन स तथा, पुनः किं० ? कप्पियहारद्धहारतिसरयपालंबपलंब-

भक्तिच्चित्रे स्नानपीठे सुहणिसण्णे सुखेन निपण्ण उपविष्टः सुखनिपण्णः सन् पुप्फोदएहिं पुष्पोदकैः पुष्परसमिश्रैर्जलैः गंधोदएहिं गंधोदकैः श्रीखंडादिरसमिश्रैर्जलैः उण्होदएहिं उष्णोदकैः सुहोदएहिं शुभोदकैः तीर्थजलैः सुद्धोदएहिं शुद्धोदकैः स्वभावनिर्मलोदकैः एवंप्रकारैर्विविधपानीयैः कृत्वा कल्लाणकरणपवर इत्यादि– कल्याणकरणे प्रवरः प्रवीण एवंविधो यो मज्जनविधिस्तेन मज्जितस्तादृशैः

पुप्फोदएहि अ,गंधोदएहि अ,उण्होदएहि अ, सुहोदएहि अ,सुद्धोदएहि अ,
कल्लाणकरणपवरमज्जणविहीए मज्जिए तत्थ कोउयसएहिं वहुविहेहिं
कल्लाणगपवरमज्जणावसाणे पह्मलसुकुमालगंधकासाइयलूहियंगे अहयसु-

पुरुषैरिति शेपः तत्थ तत्र स्नानावसरे कोउयसएहिं वहुविहेहिं वहुप्रकारैः कौतुकशतैः रक्षादीनां शतैः संयुक्ते । अथ कीदृशो राजा ? कल्लाणगत्ति कल्याणकारि एवंविधं यत् पवरमज्जणावसाणे प्रवरमज्जनं तस्यावसाने प्रांते पह्मलसुकुमालत्ति पक्ष्मला अत एव सुकुमाला गंधकासाइयत्ति गंधप्रधाना का-

हाए रोमसुखकारिण्या संवाहितः सन् अवगयपरिस्समे अपगतपरिश्रमः अट्टनशालायाः प्रतिनिष्क्रामति ॥ ६१ ॥ अट्टनशालायाः प्रतिनिष्क्रम्य यत्रैव मज्जनगृहं तत्रोपागच्छति, उपागत्य मज्जनगृहं अनुप्रविशति, अनुप्रविश्य, समुत्तेत्यादि– समुक्तं मुक्ताफलयुक्तं यत् जालं गवाक्षस्तेन आकुलो

अट्टणसालाओ पडिणिक्खमइ ॥ ६१ ॥ अट्टणसालाओ पडिणिक्खमित्ता जेणेव मज्जणघरे तेणेव उवागच्छइ उवागच्छित्ता मज्जणघरं अणुपविसइ अणुपविसित्ता समुत्तजालाकुलाभिरामे विचित्तमणिरयणकुट्टिमतले रमणिज्जे ण्हाणमंडवंसि णाणामणिरयणभत्तिचित्तंसि ण्हाणपीढंसि सुहणिसण्णे

व्याप्तोऽभिरामश्च तस्मिन्, विचित्तेत्यादि–विचित्राणां मणिरत्नानां कुट्टिमतलं बद्धभूभागो यस्य स तथा तस्मिन् रमणिज्जे रमणीये ण्हाणमंडवंसि एवंविधे स्नानमंडपे णाणामणिरयण इत्यादि–नानामणिरत्न-

गुणविशेषास्तेषु णिम्माएहिं निर्मातैर्विशिष्टाभ्यासवद्भिः, पुनः किं० ? छेएहिं छेकैः अवसरज्ञैः, पुनः किं० ? दक्खेहिं दक्षैः त्वरितत्वरितं कार्यकारिभिः, पुनः किं० ? पट्ठेहिं प्रष्टैः मर्दनकारिणां अग्रेसरैः, पुनः किं० ? कुसलेहिं कुशलैर्विवेकिभिः, पुनः किं० ? मेहावीहिं मेधाविभिः अपूर्वविज्ञानग्रहणसमर्थैः, पुनः किं० ? जिअपरिस्समेहिं जितपरिश्रमैः एवंविधैः पुरुषैः चउव्विहाए चतुर्विधया सुहपरिकम्मणाए

णिम्माएहिं छेएहिं दक्खेहिं पट्ठेहिं कुसलेहिं मेहावीहिं जिअपरिस्स-
मेहिं पुरिसेहिं अट्ठिसुहाए मंससुहाए तयासुहाए रोमसुहाए चउव्वि-
हाए सुहपरिकम्मणाए संबाहणाए संबाहिए समाणे अवगयपरिस्समे

सुखा सुखकारिणी परिकर्मणा अंगशुश्रूषा यस्यां सा तथा एवंविधया संवाहणाए संवाधनया विश्रामणया संवाहिए समाणे संवाहितः कृतविश्रामणःसन् । तदेव चतुर्विधत्वं दर्शयति अट्ठिसुहाए अस्थिसुखया अस्थ्नां सुखकारिण्या मंससुहाए मांससुखया मांससुखकारिण्या तयासुहाए त्वचासुखकारिण्या रोमसु-

पल्हायणिज्जेहिं प्रल्हादनीयैः आप्यायनाकारिभिस्तैः कृत्वा अभ्यगितः सन्, तिल्लचम्मंसि तैलचर्मणि तैलाभ्यगानंतरं एवंविधैः पुरुषैः संवाहित. सन्नपगतपरिश्रमो जात इति योगः, अथ किंविशिष्टैः पुरुषै. ? णिउणेहिं निपुणैः उपायविचक्षणैः, पुनः किं० ? पडिपुण्णेत्यादि–प्रतिपूर्णस्य पाणिपादस्य सुकुमालकोमलानि अत्यंतकोमलानि तलानि येषां तै. " अत्र किरणावलीकारेण दीपिकाकारेण च प्रतिपूर्णानां पाणिपादानां इति प्रयोगो लिखितः स तु चिंत्य. 'प्राणितूर्यांगाणां' इतिसूत्रेणावश्यं हैमव्याकरणमते एकवद्भावभवनात् " पुनः किं० ? अब्भंगणेत्यादि–अभ्यंगनं तैलादिना म्रक्षणं परिमद्दणत्ति तस्य तैलस्य मर्दनं उव्वलणत्ति उद्वलनं तस्य तैलस्य वहिः कर्पणं उद्वर्तनं वा, एतेषां करणे ये गुणत्ति

दियगायपल्हायणिज्जेहिं अब्भंगिए समाणे तिल्लचम्मंसि णिउणेहिं पडि-
पुण्णपाणिपायसुकुमालकोमलतलेहिं अब्भंगणपरिमद्दणुव्वलणकरणगुण-

मुपर्युपरि पतनमिति यावत् वामद्दणत्ति व्यामर्दनं परस्परेण बाह्वाद्यंगमोटनम् । मल्लजुद्धत्ति मल्लयुद्धानि प्रतीतानि, करणानि च अंगभंगविशेषाः मल्लशास्त्रोक्ताः, एतैः कृत्वा संते श्रांतः सामान्येन श्रमं उपगतः परिस्संते परिश्रांतः सर्वांगीणं श्रमं प्राप्तः एवंविधः सन् सयपागत्ति शतवारं नवनवौषधरसेन पक्वानि, अथवा यस्य पाके शतं सौवर्णा लगंति तानि शतपाकानि, एवं सहस्सपागत्ति सहस्र-

**वामद्दण-मल्लजुद्धकरणेहिं संते परिस्संते सयपागसहस्सपागेहिं सुगंधवरतिल्ल-माइएहिं पीणणिज्जेहिं दीवणिज्जेहिं मयणिज्जेहिं विंहणिज्जेहिं दप्पणिज्जेहिं सव्विं-**

पाकानि एवंविधैः सुगंधवरतैलादिभिः आदिशब्दात्कर्पूरपानीयादीनि ग्राह्याणि तैः अब्भंगिए समाणे अभ्यंगितः सन्, अथ कीदृशैः तैलादिभिः? पीणणिज्जेहिं प्रीणनीयैः रसरुधिरादिधातुसमताकारिभिः दीवणिज्जेहिं दीपनीयैः अग्निदीप्तिकरैः मयणिज्जेहिं मदनीयैः कामवृद्धिकरैः विंहणिज्जेहिं बृंहणीयैर्मांसपुष्टिकरैः दप्पणिज्जेहिं दर्पणीयैर्बलकारिभिः सव्विंदियगायत्ति सर्वाणि इंद्रियगात्राणि तेषां

जीवलोके मनुष्यलोके खचिते व्याप्ते सति, कोऽर्थः? यथा कुंकुमेन किंचिद्वस्तु पिंजरीक्रियते तथा बालातपेन मनुष्यलोके पिंजरीकृते सति शयनीयात् अभ्युत्तिष्ठति ॥ ६० ॥ सयणिज्जाओ इत्यादित. पडिणिक्खमइ पर्यन्तं, तत्र स सिद्धार्थः शयनीयादभ्युत्थाय पादपीठात्प्रत्यवतरति, प्रत्यवतीर्य यत्रैव

सयणिज्जाओ अब्भुट्ठेइ ॥ ६० ॥ सयणिज्जाओ अब्भुट्ठेत्ता पायपीढाओ पच्चोरुहइ पच्चोरुहित्ता जेणेव अट्टणसाला तेणेव उवागच्छइ उवागच्छित्ता अट्टणसालं अणुपविसइ अणुपविसित्ता अणेगवायाम-जोग्ग- वग्गण-

अट्टनशाला परिश्रमशाला तत्रोपागच्छति, उपागत्य अट्टनशालां अनुप्रविशति, अनुप्रविश्य च अनेकानि व्यायामाय परिश्रमाय करणीयानि यानि योग्यावल्गनव्यामर्दनमल्लयुद्धकरणानि, तत्र जोग्गत्ति योग्या अभ्यासः 'खुरली तु श्रमो योग्याऽभ्यास' इतिवचनात्, वग्गणत्ति वल्गनं उल्लघनं अन्योन्य-

अतिरेकेण राजमानः सन् सदृशः, अत्र यः अतिरेकेण राजमानः स सदृशः. कथं भवतीत्याशंकायां रक्तत्वमात्रेण सदृशः, कांत्या तु अतिरेकेण राजमान इति वृद्धाः, अथवा रक्ताशोकप्रकाशादीनां हिंगुलनिकरांतानां यो राजमानोऽतिरेकः प्रकर्षस्तत्सदृश इति । पुनः किंविशिष्टे सूर्ये? कमलायर-संडविबोहए कमलानां आकरा उत्पत्तिस्थानानि ये पद्महृदादयस्तेषु यानि खंडानि कमलवनानि

कमलायरसंडविबोहए उट्ठियंमि सूरे सहस्सरस्सिंमि दिणयरे तेअसा जलंते
तस्स य करपहरापरद्धंमि अंधयारे बालायवकुंकुमेणं खचियव्व जीवलोए

तेषां विकाशके 'उट्ठियंमि सूरे' इति तु प्राग् योजितम् । पुनः किंविशिष्टे सूर्ये ? सहस्सरस्सिंमि सहस्त्ररश्मौ, पुनः किंविशिष्टे सूर्ये ? दिणयरे दिनकरे दिनकरणशीले, पुनः किं० ? तेअसा जलंते तेजसा देदीप्यमाने तस्स य करपहरापरद्धंमि अंधयारे तस्य च श्रीसूर्यस्य करप्रहारैः किरणाभिघातैः अंधकारे अपराद्धे विनाशिते सति । अथ च बालायवत्ति बालातपः प्रसिद्धः स कुंकुममिव तेन

दलविकासेन विकसनं जातं, हरिणानां च नयनविकासेनेति तस्मिन्प्रभाते जाते उट्ठियंमि सूरे पूर्वं रजनी विभाता तत ईषत्प्रकाशो जातस्ततश्च पांडुर उज्ज्वलं प्रभातं जातं ततश्च क्रमेण सूर्ये उद्गते सति, अथ किंविशिष्टे सूर्ये ? रत्तासोगप्पगासत्ति रक्तस्य अशोकस्य यः प्रकाश. प्रभासमूह. किंसुअत्ति किंशुकं पलाशपुष्पं सुअमुहत्ति शुकमुखं शुकचंचुपुटं गुंजद्धत्ति गुंजाया अर्ध. कृष्णभागादन्य-

सोगप्पगास-किंसुय-सुयमुह-गुंजद्धराग-बंधुजीवग-पारावयचलणनयण-
परहुअसुरत्तलोअण-जासुअणकुसुमरासि-हिंगुलयणियराइरेगरेहंतसरिसे

भागलक्षण. एतेषां यो रागो रक्तत्वं, तथा बंधुजीवगत्ति बंधुजीवकं पुष्पविशेषः "बपोहरिआंफूल" इति लोकप्रसिद्धः पारावयचलणणयणत्ति पारापतस्य चरणनयनं परहुअसुरत्तलोअणत्ति परभृतस्य कोकिलस्य सुरक्ते कोपादिना रक्तीकृते ये लोचने जासुअणकुसुमरासित्ति जपापुष्पस्य 'जासू' इति लोकप्रसिद्धस्य यो राशिः समूहस्तथा हिंगुलनिकरश्च प्रसिद्धः एतेभ्य. सर्ववस्तुभ्यः अइरेगरेहंतसरिसे

तीत्यर्थः ॥ ५९ ॥ तएणं सेसिद्धत्थे ततः स सिद्धार्थः क्षत्रियः कल्लं कल्ये श्वः पाउप्पभायाए प्रादुरित्यव्ययं प्राकाश्ये ततः प्रकटप्रभातायां रजन्यां, फुल्लुप्पल इत्यादि– फुल्लं विकसितं यत् उत्पलं पद्मं,

उवट्ठाणसालं गंधोदयसुत्तसुइयजाव सीहासणं रयाविंति रयावित्ता जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छंति उवागच्छित्ता करयलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु सिद्धत्थस्स खत्तियस्स तमाणत्तियं पच्चप्पिणंति ॥ ५९ ॥ तएणं से सिद्धत्थे खत्तिए कल्लं पाउप्पभायाए रयणीए फुल्लुप्पलकमलकोमलुम्मिलियम्मि अहापंडुरे पभाए रत्ता-

कमलश्च हरिणविशेषस्तयोः कोमलं सुकुमालं उन्मीलितं विकसनं दलानां नयनयोश्च यस्मिन्नेवंविधे अहापंडुरे पभाए अथ रजनीविभातानंतरं पांडुरे उज्वले प्रभाते, अयमर्थः यस्मिन्प्रभाते पद्मानां

रचयित्वा च मम एतां आज्ञप्तिं क्षिप्रमेव प्रत्यर्पयत ॥ ५८ ॥ तएणं ते कोडुंबियपुरिसा ततस्ते कौटु-
म्बिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः संतो हृष्टास्तुष्टा इत्यादि पूर्ववत्, अत एवंविधाः संतः

खिप्पामेव पच्चपिणह ॥ ५८ ॥ तएणं ते कोडुंबियपुरिसा सिद्धत्थेणं रण्णा
एवं वुत्ता समाणा हट्ठ-तुट्ठ-जाव हियया करयलजावकट्टु एवं सामित्ति
आणाए विणएणं वयणं पडिसुणंति पडिसुणित्ता सिद्धत्थस्स खत्तियस्स
अंतियाओ पडिणिक्खमंति पडिणिक्खमित्ता जेणेव बाहिरिया उवट्ठाण-
साला तेणेव उवागच्छंति उवागच्छित्ता खिप्पामेव सविसेसं बाहिरियं

एवं सामित्ति हेस्वामिन् ! यथा यूयं आदिशत तत्तथैव अस्माभिरवश्यं कर्तव्यं इत्युक्त्वा यावत् तत्त-
थैव सर्वं कृत्वा सिद्धार्थस्य क्षत्रियस्य तां आज्ञां प्रत्यर्पयति, अस्माभिर्भवदादेशः कृत इति निवेदयं-

मेव भोदेवानुप्रियाः! अज्ज सविसेसं अद्य उत्सवदिनत्वात् सविशेषां बाहिरियं बाह्यां उवट्ठाणसालं उपस्थानशालां उपस्थानमंडपं " कचहरी " इति लोके, किंविशिष्टाम्? गंधोदगसित्तं गंधोदकेन सुगंधवारिणा सिक्तां सुइसंमज्जिओवलित्तं शुचिं पवित्रां संमार्जितां कचवरापनयनेन उवलित्तं उप-

अज्ज सविसेसं बाहिरियं उवट्ठाणसालं गंधोदगसित्तं सुइसंमज्जिओव-लित्तं सुगंधवरपंचवण्णपुप्फोवयारकलिअं कालागुरु-पवरकुंदुरुक्क-तुरुक्क-डज्झंतधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूयं करेह कारवेह करित्ता कारवित्ता य सिंहासणं रयावेह रयावित्ता मम एयमाणत्तियं

लिप्तां छगणादिना ततः पदत्रयस्य कर्मधारयः, सुगंधवर इत्यादीनि विशेषणानि प्राग्वद्व्याख्येयानि, ततः एवंविधां उपस्थानशालां कुरुत स्वयं, कारयत अन्यैः, कृत्वा कारयित्वा च तत्र सिंहासनं रचयत,

विफलीक्रियंतामिति कृत्वा देवगुरुजनसंबद्धाभिः अत एव प्रशस्ताभिर्मंगल्याभिर्धार्मिकाभिः कथाभिः स्वप्नजागरिकां स्वप्नसंरक्षणार्थं जागरिका स्वप्नजागरिका तां जाग्रती पडिजागरमाणी तान् स्वप्नानेव स्वापनिवारणेन प्रतिचरंती विहरति आस्ते इत्यर्थः ॥ ५६ ॥ तएणं सिद्धत्थे ततः स सिद्धार्थो राजा

स्संतित्ति कट्टु देवयगुरुजणसंबद्धाहिं पसत्थाहिं मंगल्लाहिं धम्मियाहिं कहाहिं सुमिणजागरियं जागरमाणी पडिजागरमाणी विहरइ ॥ ५६ ॥ तएणं सिद्धत्थे खत्तिए पच्चूसकालसमयंसि कोडुंबियपुरिसे सद्दावेइ सद्दावित्ता एवं वयासी ॥ ५७ ॥ खिप्पामेव भोदेवाणुप्पिया !

पच्चूसकालसमयंसि प्रत्यूषकालसमये प्रभातकाले कोडुंबियपुरिसे सद्दावेइ कौटुंबिकपुरुषान् सेवकान् शब्दयति आकारयति, शब्दयित्वा च एवमवादीत् ॥ ५७॥ किमित्याह खिप्पामेव क्षिप्रमेव शीघ्र-

वद्थेति कृत्वा इति उक्त्वा तान् स्वप्नान् सम्यक् प्रतीच्छति अंगीकरोति, अंगीकृत्य च सिद्धार्थेन राज्ञाऽभ्यनुज्ञाता स्वस्थानं गंतुं अनुमता सती नानामणिरत्नचित्राद्भद्रासनादभ्युत्तिष्ठति, अभ्युत्थाय च अत्वरितया अचपलया असंभ्रांतया अविलंबितया राजहंससदृश्या गत्या यत्र स्वकं शयनीयं

सुमिणे सम्मं पडिच्छइ पडिच्छित्ता सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी णाणामणिरयणभत्तिचित्ताओ भद्दासणाओ अब्भुट्ठेइ अब्भुट्ठित्ता अतुरियमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सए सयणिज्जे तेणेव उवागच्छइ उवागच्छित्ता एवं वयासी ॥५५॥ मा मेते उत्तमा पहाणा मंगल्ला सुमिणा दिट्ठा अण्णेहिं पावसुमिणेहिं पडिहम्मि-

तत्रोपागच्छति, उपागत्य चैवमवादीत् ॥५५॥ मा मेते इत्यादि मे मम एते पूर्वोक्ता उत्तमाः स्वरूपतः सुंदराः प्रधानाः सत्फलदायकाः अत एव मंगल्ला मंगलकारिणः स्वप्ना अन्यैः पापस्वप्नैर्मा प्रतिहन्यंतां

तंउरालाणं तस्मादुदारास्त्वया स्वप्ना दृष्टा एवं दुच्चंपि तच्चंपि द्विः त्रिः वारद्वयं वारत्रयं अपि अणुवूहइ प्रशंसति। तएणमित्यादि—ततोऽनन्तरं सा त्रिशला क्षत्रियाणी सिद्धार्थस्य राज्ञः पार्श्वे एतमर्थं श्रुत्वा

तं उरालाणं तुमे जाव दुच्चंपि तच्चंपि अणुवूहइ । तएणं सा तिसला खत्तियाणी सिद्धत्थस्स रण्णो अंतिए एयमट्ठं सुच्चा णिसम्म हट्ठ-तुट्ठ-जाव हियया करयलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५४ ॥ एवमेयं सामी! तहमेयं सामी! अवितहमेयं सामी! असंदिद्धमेयं सामी! इच्छियमेयं सामी! पडिच्छियमेयं सामी! इच्छियपडिच्छियमेयं सामी! सच्चेणं एसमट्ठे से जहेयं तुब्भे वयहत्ति कट्टु ते

निशम्यावधार्य हृष्टा तुष्टा यावत् हर्षपूर्णहृदया यावत् मस्तके अंजलिं कृत्वा एवमवादीत् ॥ ५४ ॥ एवमेयंसामी! एवमेतत् स्वामिन्! इत्यादीनि पदानि श्राम्वत् यावत् इतिकट्टु सत्य एषोऽर्थो यथा यूयं

वृद्धिस्तस्य करं कारकम्, सुकुमालपाणिपायं इत्यादीनि विशेषणानि प्राग्वत् ॥ ५२ ॥ सेवियणं सोपि च दारक उन्मुक्तबालभावो विण्णायपरिणयमित्ते विज्ञातं विज्ञानं तत् परिणतमात्रं यस्य स तथा परिपक्वविज्ञान इत्यर्थः । यौवनमनुप्राप्तो राज्यपती राजा भविष्यति । किंविशिष्टः ? सूरे

लक्खणवंजणगुणोववेयं माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं ससिसोमाकारं कंतं पियदंसणं सुरूवं दारयं पयाहिसि ॥ ५२ ॥ सेविअ णं दारए उम्मुक्कबालभावे विण्णायपरिणयमित्ते जुव्वणगमणुप्पत्ते सूरे वीरे विक्कंते वित्थिण्णविपुलबलवाहणे रज्जवई राया भविस्सई ॥ ५३ ॥

शूरः दाने अंगीकृतनिर्वाहे च समर्थः इत्यर्थः वीरे वीरः संग्रामे समर्थः विक्कंते विक्रांतः परमंडलाक्रमणसमर्थः पराक्रमवानित्यर्थः, वित्थिण्णेत्यादि–विस्तीर्णादपि विपुले अतिविस्तीर्णे इत्यर्थः एवंविधे बलवाहने यस्य स तथा, तत्र बलं सेना, वाहनं गवादिकम् ॥ ५३ ॥

अह्मं कुलकेउं अस्माकं कुले केतुरिव केतुश्चिह्नं ध्वजस्तत्सदृशं अत्यद्भुतमित्यर्थः । अह्मं कुलदीवं अस्माकं कुले दीप इव दीपस्तं प्रकाशकं मंगलकारकं च कुलपव्वयं कुले पर्वत इव पर्वतः अपराभवनीयः स्थिरश्च कुलस्याधार इत्यर्थः । कुलवडिंसय कुलेऽवतंसक इव मुकुट इव यस्तं, शोभाकरत्वात्, अत एव कुलतिलकं, कुलकीर्तिकरं च कुलवित्तिकरं कुलस्य वृत्तिर्निर्वाहस्तत्करं, तथा कुलदिणयरं कुले दिनकर

कुलकेउं अम्हं कुलदीवं कुलपव्वयं कुलवडिंसयं कुलतिलयं कुलकित्तिकरं कुलवित्तिकरं कुलदिणयरं कुलआधारं कुलणंदिकरं कुलजसकरं कुलपायवं कुलविवद्धणकरं सुकुमालपाणिपायं अहीणसंपुण्णपंचिंदियसरीरं

इव प्रकाशकत्वाद्यस्तं, कुलाधारं पृथिवीवत् कुलणंदिकरं कुलस्य नंदिर्वृद्धिस्तत्करं कुलजसकरं कुलस्य सर्वदिग्गामिख्यातिकरं, एकदिग्गामिनी कीर्तिः, सर्वदिग्गामुकं यश इतिवचनात् कुलपायवं छायाकरत्वात् आश्रयणीयत्वाच्च कुलस्य पादप इव वृक्ष इव यस्तं, कुलविवद्धणकरं कुलस्य विवर्द्धनं सर्वतो

मात्य २ सुहृ ३ त्कोश ४ राष्ट्र ५ दुर्ग ६ सैन्य ७ लक्षणं सप्तांगं, तेषां लाभो भविष्यतीति । अथ सामान्येन फलान्युक्त्वा विशेषतो मुख्यं फलमाह । एवं खलु देवानुप्रिये ! त्वं नवसु मासेषु बहुप्र-

सुमिणा दिट्ठा एवं सिवा धन्ना मंगल्ला सस्सिरीआ आरुग्ग-तुट्ठि-दीहाउ-कल्लाण( ३०० ) मंगल्लकारगा णं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा, अत्थलाभो देवाणुप्पिए ! भोगलाभो देवाणुप्पिए ! पुत्तलाभो देवाणुप्पिए ! सुक्खलाभो देवाणुप्पिए ! रज्जलाभो देवाणुप्पिए ! एवं खलु तुमे देवाणुप्पिए ! णवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणराइंदियाणं वइक्कंताणं अम्हं

तिपूर्णेषु अर्धाष्टमरात्रिंदिवाधिकेषु व्यतिक्रांतेषु सुरूपं दारकं पुत्रं प्रजनिष्यसीति संबंधः । किंविशिष्टं ?

स्वप्नानां अत्थुग्गहं अर्थावग्रहं अर्थनिश्चयं करोति, अर्थनिश्चयं कृत्वा च त्रिशलां क्षत्रियाणीं ताहिं इट्ठाहिं इत्यादि प्राग्वत्, एवंविधाभिः वग्गूहिं वाग्भिः संलपन्नेवमवादीत् ॥ ५१ ॥ किमित्याह । देवाणुप्पिए हेदेवानुप्रिये! सरलस्वभावे ! तुमे त्वया उरालाणं उदाराः प्रशस्ताः स्वप्ना दृष्टाः कल्लाणाणं इत्यादि प्राग्वत्।

सित्ता अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ करित्ता तिसलं खत्तियाणिं ताहिं इट्ठाहिं जाव मंगल्लाहिं मियमहुरसस्सिरीयाहिं वग्गूहिं संलवमाणे संलवमाणे एवं वयासी ॥५१॥ उरालाणं तुमे देवाणुप्पिए ! सुमिणा दिट्ठा कल्लाणाणं तुमे देवाणुप्पिए !

अथ तेषां स्वप्नानां महिम्ना किं भविष्यतीत्याह। अत्थलाभो इत्यादि—अर्थादीनां लाभो भविष्यतीति, तत्र अर्थो मणिकनकादिः, भोगाः शब्दादयः, पुत्रः प्रतीतः, सुखं निर्वृतिः, रज्जत्ति राज्यं स्वाम्यं ...

चतुर्दशानां महास्वप्नानां के मण्णे मन्ये इत्ति वितर्कार्थो निपातः ततः को नु? कल्लाणे कल्याणकारी फलवित्तिविसेसो भविस्सइ फलवृत्तिविशेषो भविष्यतीति ॥ ५० ॥

तएणं से सिद्धत्थे ततः स सिद्धार्थो राजा त्रिशलायाः क्षत्रियाण्या अंतिके एतमर्थं सुच्चा श्रुत्वा

महासुमिणाणं के मण्णे कल्लाणे फलवित्तिविसेसे भविस्सइ ॥ ५० ॥
तएणं से सिद्धत्थे राया तिसलाए खत्तियाणीए अंतिए एयमट्ठं सुच्चा णिसम्म हट्ठतुट्ठजावहियए धाराहयनीवसुरहिकुसुमचंचुमालइयरोमकूवे ते सुमिणे ओगिण्हति ते सुमिणे ओगिण्हित्ता ईहं अणुप्पविसइ अणुप्पवि-

श्रोत्रेण निसम्म निशम्य हृदयेनावधार्य हट्ठतुट्ठ इत्यादि– प्राग्वत्, तान् स्वप्नान् अवगृह्णाति चेतसि धरति, अवगृह्य च ईहं अणुप्पविसइ ईहां सदर्थविचारणलक्षणां अनुप्रविशति अनुप्रविश्य च तेषां

कनकरत्नानां भक्तिभिः रचनाभिः चित्रे आश्चर्यकारिणि भद्रासने निषीदति, निषद्य च आसत्था आश्वस्ता मार्गजनितश्रमापगमेन आश्वासनां उपगता अत एव च वीसत्था विश्वस्ता क्षोभाभावेन सुखासनवरगता सुखेन उपविष्टा सती सिद्धार्थं क्षत्रियं पूर्वोक्तरूपाभिर्वाणीभिरेवं अवादीत्

णाणामणिकणगरयणभत्तिचित्तंसि भद्दासणंसि णिसीयइ णिसीइत्ता
आसत्था वीसत्था सुहासणवरगया सिद्धत्थं खत्तियं ताहिं इट्ठाहिं
जाव संलवमाणी संलवमाणी एवं वयासी ॥ ४९ ॥
एवं खलु अहं सामी ! अज्ज तंसि तारिसगंसि सयणिज्जंसि वण्णओ जाव
पडिबुद्धा । तंजहा । गयवसहगाहा । तं एएसिं सामी ! उरालाणं चउद्दसण्हं

शेषं स्पष्टम् ॥ ४९ ॥

तत्किमित्याह । एवं खलु स्वामिन् ! अद्य मया चतुर्दश महास्वप्नाः दृष्टाः तं एएसिं तव एतेषां

तथाविधवर्णसंयुक्तत्वात् अत एव धन्नाहिं धन्याभिर्धनप्रापिकाभिः, पुनः की० ? मंगल्लाहिं मंगलकरणे प्रवीणाभिः, पुनः की० ? सस्सिरीयाहिं सश्रीकाभिः अलंकारविराजिताभिः, पुनः की० ? हिअयगमणिज्जाहिं कोमलतया सुबोधतया च हृदयंगमाभिः । पुनः की० ? हिययपल्हायणिज्जाहिं हृदयप्रह्लादनीयाभिः हृद्गतशोकाद्युच्छेदिकाभिः, पुनः की० ? मियमहुरेत्यादि– मिताः अल्पशब्दाः बह्वर्थाश्च

धन्नाहिं मंगल्लाहिं सस्सिरीयाहिं हिययगमणिज्जाहिं हिययपल्हायणिज्जाहिं मियमहुरमंजुलाहिं गिराहिं संलवमाणी संलवमाणी पडिबोहेइ ॥ ४८ ॥

तएणं सा तिसला खत्तियाणी सिद्धत्थेणं रण्णा अब्भणुण्णाया समाणी

मधुराः श्रोत्रसुखकारिण्यः मंजुलाः सुललितवर्णमनोहराः ततः पदत्रयस्य कर्मधारये मितमधुरमंजुलाभिरिति ॥ ४८ ॥

तएणं ततोऽनंतरं जागरणानंतरं सिद्धार्थेन राज्ञाऽभ्यनुज्ञाता सा त्रिशला क्षत्रियाणी नानामणि-

संलवमाणी संलपंती २ पडिबोहेइ प्रतिबोधयति जागरयतीति संबंधः । अथ कीदृशीभिर्वाणीभिः ? इत्याह । ताहिं ताभिर्विशिष्टगुणसंयुक्ताभिः । पुनः कीदृशीभिः ? इट्ठाहिं इष्टाभिस्तस्य वल्लभाभि. पुनः की० ? कंताहिं कांताभिः सर्वदाऽपि वांछिताभिः अत एव पियाहिं प्रियाभि. अद्वेष्याभिः, पुन.

मसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव सयणिज्जे जेणेव सिद्धत्थे खत्तिए तेणेव उवागच्छइ उवागच्छित्ता सिद्धत्थं खत्तियं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं सिवाहिं

की० ? मणुण्णाहिं मनोज्ञाभिर्मनोविनोदकारिणीभिः अत एव मणामाहिं मनोमाभिर्मनसा अम्यंते पुनःपुनर्गम्यंते नतु कदापि विस्मार्यन्ते एवंविधाभिः, पुनः की०? उरालाहिं उदाराभि. सुंदरध्वनिवर्णसंयुताभिः कल्लाणाहिं कल्याणानि समृद्धयस्तत्कारिणीभिः, पुनः की० ? सिवाहिं शिवाभिरुपद्रवहराभिः

एए चउदससुविणे इत्यादिगाथा, व्याख्या– एतान् चतुर्दशस्वप्नान् सर्वाः पश्यन्ति तीर्थकरमातरः यस्यां रजन्यामुत्पद्यन्ते कुक्षौ महायशसोऽर्हन्तः ॥ ४७ ॥ ॥ ॥

तित्थरयमाया । जं रयणिं वक्कमइ, कुच्छिसि महायसा अरिहा ॥१॥"॥४७॥

तए णं सा तिसला खत्तियाणी इमे एयारूवे उराले चउद्दस महासुविणे पासित्ता णं पडिबुद्धा समाणी हट्ठतुट्ठ–जाव हियया धाराहयकयंबपुप्फगं-पिव समुस्ससिअरोमकूवा सुमिणुग्गहं करेइ सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठेइ अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ पच्चोरुहित्ता अतुरियमचवल-

तएणं इत्यादि पडिबोहेइत्ति पर्यंतं सूत्रं, तत्र सुमिणुग्गहं करेइ स्वप्नानां अवग्रहं स्मरणं करोति जेणेवेत्यादि– यत्र सिद्धार्थः क्षत्रियस्तत्रोपागत्य ताहिं ताभिः गिराहिं गीर्भिर्वाणीभिः संलवमाणी

ज्वालोज्ज्वलनकं, अत्र तृतीयैकवचनलोपः, तेन ज्वालोज्ज्वलनकेन कत्थइत्ति कचित्प्रदेशे अंबरं आकाशं पचंतं इव, अभ्रंलिहत्वेन आकाशपचनसमर्थमिवेत्यर्थः । पुनः किं० ? अतिवेगचंचलम् ॥ १४ ॥४६॥ इमे एयारिसे इमान् एतादृशान् शुभान् कल्याणहेतून् सोमे उमया कीर्त्या सहितान् पियदंसणे

कत्थइ पयंतं अइवेगचंचलं सिहिं ॥ १४ ॥ ४६ ॥
इमे एयारिसे सुभे सोमे पियदंसणे सुरूवे सुविणे दट्ठूण सयणमज्झे पडिबुद्धा अरविंदलोअणा हरिसपुलइअंगी । "एए चउदससुविणे, सव्वा पासेइ

प्रियदर्शनान् दर्शनमात्रेण प्रीतिकरान् सुरूवे सुरूपान् सुविणे स्वप्नान् दट्ठूण दृष्ट्वा सयणमज्झे शयनमध्ये निद्रामध्ये प्रतिबुद्धा जागरिता अरविंदलोचना त्रिशला हर्षपुलकितांगी प्रमोदभररोमांचितगात्री, अत्र प्रसंगेन एतेषां स्वप्नानां गर्भकाले सकलजिनराजजननीविलोकनीयत्वं दर्शयन्नाह ।

नोक्तं, सिहिं चेति पदेनैव गतार्थत्वात्, विशेष्यं तु अंते स्थितं एव पदम्,] ततः सा त्रिशला चतुर्दशे स्वप्ने शिखिनं पश्यति, किंविशिष्टं शिखिनं? विउलुज्जलेत्यादि-विपुला विस्तीर्णा तथा उज्ज्वलपिंगलेन मधुघृतेन परिषिच्यमाना उज्ज्वलेन घृतेन पिंगलेन च मधुना सिच्यमाना अत एव णिद्धूमत्ति निर्धूमा धगधगाइयत्ति धगध्धगिति कुर्वंत्यो जलंतत्ति ज्वलंत्यो दीप्यमाना या ज्वालास्ताभिः उज्ज्व-

णिद्धूमधगधगाइयजलंतजालुज्जलाभिरामं तरतमजोगजुत्तेहिं जालापयरेहिं अण्णुण्णामिव अणुप्पइण्णं पिच्छइ सा जालुज्जलणगअंबरंव

लं अत एव अभिरामं, पुनः किं०? तरतमजोगजुत्तेहिं इत्यादि- तरतमयोगयुक्तैर्ज्वालाप्रकरैरन्योन्यमनुप्रकीर्ण इव, एका ज्वाला उच्चा, अन्या ततोऽपि उच्चतरा, अपरा ततोऽपि उच्चतमा, एवं तरतमयोगयुक्तैर्ज्वालाप्रकरैः अन्योन्यमनुप्रकीर्ण इव, तस्य सर्वा अपि ज्वाला अन्योन्यं प्रविष्टा इव संतीति भावः, पुनः किं०? जालुज्जलणग इत्यादि- ज्वालानां ऊर्ध्वं ज्वलनं ज्वालोज्ज्वलनं स्वार्थिककप्रत्यये च

स्थितमपि गगनमंडलस्यांतं यावत्प्रभासयंतं लोकप्रसिद्धस्य आकाशस्यापि शिखरं स्वकांत्या शोभय तमित्यर्थ., पुनः किं० ? तुंगं उच्चं, किंप्रमाणमित्याह मेरुगिरिसन्निगासं मेरुगिरिसदृशं रयणणिकररासि रत्ननिकराणां राशिः उच्छ्रित. समूहस्तं शेपं योजितम् ॥ १३ ॥ ४५ ॥

'सिहिं चेत्यादित. सिहिं यावत्' [ननु प्रथमतोऽपि 'सिहिं' इति पद, अंतेऽपि 'सिहिं' इति पदं

गगणमंडलंतं पभासयंतं तुंगं मेरुगिरिसन्निगासं पिच्छइ सा रयणणिकर-
रासिं ॥ १३ ॥ ४५ ॥ सिहिं च सा विउलुज्जलपिंगलमहुघयपरिसिच्चमाण-

ततः कथं न पौनरुक्त्यम् ? उच्यते— प्रथमं यत् सिहिं चेति पदं तत् गयवसहेति गाथोक्तस्य सिहिं चेति पदस्य ग्रहणार्थं, अंते स्थित तु स्वरूपग्रहणार्थं, ततोऽयमर्थः गयवसहेतिगाथायां यदुक्त. सिहिं चेति चतुर्दशस्वप्नस्तत्र ईदृशं शिखिनं अग्निं पश्यतीति योजना, अत एव अत्र 'तओपुणो' इति

उपभोगो यत्र तत्सातोपभोगं ईदृशं विमानवरपुंडरीकं विमानवरेषु पुंडरीकमिव अत्युत्तमत्वात्॥१२॥४४॥

तओ पुणो ततः पुनः सा त्रिशला त्रयोदशे स्वप्ने रत्ननिकरराशिं पश्यति, अथ किंविशिष्टं रत्ननिकरराशिं ? पुलगेत्यादि–पुलकादयो रत्नविशेषाः प्रसिद्धाः, नवरं वेरत्ति वज्रं इंदनीलत्ति इंद्रनीलरत्नं सासगत्ति सस्यकं रत्नविशेषः कक्केयणत्ति कर्केतनं रत्नविशेषः लोहियक्खत्ति लोहिताख्यो रत्नविशेषः

तओ पुणो पुलग-वेरिंद-नील-सासग-कक्केयण-लोहियक्ख-मरगय-मसारगल्ल-
पवाल-फलिह-सोगंधिय-हंसगब्भ-अंजण-चंदप्पहवररयणेहिं महियलपइट्ठियं

मरगयत्ति मरकतं रत्नविशेषः मसारगल्लत्ति मसारगल्लं रत्नविशेषः पवालत्ति विद्रुमः फलिहत्ति स्फटिकरत्नं सोगंधियत्ति सौगंधिकं रत्नविशेषः हंसगब्भत्ति हंसगर्भं रत्नविशेषः अंजणत्ति अंजनप्रभं श्यामरत्नं चंदप्पहत्ति चंद्रप्रभश्चंद्रकांतरत्नं एभिः रत्नप्रकारैः महियलपइट्ठियं महीतलप्रतिष्ठितं महीतले

सयलमवि जीवलोअं सकलमपि जीवलोकं पूरयंतं पूरयत् शब्दव्याप्तं कुर्वदित्यर्थः, पुन. किं० ? कालागुरु इत्यादि—कृष्णागुरु (१) प्रवरकुंदुरुक्क (२) तुरुष्काः (३) आग्व्याख्यातास्तथा डज्झमाणधूवत्ति दह्यमानधूपो दशांगादिर्धूप. वासंगत्ति वासांगानि सुगंधद्रव्याणि एतेषां सर्वेषां मघमघतत्ति मघमघाय-मानः गंधुद्धुयत्ति उद्धुत इतस्ततः प्रसृतश्च यो गंधस्तेन अभिरामं, पुनः किं० ? णिच्चालोय नित्यं

सयलमवि जीवलोअं पूरयंतं कालागुरु-पवरकुंदुरुक्क-तुरुक्क-डज्झमाणधूव-वासंगउत्तममघमघंतगंधुद्धुयाभिरामं णिच्चालोयं सेयं सेयप्पभं सुरवराभिरामं पिच्छइ सा सातोवभोगं वरविमाणपुंडरीयं ॥ १२ ॥ ४४ ॥

आलोक उद्योतो यत्र तत्तथा, पुन. किं० ? सेअं श्वेतं उज्वलं अत एव सेअप्पभं श्वेता उज्वला प्रभा कांतिर्यस्य तत्तथा, पुन. किं० ? सुरवराभिरामं सुरवरैः प्रधानं शोभित न तु रिक्तं पिच्छइ प्रेक्षते सा त्रिशला इति प्राग् योजितम्, पुन. किं० ? सातोवभोगं सातस्य सातवेदनीयस्य कर्मण

चमरत्ति चमर्यो धेनवः, संसत्तत्ति संसक्ताः श्वापदविशेषाः, कुंजरा हस्तिनः वणलयत्ति वनलताः अशोकलताद्याः, पउमलयत्ति पद्मलताः पद्मिन्यः, एतेषां सर्वेषां या भत्तित्ति भक्तिः रचना चित्राणि इति यावत्, तैः चित्रं आश्चर्यकारि, पुनः किं० ? गंधव्वोपवज्जमाण इत्यादि– गांधर्वशब्देन गीतं उच्यते, उपवाद्यमानशब्देन वादित्राण्युच्यंते, ततो गांधर्वोपवाद्यमानानां गीतवादित्राणां संपूर्णो घोषः शब्दो

चमर-संसत्त-कुंजर-वणलय-पउमलयभत्तिचित्तं गंधव्वोपवज्जमाणसंपुण्णघोसं
णिच्चं सजलघणविउलजलहरगज्जियसद्दाणुणाइणा देवदुंदुभिमहारवेणं

यत्र तत्तथा, पुनः किं० ? णिच्चं सजल इत्यादि–नित्यं निरंतरं सजलो जलसंपूर्णः घणत्ति घनो निविडः विउलत्ति विपुलः पृथुल एवंविधो यो जलधरो मेघस्तस्य यो गज्जियसद्दत्ति गर्जितशब्दो गर्जारव इत्यर्थः तस्य अणुणाइणा अनुनादिना सदृशेन देवदुंदुभिमहारवेणं देवसंबंधिदुंदुभिमहाशब्देन

कांचनमहामणिसमूहैः सुवर्णरत्नप्रकरैः प्रवरा ये अट्ठसहस्सत्ति अष्टाधिकसहस्रसंख्याः तेअत्ति तेकाः स्तंभाः तैः दिप्पंतत्ति दीप्यमानं सत् णहप्पईवं नभ आकाशं प्रदीपयति यत्तत् तथा, पुन. किं० ? कणगपयरेत्यादि– कनकप्रतरेषु सुवर्णपत्रेषु लंबमानाभिर्मुक्ताभिः समुज्ज्वलं प्राबल्येन दीप्तिमत्, पुनः किं० ? जलंतेत्यादि– ज्वलंति दीप्यमानानि देवसंबंधीनि अर्थाल्लंबितानि दामानि पुष्पमाला यत्र

समूहपवरतेअअट्ठसहस्सदिप्पंतणहप्पईवं कणगपयरलंबमाणमुत्तासमुज्जलं
जलंतदिव्वदामं ईहामिगउसभतुरगणरमगरविहगवालगकिण्णररुरुसरभ-

तत्तथा, पुनः किं०? ईहामिगेत्यादि– ईहामृगा वृकाः, 'वरगडा जीव' इति लोके, उसभत्ति वृषभाः, तुरगत्ति तुरगा अश्वाः, णरत्ति नरा मनुष्या., मगरत्ति मकराः, विहगत्ति विहगाः पक्षिणः, वालगत्ति व्यालकाः सर्पाः, किण्णरत्ति किन्नरा देवजातिविशेषाः, रुरुत्ति रुरवो मृगभेदाः, सरभत्ति शरभा अष्टापदाः,

व्याकुली भवत् अत एव उच्छलंतत्ति उच्छलत् आवर्तपतितत्वेन अन्यत्र निर्गमावकाशाभावात् ऊर्द्ध्वं उच्छलत् पच्चोणिअत्तत्ति प्रत्यवनिवृत्तं ऊर्द्ध्वं उच्छल्य तत्रैव पुनः पतितं अत एव भममाणत्ति तत्र आवर्तें एव भ्रमत् तत एव च लोलं स्वभावतश्चंचलं एवंविधं सलिलं पानीयं यत्र स तथा तं प्रेक्षते क्षीरोदसागरं शरद्रजनिकरसोमवदना ॥ ११ ॥ ४३ ॥

गुप्पमाणुच्छलंतपच्चोणिअत्तभममाणलोलसलिलं पिच्छइ खीरोयसायरं सरयरयणिकरसोमवयणा ॥ ११ ॥ ४३ ॥

तओ पुणो तरुणसूरमंडलसमप्पभं दिप्पमाणसोहं उत्तमकंचणमहामणि-

तओपुणो ततः पुनः सा त्रिशला द्वादशे स्वप्ने विमानवरपुंडरीकं प्रेक्षते, अथ किंविशिष्टं विमानवरपुंडरीकं ? तरुणेत्यादि– तरुणो नूतनो यः सूर्यस्तस्य मंडलं बिंबं तेन समा प्रभा कांतिर्यस्य तत् तथा, पुनः किं० ? दिप्पमाणसोहं दीप्यमाना शोभा यस्य तत्तथा, पुनः किं० ? उत्तमकंचणेत्यादि– उत्तमैः

यो विच्छित्तिमंतः कल्लोलाः 'ततस्तरंगांतभंगांतऊर्म्यंतपदानां द्वंद्वः' तत एतैः सर्वैः पूर्वोक्तैः कल्लोलप्रकारैः सह यः संबंधो मिलनं तेन धावमाणत्ति धावमानस्त्वरितं तीराभिमुखं प्रसर्पन् ओवणियत्तत्ति अयनिवर्तमानस्तटारपश्चाद्वलमानः सन् भासुरतरोऽत्यंतं दीप्तोऽत एव अभिरामो मनोहरो यः स तथा तं, पुनः किं०? महामगरेत्यादि— महांतो मकरा मत्स्याश्च प्रसिद्धाः, तथा तिमि (१) तिमिंगिल-

धावमाणोवणियत्तभासुरतराभिरामं महामगरमच्छतिमितिमिंगिलणिरुद्ध-
तिलितिलियाभिघायकप्पुरफेणपसरं महाणईतुरियवेगमागयभमगंगावत्त-

(२) निरुद्ध (३) तिलितिलिका (४) श्च जलचरजीवविशेषाः, अथैतेषां अभिघायत्ति अभिघातेन पुच्छाच्छोटनेन उत्पन्नः कप्पूरत्ति कर्पूरवदुज्ज्वलः फेणपसरत्ति फेनप्रसरो यस्य स तथा तं, पुनः किं०? महाणई इत्यादि— महत्यो नद्यो महानद्यो गंगाद्यास्तासां ये त्वरितवेगाः शीघ्रं आगमनानि तै. आगयभमत्ति आगतभ्रम उत्पन्नभ्रमणो यो गंगावत्तत्ति गंगावर्तनामा आवर्तविशेषस्तत्र गुप्पमाणत्ति

प्रकर्षेण वर्द्धमानो जलसंचयो जलसमूहो यस्य स तथा तं, चतसृष्वपि दिक्षु तत्र अगाध एव जल प्रवाहोऽस्तीति भावः, पुनः किं०? चवलचंचलेत्यादि– चपलचंचलाः चपलेभ्योऽपि चपला अतिचपला इति यावत्, तथा उच्चायप्पमाणत्ति उच्चं आत्मप्रमाणं येषां एवंविधा ये कल्लोलास्तैः लोलंतत्ति लोलत् पुनः पुनरेकीभूय पृथक् भवत् एवंविधं तोयं पानीयं यस्य स तथा तं, पुनः किं०? पडुपवणेत्यादि–पटु-

संचयं चवलचंचलुच्चायप्पमाणकल्लोललोलंततोयं पडुपवणाहयचलिअचव-
लपागडतरंगरंगंतभंगखोखुब्भमाणसोभंतणिम्मलउक्कडउम्मीसहसंबंध-

ना अमंदेन पवनेन आहयत्ति आहता आस्फोटिताः संतः अत एव चलिअत्ति चलिता धावितुं प्रवृत्ताः तत एव चवलत्ति चपलाः पागडत्ति प्रकटाः तरंगत्ति एवंविधास्तरंगाः कल्लोलास्तथा रंगंतत्ति रंगंतः इतस्ततो नृत्यंत एवंविधा भंगत्ति कल्लोलविशेषाः तथा खोखुब्भमाणत्ति अतिक्षुभ्यंतः भयभ्रांता इव भ्रमंतः सोभंतत्ति शोभमानाः णिम्मलत्ति निर्मलाः स्वच्छाः उक्कडत्ति उत्कटा उद्धताः उम्मित्ति ऊर्मि-

तु प्राग् योजितं, पुनः किं० ? हिअयनयणकंतं हृदयनयनयोः कांतं वल्लभं पउमसरं नाम सरं पद्मसर इति नाम्ना सर. सरोवरं, किंवि० ? सररुहाभिरामं सरस्सु अर्हं पूज्यं अत एव 'अभिरामं' रमणीयं ॥ १० ॥ ४२ ॥

तओपुणो ततः पुनरेकादशे स्वप्ने शरद्रजनीकरसौम्यवदना सा त्रिशला क्षीरोदसागरं पश्यति,

## तओ पुणो चंदकिरणरासिसरिससिरिवच्छसोहं चउगमणपवड्ढमाणजल-

अथ किंविशिष्टं क्षीरोदसागरं ? चंदकिरणरासित्ति चंद्रस्य किरणराशिः किरणसमूहस्तेन सरिससिरित्ति सदृशी श्रीः शोभा यस्य एवंविधा वच्छसोहं वक्षःशोभा यस्य स तथा तं, 'वक्षःशब्देन हि हृदयं उच्यते तच्च प्राणिनो भवति न तु समुद्रस्य ततो हृदयशब्देनाऽत्र मध्यभागः प्रोच्यते ततोऽत्युज्ज्वलो मध्यभागो यस्येति ज्ञेयम्, पुनः किं० ? चउगमणत्ति चतुर्षु गमनेषु दिग्मार्गेषु पवड्ढमाणत्ति

अवलिह्यमानानि आस्वाद्यमानानि कमलानि यत्र तत्तथा, पुनः किं० ? कायंबगेत्यादि– कादंबकाः कलहंसाः, बलाहका बलाकाः, चक्राश्चक्रवाकाः, 'कलहंसत्ति' कला मधुरशब्दा ये हंसाः कलहंसाः राजहंसा इत्यर्थः, सारसा दीर्घजानुका जीवविशेषाः, इत्यादयो ये गव्विअसउणगणत्ति गर्विताः तादृक्स्थानप्राप्त्या अभिमानिनो ये शकुनिगणाः पक्षिसमूहास्तेषां मिथुनैर्द्वंद्वैः सेव्यमानं सलिलं यस्य

कायंबगबलाहयचक्ककलहंससारसगव्वियसउणगणमिहुणसेविज्जमाणसलिलं
पउमिणिपत्तोवलग्गजलबिंदुणिचयचित्तं पिच्छइ सा हिअयनयणकंतं
पउमसरं नाम सरं सररुहाभिरामं ॥ १० ॥ ४२ ॥

तत्तथा, पुनः किं० ? पउमिणिपत्तेत्यादि– पद्मिन्यः कमलिन्यस्तासां 'पत्तत्ति' पत्राणि तत्र 'उवलग्गत्ति' उपलग्ना ये जलबिंदुनिचयास्तैश्चित्रं मंडितमिव, इंद्रनीलरत्नमयानीव पद्मिनीपत्राणि मुक्ताफलानुकारिभिर्जलबिंदुभिरतीव शोभंते, तैश्च पत्रैस्तत् सरः कृतचित्रं इव भातीति भावः, पिच्छइ सा इति

कुवलयानि चंद्रविकाशीनि कमलानि उप्पलत्ति उत्पलानि रक्तकमलानि तामरसत्ति तामरसानि महापद्मानि पुंडरीअत्ति पुंडरीकानि उज्ज्वलकमलानि एतेषां नानाजातीयकमलानां यः उरुत्ति विस्तीर्णः सप्पमाणत्ति सर्पन् प्रसरन् एवंविधो यः सिरिसमुदएणं श्रीसमुदयः शोभासमूहस्तेन कमलानां शोभाप्रकरेण हि शोभमानत्वं एव स्यान्नतु सूर्यबिंबादिवद्देदीप्यमानत्वं अत उत्प्रेक्ष्यते एतेषां

वलयउप्पलतामरसपुंडरीओरुसप्पमाणसिरिसमुदएणं रमणिज्जरूवसोहं
पमुइअंतभमरगणमत्तमहुअरिगणुक्करोलिज्जमाणकमलं ( २५० )

विविधकमलानां शोभाप्राग्भारेण ज्वलदिव देदीप्यमानमिवेति, पुनः किं० ? रमणिज्जरूवसोहं रमणीया मनोरमा रूपशोभा यस्य तत्तथा, पुनः किं० ? पमुइअंतत्ति प्रमुदितं अंतश्चित्तं येषां ते प्रमुदितांतरः एवंविधा ये भमरगणत्ति भ्रमरगणाः मत्तमधुकरीगणाश्च भ्रमरजातिविशेषगणास्तेषां उत्कराः समूहाः, भ्रमरमधुकरीणां बहूनि वृंदानीत्यर्थः, ' समूहानामपि समूहोक्तिरतिबहुत्वज्ञप्त्यै ' तैः उलिज्जमाणत्ति

तओ पुणो ततः पुनः सा त्रिशला दशमे स्वप्ने पद्मसरः पश्यति, अथ किंविशिष्टं पद्मसरः? रविकिरणतरुणत्ति प्राकृतत्वाद्विशेषणस्य परनिपातात् तरुणो नूतनो यो रविस्तस्य ये किरणास्तैः बोहिअत्ति बोधितानि यानि सहस्सपत्तत्ति सहस्रपत्राणि महापद्मानि तैः सुरभितरत्ति अत्यंतं सुगंधि पिंजरत्ति पीतं रक्तं च जलं यस्य तत्तथा, पुनः किं०? जलचरत्ति जलचरा जलजीवास्तेषां पहकरत्ति

तओ पुणो रविकिरणतरुणबोहियसहस्सपत्तसुरभितरपिंजरजलं जलचर-पहकरपरिहत्थगमच्छपरिभुज्जमाणजलसंचयं महंतं जलंतमिव कमलकु-

समूहस्तेन परिहत्थगत्ति परिपूर्णं सर्वतो व्याप्तं इत्यर्थः, तथा मच्छपरिभुज्जमाणजलसंचयं मत्स्यैः परिभुज्यमानो व्याप्रियमाणो जलसंचयो यस्य तत्तथा ततः कर्मधारयः, पुनः किं०? महंतं महत्, पुनः किं०? जलंतमिव ज्वलदिव देदीप्यमानं इव कमलत्ति कमलानि सूर्यविकाशीनि अंबुजानि कुवलयत्ति

नयनयोर्हि आनंद एव भूषणं, यथा पद्मस्य विकाशः, पुनः किं० ? पभासमाणं प्रभासमानं दीप्यमानं, प्रभया वा असमानं निरुपम्, पुनः किं० ? सवओ चेव सर्वतः सर्वदिशं निश्चयेन दीवयंतं दीपयंतं, पुनः किं० ? सोमलच्छीनिभेलणं सौम्या प्रशस्ता या लक्ष्मीस्तस्याः 'निभेलणंति' गृह, अयं देश्यः शब्दः, पुनः किं० ? सवपावपरिवज्जिअं सर्वैः पापैः अमंगलैः परिवर्जितं रहितं अत एव शुभं

पभासमाणं सवओचेव दीवयंतं सोमलच्छीनिभेलणं सवपावपरिव-
ज्जिअं सुभं भासुरं सिरिवरं सव्वोउअसुरभिकुसुमआसत्तमल्लदामं
पिच्छइ सा रययपुण्णकलसं ॥ ९ ॥ ४१ ॥

भासुरं दीप्यमानं सिरिवरं श्रिया शोभया प्रधानं, पुन. किं० ? सवोउअसुरभिकुसुमत्ति सर्वर्त्तुजानां सर्वऋतुजातानां सुरभिकुसुमानां सुगंधिपुष्पाणां संबंधीनि आसत्तत्ति आसक्तानि कंठे स्थापितानि मल्लदामत्ति माल्यदामानि यस्मिन् कलशे स तथा तं, अथैतनानि पदानि योजितानि ॥ ९ ॥ ४१ ॥

पूर्णं अत एव उत्तमं शुभसूचकं, पुनः किं० ? दिप्पमाणसोहं दीप्यमाना शोभा यस्य स तथा तं; पुनः किं० ? कमलकलावपरिरायमाणं कमलकलापेन कमलसमूहेन परिराजमानं सर्वतः शोभमानं; पुनः किं० ? पडिपुण्णत्ति प्रतिपूर्णा नतु न्यूना एवंविधा ये सव्वत्ति सर्वे मंगलभेअत्ति मंगलभेदाः मंगलप्रकारास्तेषां समागमं समागमः संकेतस्थानमिव, यथा संकेतस्थाने संकेतकारिणो जना अव-

दिप्पमाणसोहं कमलकलावपरिरायमाणं पडिपुण्णसव्वमंगलभेअ-
समागमं पवररयणपरिरायंतकमलट्ठियं नयणभूसणकरं

श्यं प्राप्यंते तथा तस्मिन्कलशे दृष्टे अवश्यं सर्वे मंगलभेदाः प्राप्यंते इति भावः, पुनः किंवि० ? पवररयणत्ति प्रवररत्नैः परिरायंतत्ति परिराजमानं यत्कमलं तत्र स्थितं रत्नमयविकासितकमलोपरि स कलशो मुक्तोऽस्तीति भावः, पुनः किं० ? नयणभूसणकरं नयनानां भूषणकरं आनंदकरं इत्यर्थः,

शिवः सौम्यः सुखकारी अत एव मउअत्ति मृदुको मंदो मंद इति यावत् एवंविधो यो मारुअत्ति मारुतो वायुः तस्य लयत्ति लयः आश्लेषो मिलनमिति यावत् तेन आहयत्ति आहत आन्दोलितो यः तत एव कंपमाणं चलनस्वभावो यः स तथा तं, पुनः किं० ? अइप्पमाणं अतिप्रमाणं महांतं इत्यर्थः पुनः किंवि० ? जणापिच्छणिज्जरूवं जनानां प्रेक्षणीयं द्रष्टुं योग्यं रूपं स्वरूप यस्य स तथा तम् ॥८॥४०॥

मउअमारुअलयाहयकंपमाणं अइप्पमाणं जणपिच्छणिज्जरूवं ॥ ८ ॥४०॥

तओ पुणो जच्चकंचणुज्जलंतरूवं णिम्मलजलपुण्णमुत्तमं

तओ पुणो ततः पुनः सा त्रिशला क्षत्रियाणी नवमे स्वप्ने रययपुण्णकलसं रजतपूर्णकलशं रूप्यमयं पूर्णं कुंभं पश्यति, अथ किंविशिष्टं रजतपूर्णकलशं ? जच्चकंचणुज्जलंतरूवं जात्यकांचनवत् उत्तमसुवर्णवत् उज्वलं उत्प्राबल्येन ज्वलत् दीप्यमानं रूपं यस्य स तथा त, यथा किल जात्यकांचनस्य रूपं अतिनिर्मलं भवति तथा तस्य कलशस्यापि रूपं इति तात्पर्यं, पुनः किं० ? णिम्मलजलपुण्णं निर्मलेन जलेन

अथ कीदृशेन सिंहेन? फालियेत्यादि—स्फटिकं रत्नविशेषः, शंखः प्रसिद्धः, अंकोऽपि रत्नविशेषः, कुंदत्ति कुंदस्य धवलपुष्पविशेषस्य माल्यं दगरयत्ति दकरजांसि जलकणाः रययकलसत्ति रजतकलशो रूप्यघटः पंडुरेण उक्तसर्ववस्तुवत् उज्ज्वलवर्णेन मत्थयत्थेण मस्तकस्थितेन चित्रतया ध्वजशिरसि आलिखितेनेत्यर्थः, पुनः कीदृशेन सिंहेन? रायमाणेण राजमानेन सुंदरत्वात् शोभमानेनेत्यर्थः रायमाणं

रययकलसपंडुरेण मत्थयत्थेण सीहेण रायमाणेण राय-
माणं भित्तुं गगणतलमंडलं चेव ववसिएणं पिच्छइ सिव-

राजमानं इति तु योजितं, पुनः कीदृशेन सिंहेन? भित्तुं भेत्तुं द्विधा कर्त्तुं, किम्? गगणतलमंडलं आकाशतलमंडलं चेवत्ति उत्प्रेक्षायां ववसिएणं सोद्यमेनेव, अयमर्थः—ध्वजस्तावद्वायुतरंगेण कंपते, कंपमाने च ध्वजे सिंहोऽपि गगनं प्रति उच्छलति, तथा च उत्प्रेक्ष्यते, अयं सिंहः किं गगनतलं भेत्तुं उद्यमं करोतीति!! पिच्छइ प्रेक्षते इति प्राग्वत्, अथ पुनः किंविशिष्टं ध्वजं? सिवत्ति

तओ पुणो ततः पुन. सा त्रिशला अष्टमे स्वप्ने धयं ध्वजं पश्यति, किंविशिष्टं ध्वजं ? जच्चकणगत्ति जात्यं उत्तमजातीयं यत् कनकं सुवर्णं तस्य या लट्ठि यष्टि. तत्र पइट्ठिअं प्रतिष्ठितं सुवर्णमयदंडशिखरे स्थितं इत्यर्थ., पुन. किं० ? समूहत्ति समूहीभूतानि बहूनि इत्यर्थः नीलरत्तपीअसुक्किलत्ति नीलरक्तपीतशुक्लानि कृष्णनीलयोरैक्यात्पंचवर्णमनोहराणीत्यर्थः सुकुमालत्ति सुकुमालानि उल्लसिअत्ति

**तओ पुणो जच्चकणगलट्ठिपइट्ठिअं समूहनीलरत्तपीअसुक्किलसुकुमालुल्लसिअमोरपिच्छकयमुद्धयं धयं अहिअसस्सिरीअं फालिअसंखंककुंददगरय-**

उल्लसंति वातेन लहलहायमानानि इत्यर्थः, एवंविधानि यानि मोरपिच्छत्ति मयूरपिच्छानि तैः कयमुद्धयं कृता मूर्द्धजा इव केशा इव यस्य स तथा तं, अयमर्थ. यथा मनुष्यशिरसि वेणिर्भवति तथा तस्य ध्वजस्य वेणिस्थाने मयूरपिच्छसमूहः स्थापितोऽस्तीति, पुनः किं० ? अहिअसस्सिरीअं अधिकसश्रीकं अतिशोभितं इत्यर्थः, पुनः किं० ? एवंविधेन सिंहेन राजमानं इति विशेषणयोजना,

दीनां शोभा येन स तथा तं, येन स्वकिरणैः सर्वेषां अपि प्रभा विलुप्तास्तीति भावः, अत्र सहस्रकिरणाभिधानं तु लोकप्रसिद्धत्वात्, अन्यथा कालविशेषे अधिका अपि तस्य किरणा भवंति, तथा चोक्तं लौकिकशास्त्रेषु "ऋतुभेदात्पुनस्तस्या–तिरिच्यंतेऽपि रश्मयः। शतानि द्वादश (१२००) मधौ, त्रयोदश तु (१३००) माधवे ॥ १ ॥ चतुर्दश (१४००) पुनर्ज्येष्ठे, नभोनभस्ययोस्तथा (१४००) (१४००)। पंचदशैव (१५००) त्वाषाढे, षोडशैव (१६००) तथाश्विने ॥ २ ॥ कार्त्तिके त्वेकादश च (११००) शतान्येवं (११००) तपस्यपि। मार्गे च दश सार्द्धानि (१०५०) शतान्येवं च फाल्गुने। (१०५०) ॥ ३ ॥ पौष एव परं मासि (१०००) सहस्रं किरणा रवेः" ॥ ७ ॥ ३९ ॥

| सूर्यकिरण-यंत्रकम् | चैत्र. | वैशाख. | ज्येष्ठ. | आषाढ. | श्रावण. | भाद्रपद. | आश्विन. | कार्तिक. | मार्गशीर्ष. | पोष. | माघ. | फाल्गुन. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १२०० | १३०० | १४०० | १५०० | १४०० | १४०० | १६०० | ११०० | १०५० | १००० | ११०० | १०५० |

अन्यस्मिन्काले दुर्निरीक्ष्यरूपं सन्मुखं विलोकितुं न शक्यते इत्यर्थः, पुनः किं० ? रत्तिमुद्धंतत्ति रात्रौ उद्धताः स्वेच्छाचारिणः मकारोऽत्र प्राकृतत्वात् एवंविधा ये दुप्पयारत्ति दुष्प्रचाराश्चौरादयोऽन्यायकारिणस्तान् पमद्दणं प्रमर्दयति यस्तं अन्यायकारिप्रचारनिवारकं इत्यर्थः, पुनः किं० ? सीअवेगमहणं शीतवेगमथनं आतपेन शीतवेगनिवारणात् पिच्छइ प्रेक्षते इति क्रियापदं प्राग्योजितं, पुनः किंवि-

रत्तिमुद्धंतदुप्पयारप्पमद्दणं सीअवेगमहणं पिच्छइ मेरुगिरिसययपरिअट्टयं
विसालं सूरं रस्सीसहस्सपयलिअदित्तसोहं ॥ ७ ॥ ३९ ॥

शिष्टं ? मेरुगिरीत्यादि– मेरुगिरेः सततपरिवर्तकं मेरुं आश्रित्य प्रदक्षिणया भ्रमंतं इति यावत्, पुनः किंविशिष्टं ? विसालं विशालं विस्तीर्णं मंडलं सूरं सूर्यं इत्यपि योजितं, पुनः किंविशिष्टं ? रस्सीसहस्सपयलिअत्ति रश्मिसहस्रेण किरणदशशत्या कृत्वा प्रदलिता स्फोटिता दित्तसोहं दीप्तानां चंद्रतारा-

रणं शोभाकारकं विकासकं इति यावत्, विकसितानि हि तानि अलंकृतानीव विभांति, पुनः किं० ? अंकणं जोइसस्स ज्योतिषस्य ज्योतिश्चक्रस्य अंकनं मेषादिराशिसंक्रमणादिना लक्षणज्ञापकं, पुनः किं० ? अंबरतलपईवं अंबरतले प्रदीपं आकाशतलप्रकाशकं, पुनः किं० ? हिमपडलत्ति हिमपटलस्य हिमसमूहस्य गलग्गहं गलग्रहं गलहस्तदायकं हिमस्फोटकमित्यर्थः, पुनः किं० ?

अंकणं जोइसस्स अंबरतलपईवं हिमपडलगलग्गहं गहगणोरुणा-
यगं रत्तिविणासं उदयत्थमणेसु मुहुत्तं सुहदंसणं दुण्णिरिक्खरूवं

गहगणोरुणायगं ग्रहगणस्य ग्रहसमूहस्य उरुर्महान् नायको यः स तथा तं, पुनः किं० ? रत्तिविणासं रात्रिविनाशं रात्रिविनाशकारणं इत्यर्थः, पुनः किं० ? उदयत्थमणेसु उदयास्तयोः उदयवेलायां अस्तवेलायां च मुहुत्तं सुहदंसणं मुहूर्तं यावत् सुखदर्शनं सुखेन अवलोकनीयं इत्यर्थः दुण्णिरिक्खरूवं

तओपुणो ततः पुनः चंद्रदर्शनानन्तरं सप्तमे स्वप्ने सूर्यं पश्यति, अथ किंविशिष्टं सूर्यं ? तमपडलपरिप्फुडं तमःपटलं अंधकारसमूहः तस्य परिस्फोटकं नाशकं इत्यर्थ. चेवत्ति निश्चये, पुन. किं० ? तेअसा पज्जलंतरूवं तेजसैव प्रज्वलत् जाज्वल्यमानं रूपं यस्य स तथा तं, स्वभावतस्तु सूर्यविंबवर्तिनो बादरपृथ्वीकायिकाः शीतला एव किंत्वातपनामकर्मोदयात्तेजसैव एते जनं व्याकुलीकुर्वंतीति

तओ पुणो तमपडलपरिप्फुडं चेव तेअसा पज्जलंतरूवं रत्तासोगपगासकिंसुअसुअमुहगुंजद्धरागसरिसं कमलवणालंकरणं

ज्ञेयं, पुनः किं० ? रत्तासोगत्ति रक्ताऽशोकोऽशोकवृक्षविशेष. पगासकिंसुअत्ति प्रकाशकिंशुकः पुष्पितपलाशः सुअमुहगुंजद्धत्ति शुकमुखं गुंजार्द्धं च प्रसिद्धं रागत्ति एतेषां वस्तूनां यो रागो रक्तत्वं तेन सरिसं सदृशं पूर्वोक्तवस्तुवत् रक्तवर्णं इत्यर्थः, पुनः किं० ? कमलवणालंकरणं कमलवनानां अलंक-

तं, पुनः किंविशिष्टं ? गगणमंडलत्ति गगनमंडलस्य आकाशतलस्य विसालत्ति विशालं विस्तीर्णं सोमत्ति सौम्यं सुंदराकारं चंकम्ममाणत्ति चंक्रम्यमाणं चलनस्वभावं एवंविधं तिलयं तिलकं तिलकमिव शोभाकरत्वात्, पुनः किंविशिष्टं ? रोहिणीमणत्ति रोहिण्याश्चंद्रवल्लभाया मनश्चित्तं तस्य हिअयत्ति हितदो हितकारी एकपाक्षिकप्रेमनिरासार्थं हितद इति विशेषणं ईदृशः वल्लहं वल्लभो

विसालसोमचंकम्ममाणतिलयं रोहिणिमणहिअयवल्लहं
देवी पुण्णचंदं समुल्लसंतं ॥ ६ ॥ ३८ ॥

यस्तं, इदं कविसमयापेक्षया, अन्यथा रोहिणी किल नक्षत्रं, चंद्रनक्षत्रयोश्च स्वामिसेवकभाव एव सिद्धांतप्रसिद्धो नतु स्त्रीभर्तृभावः, देवी देवी त्रिशला पुण्णचंदं पूर्णचंद्रं समुल्लसंतं ज्योत्स्नया शोभमानम् ॥ ६ ॥ ३८ ॥

मदनस्य कामस्य शरापूरमिव तूणीरमिव, अयमर्थः—यथा धनुर्धरस्तूणीरं प्राप्य मुदितो निःशंकं मृगादिकं शरैर्विध्यति एवं मदनोऽपि चंद्रोदयं प्राप्य निःशंको जनान् बाणैर्व्याकुलीकरोति, पुनः किंविशिष्टं ? समुद्ददगपूरगं समुद्रोदकपूरकं जलधिवेलावर्धकं इत्यर्थः, पुनः किं० ? दुम्मणं दुर्मनस्कं व्यग्रं ईदृशं दइयवज्जिअं जणं दयितेन प्राणवल्लभेन रहितं जनं विरहिणीलोकं इत्यर्थः, पाएहिं

समुद्ददगपूरगं दुम्मणं जणं दइअवज्जिअं पाएहिं सो-
सयंतं पुणो सोमचारुरूवं पिच्छइ सा गगणमंडल-

सोसयंतं पादैः किरणैः शोषयंतं वियोगिदुःखदं इत्यर्थः, यतः—"रजनिनाथ ! निशाचर ! दुर्मते !, विरहिणां रुधिरं पिबसि ध्रुवम्। उदयतोऽरुणता कथमन्यथा, तव कथं च तके तनुताम्रतः ॥१॥" पुणोत्ति पुनःशब्दो धुरि योजितः, पुनः किंविशिष्टं ? सोमचारुरूवं यः सौम्यः सन् चारुरूपो मनोहररूपः

यौ पक्षौ शुक्लकृष्णपक्षौ तयोः अंतत्ति अंतर्मध्ये पूर्णिमायां इत्यर्थः, तत्र रायत्ति राजंत्यः शोभमानाः लेखाः कला यस्य स तथा तं, पुनः किंविशिष्टं? कुमुअवणविबोहगं कुमुदवनानां चंद्रविकाशिकमलवनानां विबोधकं विकाशकं, यतः—" दिनकरतापव्याप-प्रपन्नमूर्च्छानि कुमुदगहनानि। उत्तस्थुरमृतदीधिति-कांतिसुधासेकतस्त्वरितम्। १।" पुनः किंविशिष्टं? निसासोहगं निशाशोभकं, पुनः किंवि-

कुमुअवणविबोहगं निसासोहगं सुपरिमट्ठदप्पणतलोवमं
हंसपडुवण्णं जोइसमुहमंडगं तमरिपुं मयणसरापूरं

शिष्टं? सुपरिमट्ठेत्यादि—सुपरिमृष्टं सम्यक्प्रकारेण रक्षादिना उज्वलितं यद् दर्पणतलं तेन उपमा यस्य स तथा तं, पुनः किंविशिष्टं? हंसपडुवण्णं हंसवत् पटुवर्णं उज्वलवर्णं इत्यर्थः, पुनः किंविशिष्टं? जोइसमुहमंडगं ज्योतिषां मुखमंडकं, पुनः किं०? तमरिपुं अंधकारवैरिणं, पुनः किं०? मयणसरापूरं

ततः पुनः सा त्रिशला देवी षष्ठे स्वप्ने शशिनं पश्यति, कीदृशं ? गोखीरत्ति गोक्षीरं धेनुदुग्धं, फेनं प्रसिद्धं, दकरजांसि जलकणाः, रययकलसत्ति रजतकलशो रूप्यघटस्तद्वत् पांडुरं उज्ज्वलं, पुनः किं० ? सुभ शुभं सौम्यं, पुनः किं० ? हिअयनयणकंतं अत्र लोकानां इति शेषः, ततश्च लोकानां हृदयनयनयोः कांतं वल्लभं, पुनः किं० ? पडिपुण्णं प्रतिपूर्णं पूर्णिमासत्कं, पुनः किं० ? तिमिरनि-

ससिं च गोखीरफेणदगरयरययकलसपंडुरं सुभं हिअयनयणकंतं
पडिपुण्णं तिमिरनिकरघणगुहिरवितिमिरकरं पमाणपक्खंतरायलेहं

करेत्यादि–तिमिराणां अंधकाराणां निकरेण समूहेन घणत्ति घना निबिडा गंभीरा ये वनगह्वराद्य-स्तेषां वितिमिरकरं अंधकाराभावकरं वनगह्वरस्थितांधकारनाशकं इत्यर्थः, यदुक्तं–" विरम तिमिर ! साहसादमुष्मा–द्यदि रविरस्तमितः स्वतस्ततः किम् ?। कलयसि न पुरो महोमहोर्मि-स्फुटतरकैरवितांत-रिक्षमिंदुं ॥ १ ॥ " पुनः किंविशिष्टं ? पमाणपक्खंतरायलेहं प्रमाणपक्षौ वर्षमासादिप्रमाणकारिणौ

वर्त्तते स्तोकाश्च अन्येऽपि वर्णा वर्त्तते इत्यर्थः सूचितः, पुनः किं० ? छप्पयेत्यादि-अत्रापि विशेषणस्य परनिपाते गुमगुमायंतत्ति गुमगुमायमानो मधुरं शब्दं कुर्वन् निलिंतत्ति अन्यस्थानात् आगत्य तत्र दामनि लयं प्राप्नुवन् गुंजंतत्ति अव्यक्तं शब्दविशेषं कुर्वन् एवंविधो यः छप्पयमहुअरिभमरगणांत्ति षट्पद (१) मधुकरी (२) भ्रमराणां (३) भ्रमरजातिविशेषाणां यो गणः समूहः स देशभागेषु शिखाग्र-

तनिलिंतगुंजंतदेसभागं दामं पिच्छइ नभंगणतलाओ ओवयंतं ॥ ५ ॥ ३७॥

भागपार्श्वद्वयाधोभागादिकेषु यत्र तत्तथा, कोऽर्थः ? तद्दामसौरभ्यातिशयात्सर्वभागेषु भ्रमरैः सेवितमस्तीति भावः, अत्र षट्पदमधुकरीभ्रमराणां च वर्णादिभिर्भेदो ज्ञेयः, दामं पुष्पदाम इदं विशेष्यम् पिच्छइ प्रेक्षते इति क्रियापदम्, पुनः किं० ? नभंगणतलाओ नभोंगणतलात् ओवयंतं अवपतत् उत्तरत् इति तु प्राग् योजितम् ॥ ५ ॥ ३७ ॥

हितः अद्वितीय इति यावत् मनोहरश्च चित्ताल्हादक एवंविधेन गंधेन दसदिसाओवि दशापि दिशाः वासयंतं वासयत् सुरभीकुर्वत्, पुनः किं० ? सव्वोउअसुरभिकुसुममल्लधवलत्ति सर्वर्त्तुकं यत्सुरभि सुगंधपुष्पमाल्यं तेन धवलं, अयमर्थः षण्णामपि ऋतूनां संबंधिन्यः पुष्पमालास्तत्र दामनि वर्त्तंते

लिअबउलतिलयवासंतिअपउमुप्पलपाडलकुंदाइमुत्तसहकारसुरभिगंधि
अणुवममणोहरेण गंधेण दसदिसाओवि वासयंतं सव्वोउअसुरभिकुसुमम-
ल्लधवलविलसंतकंतबहुवण्णभत्तिचित्तं छप्पयमहुअरिभमरगणगुमगुमायं-

इति, तथा विलसंतत्ति विलसंतो दीप्यमाना अत एव कंतत्ति कांता मनोहरा ये बहुवण्णत्ति बहवो वर्णा रक्तपीतादयस्तेषां भत्तत्ति रचना तया चित्तं चित्रं आश्चर्यकारि, अथवा चित्रयुक्तं इव, ततश्च विशेषणद्वयस्य कर्मधारयः कर्त्तव्यः, अनेन च विशेषणेन तत्र पुष्पदामनि भूयान् धवल एव वर्णो

## ॥ अथ तृतीयः क्षणः ॥



ततः पुनर्नभस्तलादवपतत् दाम पुष्पमाल्यं त्रिशला पंचमे स्वप्ने पश्यति इति योजना, अथ किंविशिष्टं पुष्पदाम ? सरसत्ति सरसानि सवयस्कानि कुसुमत्ति कुसुमानि पुष्पाणि येषु एवंविधानि यानि मंदारदामत्ति मंदारदामानि कल्पवृक्षमाल्यानि तैः रमणिज्जभूअं रमंणीयभूतं अतिमनोहरमित्यर्थः,

**तओ पुणो सरसकुसुममंदारदामरमणिज्जभूअं चंपगासोगपुन्नागनागपिअंगुसिरिसमुग्गरमल्लिआजाईजूहिअंकोल्लकोज्जकोरिंटपत्तदमणयनवमा-**

पुनः किंवि० ? चंपगेत्यादि चंपकादयो वृक्षविशेषा लोकप्रसिद्धाः, अथ एतेषां चंपकाशोकादीनां सहकारांतानां कुसुमानां सुरभिः सुगंधो यत्र तत्तथा, पुनः किं० ? अणुवमेत्यादि, अनुपमो य उपमानर-

सूरिं श्रीविजयानन्द, विजयानन्दकारकम् । "आत्माराम" इति ख्यात, वन्दे सद्गुणकल्पये ॥ १ ॥

## ॥ इति द्वितीयः क्षणः समाप्तः ॥

लक्ष्मणविजयस्तेष, शिष्यशिष्यस्य शिष्यक । नित्य स्मरति य भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां
कल्पसुबोधिकायां द्वितीयः क्षणः समाप्तः ॥ २ ॥

मध्ये रिक्त॰ सण्हत्ति सूक्ष्मो नतु शूकररोमवत् स्थूलः लंबंतत्ति लंबमानः केसहत्थत्ति केशहस्तो वेणिर्यस्या॰ सा तथा ताम् । पुनः किं० ? पउमद्दहकमलवासिणिं पद्मद्रहस्य यत् कमलं पूर्वोक्तस्वरूपं तत्र निवसन्तीं सिरिं श्रियं श्रीदेवतां इदं विशेष्यं, पुनः किं० ? भगवइं भगवतीं ऐश्वर्यादियुतां

एणं सुविसदकसिणघणसण्हलंबंतकेसहत्थं पउमद्दहकमलवासि-
णिं सिरिं भगवइं पिच्छइ हिमवंतसेलसिहरे दिसागइंदोरुपी-
वरकराभिसिच्चमाणिं ॥ ४ ॥ ३६ ॥

पिच्छइ प्रेक्षते इदं क्रियापद, पुन॰ किं० ? हिमवंतसेलसिहरे हिमवन्नामा पर्वतस्तस्य शिखरे दिसागइंदोरुपीवर दिग्गजेंद्राः ऐरावणादयः तैः उरुपीवरैः दीर्घैः पुष्टैश्च एवंविधैः कराभिसिच्चमाणिं करैः शुंडाभिः कृत्वा अभिषिच्यमानां स्नाप्यमानामिति ॥ ४ ॥ ३६ ॥

कमलवत् अमले निर्मले विशाले विस्तीर्णे रमणीये च मनोहरे लोचने यस्याः सा तथा तां, पुनः किं०? कमलपज्जलंतेत्यादि—तत्र पूर्ववत् प्राकृतत्वात् विशेषणस्य परनिपातः, ततः पज्जलंतत्ति प्रज्वलंतौ देदीप्यमानौ यौ करत्ति करौ हस्तौ ताभ्यां गहिअत्ति गृहीते ये कमलत्ति कमले ताभ्यां मुक्कत्ति मुक्तं क्षरत् तोयं मकरंदरूपं जलं यस्याः सा तथा तां, अयमर्थः—श्रीदेव्याः तावत् द्वयोः करयोः प्रत्येकं कमलं गृहीत-

विसालरमणिज्जलोअणिं कमलपज्जलंतकरगहिअमुक्कतोयं लीलावायकयपक्ख-

मस्ति तस्माच्च मकरंदबिंदवः स्रवंतीति, पुनः किं० ? लीलावायेत्यादि—लीलया नतु प्रस्वेदापनोदाय प्रस्वेदस्य दिव्यशरीरेष्वभावात् ततो लीलया वायत्ति वातोदीरणार्थं कयत्ति कृतोऽवधूतो यः पक्खयत्ति पक्षकस्तालवृंतं तेन शोभितां, अत्रापि शोभितां इति पदं अध्याहार्यं, पुनः किंवि० ? सुविसदेत्यादि—सुविशदः सुविविक्तो न पुनर्जटाजूटवत्परस्परसंलग्नः कसिणत्ति कृष्णः श्यामवर्णो घणत्ति घनोऽविरलो नतु

असयोः स्कंधयोः उपसक्तं लग्नं यत् कुंडलजुअलत्ति कुंडलयोर्युगलं तस्य उल्लसंतत्ति उल्लसंती सोभंतत्ति शोभमाना अत एव सत्ति सती समीचीना पभत्ति प्रभा कांतिर्यस्मिन् एवंविधेन शोभागुणसमुदयेन, पुन. कीदृशेन शोभागुणसमुदयेन? आणणकुडुंविएणं आननस्य मुखस्य कौटुंबिकेनेव यथा राजा कौटुंबिके. सेवकैः शोभते एवं श्रीदेव्या आननं तेन शोभागुणसमुदयेनेति।"अत्र 'उल्लसतत्ति' सोभतेत्यादीनि प्रभा-

सोभंतसप्पभेणं सोभागुणसमुदएणं आणणकुडंविएणं कमलामल-

विशेषणानि, 'अंसोवसत्तेति' च कुंडलयुगलविशेषणं, ननु तर्हि प्रभाविशेषणयोर्मध्ये कुंडलयुगलविशेषणं कथ न्यस्तं, तथा अंसोवसत्तेत्यस्य कुंडलयुगलात्परनिपातश्च कथं? 'असोवसत्त कुंडलजुयलुल्लसंत' इति पाठ. कथं न कृतः? इतिचेदुच्यते, प्राकृतत्वात् अन्यविशेषणमध्येपि अन्यविशेषणावतारो विशेषणस्य परनिपातश्च भवति एवं सर्वत्र विशेषणपरनिपाते हेतुर्ज्ञेयः।" पुनः किंविशिष्टां श्रीदेवतां? कमलामलेत्यादि–

वर्त्तंते इत्यर्थः सूचितः, पुनः किं०? आइयत्ति आयुक्ताभिर्यथास्थानस्थापिताभिः पत्तिअत्ति पत्रिकाभिर्मरकतपत्रैः 'पानां' इति लोकप्रसिद्धैः विभूसिएणं विभूषितेन अलंकृतेन सुभगजालुज्जलेणं सुभगानि दृष्टिसुखकराणि यानि जालानि मुक्तागुच्छानि तैः उज्वलेन एवंविधेन मुत्ताकलावएणं मुक्ताकलापकेन मौक्तिकहारेण शोभितां, अत्र 'शोभितां' इति पदं सूत्रे अनुक्तं अपि अध्याहार्यं, एवं

आइयपत्तिअविभूसिएणं सुभगजालुज्जलेणं मुत्ताकलावएणं उरत्थदीणारमालविरइएणं कंठमणिसुत्तएण य कुंडलजुअलुल्लसंतअंसोवसत्त-

अग्रे विशेषणद्वयेऽपि, पुनः किं०? उरत्थत्ति उरःस्थया हृदयस्थितया दीणारमालयत्ति दीनारमालया सौवर्णिकमालया विरइएणं विराजितेन कंठमणिसुत्तएणं कंठमणिसूत्रकेण च कंठस्थरत्नमयदवरकेण शोभितां इति पूर्ववत्, पुनः किं०? कुंडलजुअलेत्यादि—तत्र सोभागुणसमुदएणं ईदृशेन शोभागुण समुदयेन कांतिगुणप्राग्भारेण शोभितां इति योजना, अथ कीदृशेन शोभागुणसमुदयेन? अंसोवसत्तत्ति

कणगत्ति कनकं पीतवर्णं सुवर्णं विमलमहातवणिज्जत्ति विमलं निर्मलं महत् महाजातीयं एवंविधं तपनीयं रक्तवर्णं सुवर्णं एतत्संबंधीनि यानि आभरणत्ति आभरणानि अंगपरिधेयानि ग्रैवेयककंकणादीनि भूसणत्ति भूषणानि उपांगपरिधेयानि मुद्रिकादीनि तै. विराइअत्ति विराजितानि अंगुवंगत्ति अंगानि शिर.प्रभृतीनि, उपांगानि अंगुल्यादीनि यस्याः सा तथा तां, कोऽर्थ. ? आभरणैः श्रीदेव्या

कणगरयणविमलमहातवणिज्जाभरणभूसणविराइअमंगुवंगिं
हारविरायंतकुंदमालपरिणद्धजलजलिंतथणजुअलविमलकलसं

अंगानि भूषितानि संति भूषणैश्च उपांगानीति, पुन. किं० ? हारविरायंतत्ति हारेण मौक्तिकादिमालया विराजत् शोभमानं कुंदमालपरिणद्धत्ति कुंदादिपुष्पमालया परिणद्धं व्याप्तं जलजलिंतत्ति जाज्वल्यमानं देदीप्यमानं एवंविधं यत् थणजुअलत्ति स्तनयुगलं तदेव सदृशाकारतया विमलौ कलशौ यस्याः सा तथा तां, अनेन च अभेदरूपकालंकारेण कनककलशवत् पीनौ कठिनौ वृत्तौ च श्रीदेव्या. स्तनौ

समाऽविषमा संहिअत्ति संहिता निरंतरा तणुअत्ति तनुका सूक्ष्मा आइज्जत्ति आदेया सुभगा लडहत्ति लटभा विलासमनोहरा सुकुमालमउअत्ति सुकुमालेभ्यः शिरीषपुष्पादिवस्तुभ्योपि मृदुका तत एव रमणिज्जत्ति रमणीया रोमराइं रोमराजिर्यस्याः सा तथा तां, पुनः किं० ? णाभिमंडलेत्यादि—नाभिमंडलेन सुंदरं विशालं विस्तीर्णं पसत्थत्ति प्रशस्तं लक्षणोपेतं एवंविधं जघणं जघनं अग्रेतनः कट्य-

संहिअतणुअआइज्जलडहसुकुमालमउअरमणिज्जरोमराइं णाभिमंडलसुं-
दरविसालपसत्थजघणं करयलमाइज्जपसत्थतिवलिअमज्झं णाणामणि-

धोभागो यस्याः सा तथा तां, पुनः किंवि० ? करयलमाइज्जत्ति करतलमेयो मुष्टिग्राह्य इत्यर्थः पसत्थतिवलिअमज्झं प्रशस्ता त्रिवलिस्तिस्रो वल्यो लेखा यत्रैवंविधो मध्यभाग उदरलक्षणो यस्याः सा तथा तां, पुनः किं० ? णाणामणिरयणेत्यादि—नानाजातीया मणयश्चंद्रकांतप्रभृतयो रत्नानि वैडूर्यप्रभृतीनि

तेन शोभिते वट्टाणुपुव्वजंघं वृत्तानुपूर्वे कोऽर्थः? पूर्वं बहुस्थूले ततः स्तोकं २ स्थूले करिकरवत् ईदृशे जंघे यस्याः सा तथा तां, पुनः किं०? णिगूढजाणुं गुप्तजानुं, पुनः किं०? गयवरत्ति गजवरो गजेंद्रस्तस्य करः शुंडा तत्सदृशे पीवरे पुष्टे ऊरू यस्याः सा तथा तां, पुनः किंवि०? चामीकररइयत्ति सुवर्णरचिता सुवर्णमयी इत्यर्थः एवंविधा या मेहलत्ति मेखला तया युक्तं अत एव कंत मनोहरं

वट्टाणुपुव्वजंघं णिगूढजाणुं गयवरकरसरिसपीवरोरुं चामीकररइय-
मेहलाजुत्तकंतविच्छिण्णसोणिचक्कं जच्चंजणभमरजलयपयरउज्जुयसम-

विच्छिण्णत्ति विस्तीर्णं श्रोणिचक्रं कटीतटं यस्याः सा तथा तां, पुनः किं०? जच्चंजणेत्यादि—जात्यांजनं मर्दित अंजनं भमरजलयपयरत्ति भ्रमराणां प्रसिद्धानां जलदानां च मेघानां यः प्रकरः समूहस्तत्समानवर्णतया जात्यांजनभ्रमरजलदप्रकर इव उज्जुअत्ति ऋजुका प्रध्वरां अतएव समत्ति

सरिसोवमाणत्ति सदृशं युक्तं उपमानं ययोः एवंविधौ चरणौ यस्याः सा तथा तां, पुनः किं० ? अच्चुण्णयेत्यादि–अत्युन्नतं तथा पीनं पुष्टं यत् अंगुष्टादि अंगं तत्र स्थिताः रइयत्ति रंजिता इव, अयमर्थः, श्रीदेव्याः स्वयमेव नखास्तथारक्ताः संति यथा उत्प्रेक्ष्यते लाक्षादिना रंजिता इव मंसलउण्णयत्ति मांसलाः पुष्टाः उन्नताः मध्योन्नताः तणुत्ति तनवः सूक्ष्मा नतु स्थूलाः तंवत्ति ताम्रा अरुणाः णिद्धत्ति

सरिसोवमाणचलणं अच्चुण्णयपीणरइयमंसलउण्णयतणुतंवणि-
द्धणहं कमलपलाससुकुमालकरचरणकोमलवरंगुलिं कुरुविंदावत्त-

स्निग्धा अरूक्षा नखा यस्याः सा तथा तां, पुनः किं० ? कमलपलासत्ति कमलस्य पलाशानि पत्राणि तद्वत् सुकुमालौ करचरणौ यस्याः सा, तथा कोमलवरंगुलिं कोमला अत एव वराः श्रेष्टाः अंगुलयो यस्याः सा, ततो विशेषणसमासः, पुनः किं० ? कुरुविंदावत्तत्ति कुरुविंदावर्त्तमावर्त्तविशेप आभरणविशेपो वा

गुरुस्थानीयाभ्यंतरपर्षद्देवानां अष्टसहस्रकमलानि । दक्षिणदिशि मित्रस्थानीयमध्यमपर्षद्देवानां दशसहस्रकमलानि । नैर्ऋत्यां किंकरस्थानीयबाह्यपर्षद्देवानां द्वादशसहस्रकमलानि । पश्चिमायां च हस्ति (१) तुरंगम (२) रथ (३) पदाति (४) महिष (५) गंधर्व (६) नाट्य (७) रूपसप्तकटकनायकानां सप्त कमलानि, इति द्वितीय वलयं । ततस्तृतीये वलये तावतां अंगरक्षकदेवानां षोडशसहस्रकमलानि, इति तृतीयं वलयं । अथ चतुर्थवलये अभ्यंतराभियोगिकदेवानां द्वात्रिंशल्लक्षकमलानि । पंचमे वलये मध्यमाभियोगिकदेवानां चत्वारिंशल्लक्षकमलानि । षष्ठे वलये बाह्याभियोगिकदेवानां अष्टचत्वारिंशल्लक्षकमलानि । सर्वसंख्यया च मूलकमलेन सह एका कोटिर्विंशतिर्लक्षाः पंचाशत्सहस्राः शतमेकं विंशतिश्च (१२०५०१२०) कमलानामिति" । अथ एवंविधं यत्कमललक्षणं स्थानं तत्र स्थितां, पुनः किंविशिष्टां ? पसत्थरूवं प्रशस्तरूपां मनोरमरूपां इत्यर्थः, पुनः किंविशिष्टां? सुपइट्ठिअत्ति सुप्रतिष्ठितौ सम्यक्तया स्थापितौ यौ कणगकुम्मत्ति कनकमयकच्छपौ तयो-

पसत्थरूवं सुपइट्ठिअकणगकुम्म-

वान्नामा पर्वतः । तदुपरि च दश ( १० ) योजनावगाढः, पंचशत ( ५०० ) योजनपृथुलः, सहस्र ( १००० ) योजनदीर्घो वज्रमयतलभागः पद्महदनामा ह्रदः । तस्य मध्यभागे जलात् क्रोशद्वयोच्चं, एकयोजनपृथुलं, एकयोजनदीर्घं, नीलरत्नमयदशयोजननालं, वज्रमयमूलं, रिष्टरत्नमयकंदं, रक्तकनकमयबाह्यपत्रं, कनकमयमध्यपत्रं, एवंविधं एकं कमलं । तस्मिन् कमले च क्रोशद्वयपृथुला, क्रोशद्वयदीर्घा, एकक्रोशोच्चा रक्तसुवर्णमयकेसरविराजिता एवंविधा कनकमयी कर्णिका । तस्या मध्ये च अर्द्धक्रोशपृथुलं, एकक्रोशदीर्घं, किंचिदूनैकक्रोशोच्चं श्रीदेवीभवनं । तस्य च त्रीणि द्वाराणि, पंचशतधनुरुच्चानि, तदर्द्धमानपृथुलानि, पूर्वदक्षिणोत्तरदिक्स्थितानि। अथ तस्य भवनस्य मध्यभागे सार्द्धशतद्वयधनुर्मिता रत्नमयी वेदिका । तदुपरि च श्रीदेवीयोग्यशय्या । अथ तस्मान्मुख्यकमलात्परितश्च श्रीदेव्या आभरणभूतानि वलयाकाराणि पूर्वोक्तमानादर्द्धमानोच्चत्वदीर्घत्वपृथुत्वानि अष्टोत्तरशतं कमलानि, एवं सर्वेष्वपि वलयेषु क्रमेणार्द्धार्द्धमानत्वं ज्ञेयं, इति प्रथमं वलयं । द्वितीयवलये वायव्येशानोत्तरदिक्षु चतुःसहस्रसामानिकदेवानां चतुःसहस्री कमलानां । पूर्वदिशि चत्वारि महत्तराकमलानि । आग्नेय्यां

प्राग्योजिता, पुनः किं०? गाढतिक्खग्गणहं गाढं अत्यंतं तीक्ष्णानि अग्राणि येषां एवंविधा नखा यस्य स तथा तं, सीहं केसरिणं इत्यपि योजितं, पुनः किं०? वयणसिरित्ति वदनस्य श्रीः शोभा तदर्थं पल्लवपत्तत्ति पल्लववत् प्रसारिता चारुत्ति मनोहरा जिह्वा येन स तथा तम् ॥ ३ ॥ ३५ ॥ ॥

गाढतिक्खग्गणहं सीहं वयणसिरीपल्लवपत्तचारुजीहं॥३॥३५॥

तओ पुणो पुण्णचंदवयणा उच्चागयट्ठाणलट्ठसंठिअं

तओ पुणो ततः पुनः सिंहदर्शनानंतरं पुण्णचंदवयणा पूर्णचंद्रवदना त्रिशला पद्मद्रहकमलवासिनीं भगवतीं श्रियं श्रीदेवतां हिमवत्शैलशिखरे दिग्गजेंद्रोरुपीवरकराभिषिच्यमानां पश्यतीति योजना, अथ किंविशिष्टां तां? उच्चागयट्ठाणलट्ठसंठिअत्ति उच्चो योऽग० पर्वतो हिमवान् तत्र जातं उच्चागजं एवंविधं 'लट्ठं' प्रधानं यत् 'ठाणं' स्थानं कमललक्षणं तत्र संस्थितां। तच्चैवं। " एकशत (१००) योजनोच्चो, द्वादशकलाधिकद्विपंचाशद्योजनोत्तरयोजनसहस्र ( १०५२ क १२ ) पृथुलः स्वर्णमयो हिम-

विसयत्ति विशदानि धवलानि सुहुमत्ति सूक्ष्माणि लक्खणपसत्थत्ति प्रशस्तलक्षणानि वित्थिण्णत्ति विस्तीर्णानि दीर्घाणि केसरत्ति केसराणि स्कंधसंबंधिरोमाणि तेषां आटोप उद्धतत्वं तेन शोभितं, पुनः किंवि० ? ऊसिअत्ति उच्छ्रितं उन्नतं सुनिम्मिअत्ति सुनिर्मितं कुंडलीकृतं सुजायत्ति सुजातं सशोभं यथास्यात्तथा अफोडिअंति आस्फोटितं लंगूलंति लांगूलं पुच्छं येन स तथा तं, तेन पूर्वं

विमलखंधं मिउविसयसुहूमलक्खणपसत्थवित्थिण्णकेसराडोवसो-
हिअं ऊसिअसुनिम्मिअसुजायअप्फोडिअलंगूलं सोमं सोमागारं
लीलायंतं नहयलाओ उवयमाणं नियगवयणमइवयंतं पिच्छइ सा

लांगूलं आस्फोट्य पश्चात् कुंडलीकृतं इति भावः, पुनः किं? सोमं सौम्यं मनसा अक्रूरं सोमागारं सौम्याकारं सुंदराकृतिं इत्यर्थः, पुनः किं० ? लीलायंतं सविलासगतिं, पुनः किं० ? नहयलाओउवय-माणं आकाशादुत्तरंतं, ततश्च निजकवदनमनुप्रविशंतं पिच्छइ प्रेक्षते सा त्रिशला इति पदचतुष्टयी

यस्य स तथा तं, पुनः किंवि० ? रत्तुप्पलेत्यादि–रक्तोत्पलं रक्तकमलं तस्य यत्पत्रं तद्वत् मउयत्ति मृदु सुकुमालं तालु, तथा निल्लालिअत्ति निर्लोलिता लपलपायमाना अग्गत्ति अग्र्या प्रधाना जीहत्ति जिह्वा यस्य, कोऽर्थः ? उक्तस्वरूपं तालु उक्तस्वरूपा जिह्वा च विद्येते यस्य तं, पु० किं० ? मूसागयत्ति मूषा मृन्मयभाजनं, यत्र सुवर्णकारेण सुवर्णं प्रक्षिप्य गाल्यते, तस्यां गयत्ति स्थितं ताविअत्ति तापितं

रत्तुप्पलपत्तमउयसुकुमालतालु निल्लालिअग्गजीहं मूसागयताविअपवरकणगआवत्तायंतवट्टतडिअविमलसरिसनयणं विसालपीवरवरोरुं पडिपुण्ण-

आवत्तायंतत्ति आवर्तायमानं प्रदक्षिणं भ्रमत् एवंविधं यत् पवरकणगत्ति प्रवरकनकं तद्वत् वृत्ते, तडिअविमलत्ति विमला या तडित् विद्युत् तत्सदृशे नयने लोचने यस्य स तथा तं, पुनः किं० ? विसालेत्यादि–विशालौ विस्तीर्णौ पीवरौ पुष्टौ वरौ प्रधानौ ऊरू यस्य स तथा तं, पुनः ? पडिपुण्णेत्यादि–प्रतिपूर्णोऽन्यूनः विमलश्च स्कंधो यस्य स तथा तं, पुनः किं०? मिउविसयेत्यादि–मृदूनि सुकुमाराणि

रमणिज्जपिच्छणिज्जं रमणीयं मनोहरं अत एव प्रेक्षणीयं द्रष्टुं योग्यं, पुनः किं० ? थिरेत्यादि–स्थिरौ दृढौ अत एव लष्टौ प्रधानौ पउट्ठत्ति प्रकोष्ठौ कलाचिके 'पउंचा' इति लोकप्रसिद्धौ हस्तावयवौ यस्य स तथा तं, पुनः किं० ? वट्टत्ति वृत्ताः वर्तुलाः पीवरत्ति पीवराः पुष्टाः सुसिलिट्ठत्ति सुश्लिष्टा अन्योन्यं अंतररहिताः अत एव विसिट्ठत्ति विशिष्टाः प्रधानाः तिक्खत्ति तीक्ष्णा एवंविधा याः दाढा

(ग्रं०२००) रमणिज्जपिच्छणिज्जथिरलट्ठपउट्ठं वट्टपीवरसुसिलिट्ठविसिट्ठ-
तिक्खदाढाविडंबिअमुहं परिकम्मिअजच्चकमलकोमलपमाणसोभंतलट्ठउट्ठं

दंष्ट्रास्ताभिः विडंबिअमुहं विडंबितं कोऽर्थः अलंकृतं मुखं यस्य स तथा तं, पुनः किं० ? परिकम्मि- एत्यादि–परिकर्मिताविव परिकर्मितौ जच्चकमलकोमलत्ति जात्यं उत्तमजातिसंभवं यत्कमलं तद्वत्कोमलौ, तथा पमाणसोभंतात्ति यथोक्तमानेन शोभमानौ लट्ठत्ति लष्टौ प्रधानौ एवंविधौ उट्ठत्ति ओष्ठौ

प्रमाणा अत एव सोहंतत्ति शोभमानाः सुद्धत्ति शुद्धाः श्वेता निर्दोषा वा दंता यस्य स तथा तं, पुन॰ किं०? अमियगुणेत्यादि–अमिता गुणा येभ्य एवंविधानि यानि मंगलानि तेषां मुखं द्वारं आगमनकारणमित्यर्थः ॥ २ ॥ ३४ ॥ ॥ ॥ ॥ ॥

समाणसोहंतसुद्धदंतं वसहं अमिअगुणमंगलमुहं ॥ २ ॥ ३४ ॥ ॥
तओ पुणो हारनिकर-खीरसागर-ससंककिरण-दगरय-रययमहासेलपंडुरतरं

तओपुणो ततः पुनर्वृषभदर्शनानंतरं नभस्तलादवतरंतं तदनु च निजकं वदनं अइवयंतं अतिपतंतं प्रविशंतं सा त्रिशला सिंहं पश्यति, अथ किंविशिष्टं सिंहं? हारनिकरेत्यादि–हारनिकरक्षीरसागरशशांककिरणदकरजोरजतमहाशैलाः पूर्वं व्याख्यातास्तद्वत्पांडुरं उज्ज्वलं, पुनः किंवि०?

क्ष्यते, पुनः किं० ? तणुसुद्धेत्यादि—तणुत्ति तनूनि सूक्ष्माणि सुद्धत्ति शुद्धानि निर्मलानि सुकुमालत्ति सुकुमालानि ईदृशानि यानि लोमत्ति रोमाणि तेषां णिद्धत्ति स्निग्धा सस्नेहा नतु रूक्षा छविन्ति कांतिर्यस्य स तथा तं, पु० किं० ? थिरसुबद्धत्ति स्थिरं दृढं अत एव सुबद्धं मंसलत्ति मांसयुक्तं अत एव उवचिअत्ति पुष्टं लट्ठत्ति लष्टं प्रधानं सुविभत्तत्ति सुविभक्तं यथास्थानस्थितसर्वावयवं ईदृशं

तणुसुद्धसुकुमाललोमणिद्धच्छविं थिरसुबद्धमंसलोवचिअलट्ठसुविभ-
त्तसुंदरंगं पिच्छइ घणवट्टलट्ठउक्किट्ठतुप्पग्गतिक्खसिंगं दंतं सिवं

सुंदरं अंगं यस्य स तथा तं, पुनः किंवि० ? घणवट्टेत्यादि—घने निचिते वृत्ते वर्तुले लट्ठउक्किट्ठत्ति लष्टात्प्रधानादपि उत्कृष्टे अतिप्रधाने इत्यर्थः तुप्पग्गत्ति म्रक्षिताग्रे तिक्खत्ति तीक्ष्णे ईदृशे श्रृंगे यस्य स तथा तं, पुनः किं० ? दंतं दांतं अक्रूरं सिवं उपद्रवहरं, पुनः किंवि० ? समाणेत्यादि—समानास्तुल्य-

तओपुणो ततः पुनर्गजदर्शनानंतरं वसहं पिच्छइ वृषभं पश्यतीति संबंधः, अथ किंविशिष्टं वृषभं? धवलकमलेत्यादि—धवलानां उज्ज्वलानां कमलानां यानि पत्राणि तेषां पयरत्ति प्रकरः समूहस्तस्मात् अइरेगत्ति अतिरेका अधिकतरा रूवप्पभं रूपप्रभा रूपकांतिर्यस्य स तथा त, पुनः किंवि०? पहास-सुदयेत्यादि—प्रभा कांतिस्तस्याः समुदयः समूहस्तस्य उवहारत्ति उपहारा विस्तारणानि तैः सव्वओ

तओ पुणो धवलकमलपत्तपयराइरेगरूवप्पभं पहासमुदओवहारेहिं
सव्वओ चेव दीवयंतं अइसिरिभरपिल्लणाविसप्पंतकंतसोहंतचारुककुहं

सर्वतो दशाऽपि दिश. चेव निश्चयेन दीवयंतं दीपयंतं शोभयंतं, पुनः किंवि०? अइसिरिभरत्ति अति-शयितः श्रीभरः शोभासमूहस्तेन कृता या पिल्लणा प्रेरणा,उत्प्रेक्ष्यते, तयैव विसप्पंतत्ति विसर्पत् उल्लसत् अत एव कंतत्ति कांतं दीप्तिमत् तत एव सोहंतत्ति शोभमानं चारुत्ति मनोहरं ककुत् स्कंधो यस्य तं, अयमर्थः, यद्यपि स्कंध उन्नतत्वात् स्वयमेव उल्लसति तथापि अतिश्रीभरप्रेरणयैव उल्लसतीत्युत्प्रे-

कंवोलमूलं कपोलमूलं यस्य स तथा तं, तस्य कपोलमूलं दानवासितमस्ति तद्गंधेन भ्रमरा अपि तत्र मिलितास्सन्तीति भावः, पुनः कीदृशं? देवरायकुंजरवरप्पमाणं देवराजो देवेंद्रस्तस्य कुंजरो हस्ती तद्वद्वरं शास्त्रोक्तं प्रमाणं देहमानं यस्य स तथा तं, पिच्छइ प्रेक्षते इदं क्रियापदं पश्यतीति इभं इत्यनेन पूर्वं योजितं, पुनः कीदृशं ? सजलघणेत्यादि–सजलो जलपूर्णस्तस्य हि ध्वनिर्गंभीरो भवति

पिच्छइ सजलघणविपुलजलहरगज्जिअगंभीरचारुघोसं
इभं सुभं सव्वलक्खणकयंबिअं वरोरुं ॥ १ ॥ ३३ ॥

एवंविधो यो घनो निविडो विपुलजलधरो महामेघस्तस्य यद्गर्जितं तद्वद्गंभीरश्चारुर्मनोहरश्च घोषः शब्दो यस्य स तथा तं, महामेघवत् स गजो गर्जतीति भावः, पुनः कीदृशं ? सुभं शुभं प्रशस्यं, पुनः कीदृशं ? सव्वलक्खणकयंबियं सर्वलक्षणानां कदंबं समूहस्तज्जातं यस्य स तथा तं, पुनः कीदृशं ! वरोरुं वरः प्रधानः उरुर्विशालश्च एवंविधं हस्तिवरं प्रथमे स्वप्ने त्रिशला पश्यति ॥ १ ॥ ३३ ॥

वीरमाता च सिंहं ददर्शेति । अथ कीदृशं इभं पश्यति ? चउदंतं चत्वारो दंता यस्य स चतुर्दंतस्तं, क्वचित् " तओअचउवंत " इतिपाठस्तत्र ततौजसो महाबलवंतश्चत्वारो दंता यस्येति व्याख्येयं, पुन. की० ? ऊसिअत्ति उच्छ्रित उत्तुंगस्तथा गलिअविपुलजलहरत्ति गलितो वर्षणादनंतरकालभावी स हि दुग्धवर्णो भवति एवंविधो यो विपुलजलधरो महामेघस्तथा हारनिकरत्ति पुंजीकृतो मुक्ताहारः खीर-

जलहर-हारनिकर-खीरसागर-ससंककिरण-दगरय-रययमहासेलपंडुरं
समागयमहुअर-सुगंधदाणवासिअकवोलमूलं देवरायकुंजरवरप्पमाणं

सागरत्ति दुग्धसमुद्रः ससंककिरणत्ति चंद्रकिरणाः दगरयत्ति जलकणाः रययमहासेलत्ति रजतस्य रूप्यस्य महाशैलो महान्पर्वतो वैताढ्यस्तद्वत्पांडुरः, ततश्च उच्छ्रितश्चासौ पूर्वोक्तसर्ववस्तुवत्पांडुरश्चेति कर्मधारयः ततस्तं, पुनः किंविशिष्टं ? समागयत्ति समागता गंधलोभेन मिलिता महुअराति मधुकरा भ्रमरा यत्र तादृशं यत् सुगंधत्ति विशिष्टगंधाधिवासितं दाणंति मदवारि तेन वासिअत्ति सुरभीकृतं

सुगंधवरेत्यादि—सुगंधेन वरेण प्रधानेन कुसुमेन चूर्णेन च वासयोगेन यः शय्याया उपचारः पूजा तेन कलिते, शेषं सुगमं, नवरं पुव्वरत्तावरत्तत्ति मध्यरात्रे ॥ ३२ ॥ तएणं ततः सा त्रिशला क्षत्रियाणी

तूलतुल्लफासे सुगंधवरकुसुमचुण्णसयणोवयारकलिए पुव्वरत्तावरत्तकालसमयंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे ओराले जाव चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा । तंजहा । "गय १ वसह २ सीह ३ अभिसेअ ४ दाम ५ ससि ६ दिणयरं ७ झयं ८ कुंभं ९ । पउमसर १० सागर ११ विमाण १२ भवण १२ रयणुच्चय १३ सिहिं च १४॥३२॥

तएणं सा तिसला खत्तिआणी तप्पढमयाए चउदंतमूसिअगलियाविपुल-

तप्पढमयाए तत्प्रथमतया प्रथमं इत्यर्थः इभं स्वप्ने पश्यतीति संबंधः, अत्र प्रथमं इभं पश्यतीति यदुक्तं तत् बह्वीभिर्जिनजननीभिस्तथादृष्टत्वात्पाठानुक्रममपेक्ष्योक्तं, अन्यथा ऋषभमाता प्रथमं वृषभं,

तत एव मध्ये नते गंभीरे च, पुनः किंवि० ? गंगापुलिणवालुआउद्दालसालिसए तत्र ' उद्दालत्ति ' अवदालेन पादविन्यासे अधोगमनेन गंगातटवालुकासदृशे, अयमर्थः, यथा गंगापुलिनवालुका पादे मुक्तेऽधो व्रजति तथा अतिकोमलत्वात्स पल्यंकोऽपीति ज्ञेयं, पुनः किंवि० ? उवचिअत्ति परिकर्मितं खोमिअत्ति क्षौमं अतसीमयं दुगुल्लत्ति दुकूलं वस्त्रं तस्य यः पट्टो युगलापेक्षया एकपट्टः तेन पडिच्छण्णे

गंभीरे गंगापुलिणवालुआउद्दालसालिसए उवचिअखोमिअदुगुल्लपट्टपडिच्छण्णे सुविरइयरयत्ताणे रत्तंसुअसंवुडे सुरम्मे आईणगरूअबूरणवणीय-

आच्छादिते, पुनः किंवि० ? सुविरइयरयत्ताणे सुष्ठु विरचितं रजस्त्राणं अपरिभोगावस्थायां आच्छादनं यत्र तस्मिन्, पुनः किंवि० ? रत्तंसुअसंवुडे रक्तांशुकेन मशकगृहाभिधानेन रक्तवस्त्रेणाऽऽच्छादिते तथा सुरम्मे अतिरमणीये, पुनः किं० ? आईणगेत्यादि—आजिनक परिकर्मितं चर्म, रूतं कर्पासपक्ष्म, बूरो वनस्पतिविशेषः, नवनीतं म्रक्षणं, तूलं अर्कतूलं, एभिस्तुल्यः स्पर्शो यस्य तस्मिन्, पुनः किं० ?

गंधवान् उद्धूअत्ति उद्भूतः प्रकटीभूतः एवंविधो यो गंधस्तेनाभिरामे, पुनः किंवि०? सुगंधवरगंधियत्ति सुगंधाः सुरभयो ये वरगंधाः प्रधानचूर्णानि तेषां गंधो यत्र तत्तथा तस्मिन्, पुनः किंवि०? गंधवट्टिभूए गंधवर्तिर्गंधद्रव्यगुटिका तत्सदृशे अतिसुगंधे इत्यर्थः, एतादृशे वासभवने, अथ तंसि तारिसगंसित्ति प्राग्वत् सयणिज्जंसि शयनीये पल्यंके इत्यर्थः, किंविशिष्टे? सालिंगणवट्टिए सालिंगनवर्त्तिके आलिंगन-

गंधुद्धुआभिरामे सुगंधवरगंधिए गंधवट्टिभूए तंसि तारिसगंसि सयणिज्जंसि सालिंगणवट्टिए उभओ बिब्बोअणे उभओ उण्णए मज्झे णय-

वर्त्तिका नाम शरीरप्रमाणं दीर्घं गंडोपधानं तया सहिते, पुनः किंवि०? उभओ बिब्बोअणे तत्र 'उभओत्ति' उभयतः शिरोंतपादांतयोः 'बिब्बोअणत्ति' उच्छीर्षके यत्र तत्तथा तस्मिन्, पुनः किंवि०? उभओ उण्णए यत उभयत उच्छीर्षकयुक्ते अत एव उभयत उन्नते, पुनः किंवि०? मज्झे णयगंभीरे

ल्लिअतले विचित्रो विविधचित्रकलित उल्लोक उपरिभागो यत्र तत्तथा चिल्लिअतले देदीप्यमान तल अधोभागो यत्र तत्तथा, ततः कर्मधारये विचित्रोल्लोकचिल्लियतले, पुनः किंवि०? मणिरयणपणासिअंधयारे मणिरत्नप्रणाशितांधकारे, पुनः किंवि०? बहुसम अत्यंतं समः अविषमः पंचवर्णमणिनिबद्धत्वात् सुविभत्त सुविभक्तो विविधस्वस्तिकादिरचनामनोहरः एवंविधो भूमिभागो यत्र तत्तथा तस्मिन्, पुनः

मणिरयणपणासिअंधयारे बहुसमसुविभत्तभूमिभागे पंचवण्णसरससुरहि-
मुक्कपुप्फपुंजोवयारकलिए कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघंत-

किंवि०? पंचवण्णेत्यादि, पंचवर्णेन सरसेन सुरभिणा मुक्कत्ति इतस्ततो विक्षिप्तेन ईदृशेन पुप्फपुंजलक्षणेन उपचारेण पूजया कलिते, पुनः किंवि०? कालागुरु कृष्णागुरु प्रसिद्धं पवरकुंदुरुक्क विशिष्ट चीडाभिधान गंधद्रव्यविशेषः तुरुक्क तुरुष्कं सिल्हकाभिधानं सुगंधद्रव्यं डज्झंतधूव दह्यमानो धूपो दशांगादिरनेकसुगंधद्रव्यसंयोगसमुद्भूतः एतेषां वस्तूनां संबंधी यो मघमघंतत्ति मघमघायमानोऽतिशयेन

प्रतिबुद्धा ॥ ३१ ॥ जंरयणिंचणमित्यादि सिहिंचेति यावत् । तत्र जं रयणिंचणं यस्यां रात्रौ भगवान् कुक्षौ गर्भतया मुक्तस्तस्यां रात्रौ सा त्रिशला क्षत्रियाणी तंसि तस्मिन् तारिसगंसि तादृशे वक्तुं अशक्यस्वरूपे महाभाग्यवतां योग्ये वासघरंसि वासगृहे शयनमंदिरे इत्यर्थः, किंविशिष्टे वासगृहे ? अब्भिं-

हडे पासित्ताणं पडिबुद्धा तंजहा "गयवसह"गाहा ॥ ३१ ॥ जं रयणिं चणं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिसि गब्भत्ताए साहरिए तं रयणिं चणं सा तिसला खत्तिआणी तंसि तारिसगंसि वासघरंसि अब्भिंतरओ सचित्तकम्मे बाहिरओ दूमिअघट्ठमट्ठे विचित्तउल्लोअचिल्लिअतले

तरओ सचित्तकम्मे मध्ये चित्रकर्मरमणीये, पुनः किंविशिष्टे? बाहिरओ बाह्यभागे दूमिय सुधादिना धवलिते घट्ठ कोमलपाषाणादिना घृष्टे अत एव मट्ठे सुकोमले, पुनः किंविशिष्टे ? विचित्तउल्लोअचि-

तस्यां वासीइराइंदिए द्व्यशीतौ अहोरात्रेषु अतिक्रांतेषु तेसीइमस्स त्र्यशीतितमस्याहोरात्रस्य अंतरावट्टमाणस्स अंतरकाले रात्रिलक्षणे काले वर्त्तमाने हरिणैगमिषिणा देवेन त्रिशलाकुक्षौ भगवान्संहृत इति संबंधः । किंविशिष्टेन तेन? हिआणुकंपएण हितेन स्वस्य इंद्रस्य च हितकारिणा, तथा

तेसीइमस्स राइंदियस्स अंतरा वट्टमाणस्स हिआणुकंपएणं देवेणं हरिणेगमेसिणा सक्कवयणसंदिट्ठेणं माहणकुंडग्गामाओ णयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तिअकुंडग्गामे णयरे णायाणं खत्तियाणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारियाए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए पुव्वर-

अणुकंपएणं अनुकपकेन भगवतो भक्तेन, अनुकंपायाश्च भक्तिवाचित्वं “ आयरियअणुकंपाए, गच्छो अणुकंपिओ महाभागो । इति वचनात् ” अत्र कवेरुत्प्रेक्षा—“सिद्धार्थपार्थिवकुलासग्रहप्रवेशे, मौहूर्त-

शक्रनाम्नि सिंहासने शक्रो देवेंद्रो देवराजस्तत्रोपागच्छति, उपागत्य च शक्रस्य तां पूर्वोक्तां आज्ञां प्रत्यर्पयतीति संबंधः ॥ २९ ॥ तेणंकालेणं तस्मिन् काले तस्मिन्समये श्रमणो भगवान्महावीरः

जेणामेव सोहम्मे कप्पे सोहम्मवडिंसए विमाणे सक्कंसि सीहासणंसि सक्के देविंदे देवराया तेणामेव उवागच्छइ उवागच्छित्ता सक्कस्स देविंदस्स देवरण्णो तमाणत्तिअं खिप्पामेव पच्चप्पिणइ ॥२९॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जे से वासाणं तच्चे मासे पंचमे पक्खे आसोअबहुले तस्स णं आसोअबहुलस्स तेरसीपक्खेणं बासीइराइंदिएहिं विइक्कंतेहिं

जेसे वासाणं तच्चे मासे योऽसौ वर्षाणां वर्षाकालसंबंधी तृतीयो मासः, पंचमः पक्षः, कोऽसौ ? इत्याह। आसोअबहुले आश्विनमासस्य कृष्णपक्षः, तस्य तेरसीपक्खेणं त्रयोदश्याः पक्षः, पश्चार्धरात्रिरित्यर्थः,

कृतं यथा भगवता ज्ञातमपि अज्ञातमिवाभूत् ! पीडाभावात्, यथा कश्चिद्वदति त्वया मम पादात्तथा कंटक उद्धृतो यथा मया ज्ञात एव नेति । सौख्यातिशये च सत्येवंविधो व्यपदेशः सिद्धांतेऽपि दृश्यते, तथाहि " तहिं देवा वंतरिया, वरतरुणीगीअवाइयरवेणं । णिच्चं सुहिअपमुइया, गयंपि कालं ण याणंति ॥१॥" इत्यादि । तथा च "साहरिज्जमाणे वि जाणइ" इत्याचारांगोक्तेन विरोधोऽपि न स्यादिति

गुत्ताए कुच्छीओ तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहरिए तं रयणिं चणं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे ओराले कल्लाणे सिवे धण्णे मंगल्ले सस्सिरीए चउद्दस महासुमिणे तिसलाए खत्तिआणीए

मतव्यम् ॥ जंरयणिंचणमित्यादि–अयमर्थः, यस्यां रात्रौ श्रमणो भगवान्महावीरो देवानंदाया• कुक्षे-स्त्रिशलायाः कुक्षौ संहृतस्तस्यां रात्रौ सा देवानंदा पूर्वोक्तान् चतुर्दश स्वप्नान् त्रिशलया हृतान् दृष्ट्वा

मागमयमान इव क्षणं यः । रात्रिंदिवान्युपितवान् भगवान् द्व्यशीति, विप्रालये स चरमो जिनराट् पुनातु ॥ १ ॥" शेषं स्पष्टम् ॥ ३० ॥ तेणंकालेणं तदा संहरणकाले श्रमणो भगवान्महावीरस्त्रिज्ञानोपगत आसीत्, तथाहि—संहरिष्यमाणो जानाति, संह्रियमाणो न जानाति, संहृतोस्मीति च जानाति ।

त्तावरत्तकालसमयंसि हत्थुत्तराहिं णक्खत्तेणं जोगमुवागएणं अव्वाबाहं अव्वाबाहेणं कुच्छिंसि गब्भत्ताए साहरिए ॥ ३० ॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे तिण्णाणोवगए आविहोत्था, साहरिज्जिस्सामित्ति जाणइ, साहरिज्जमाणे णो जाणइ, साहरिएमित्ति जाणइ । जं रयणिं चणं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरस-

ननु संह्रियमाणो न जानातीति कथं युक्तं? संहरणस्य असंख्यसामयिकत्वात्, भगवतश्च संहरणकर्तृदेवापेक्षया विशिष्टज्ञानवत्वात् । उच्यते, इदं वाक्यं संहरणस्य कौशल्यज्ञापकं, तथा तेन भगवतः संहरणं

पुत्रीरूपस्तमपि देवानंदाब्राह्मणीकुक्षौ मुंचति, तथाकृत्वा च जामेव दिसिं पाउब्भूए यस्या एव दिशः प्रादुर्भूत आगत इत्यर्थः, तामेव दिशं प्रतिगतः ॥ २८ ॥ ताए उक्किट्ठाए इत्यादीनि पदानि प्राग्वत्,

दिव्वेणं पहावेणं तिसलाए खत्तियाणीए कुच्छिसि गब्भत्ताए साहरइ । जेवि-
अ णं से तिसलाए खत्तिआणीए गब्भे तंपिअ णं देवाणंदाए माहणीए जालं-
धरसगुत्ताए कुच्छिसि गब्भत्ताए साहरइ साहरित्ता जामेव दिसिं पाउब्भूए
तामेव दिसिं पडिगए ॥ २८ ॥ ताए उक्किट्ठाए तुरियाए चवलाए चंडाए
जयणाए उद्धुआए सिग्घाए दिव्वाए देवगईए तिरिअमसंखेज्जाणं दीवस-
मुद्दाणं मज्झं मज्झेणं जोअणसयसाहस्सिएहिं विग्गहेहिं उप्पयमाणे

असंखेज्जाणं असंख्येयानां द्वीपसमुद्राणां मध्येन भूत्वा जोअणसयसाहस्सिएहिं लक्षयोजनप्रमाणाभिः विग्गहेहिं वींखाभिर्गतिभिरित्यर्थः उप्पयमाणे उत्पतन् यत्र सौधर्मे कल्पे सौधर्मावतंसके विमाने

अशक्यत्वादिति, ततो गृहीत्वा च 'जेणेवेत्यादि सुभे पुग्गले पक्खिवेइ इत्यंतं' प्राग्वत् । ततः स श्रमणं भगवंतं महावीरं अव्याबाधं अव्याबाधेन त्रिशलायाः क्षत्रियाण्याः कुक्षौ गर्भतया संहरति मुंचतीत्यर्थः, अत्र गर्भाशयात् गर्भाशये (१) गर्भाशयात् योनौ (२) योनेर्गर्भाशये (३) योनेर्योनौ (४)

अव्वाबाहं अव्वाबाहेणं दिव्वेणं पहावेणं करयलसंपुडेणं गिण्हइ गिण्हित्ता जेणेव खत्तिअकुंडग्गामे णयरे जेणेव सिद्धत्थस्स खत्तिअस्स गिहे जेणेव तिसला खत्तिआणी तेणेव उवागच्छइ उवागच्छित्ता तिसलाए खत्तिआणीए सपरिअणाए ओसोवणिं दलइ दलित्ता असुभे पुग्गले अवहरइ अवहरित्ता सुभे पुग्गले पक्खिवइ पक्खिवित्ता समणं भगवं महावीरं अव्वाबाहं अव्वाबाहेणं

इति गर्भसंहरणे चतुर्भंगी संभवति, तत्र योनिमार्गेण आदाय गर्भाशये मुंचतीत्ययं तृतीयो भंगोऽनुज्ञातः, शेषाश्च निषिद्धाः श्रीभगवतीसूत्रे । जेविअणमित्यादि—योऽपि च त्रिशलायाः क्षत्रियाण्या गर्भः

करोति, प्रणामं कृत्वा च देवानंदायाः सपरिवारायाः ओसोवणिं अवस्वापिनीं निद्रां दलइ ददाति, तां दत्वा च अशुचीन्पुद्गलान् अवहरइ अपहरति दूरीकरोति, तथाकृत्वा च शुभान्पुद्गलान् प्रक्षिपति, प्रक्षिप्य च अनुजानातु मां भगवानिति कृत्वा इत्युक्त्वा श्रमणं भगवंतं महावीरं अव्वावाहं व्याबाधारहितं, अव्याबाधेन सुखेन दिव्येन प्रभावेण करतलसंपुटे गृह्णाति, न च तेन गृह्यमाणस्यापि

महावीरस्स पणामं करइ पणामं करित्ता देवाणंदाए माहणीए सपरिजणाए ओसोवणिं दलइ दलित्ता असुभे पुग्गले अवहरइ अवहरित्ता सुभे पुग्गले पक्खिवइ पक्खिवित्ता अणुजाणउ मे भयवंति कट्टु समणं भगवं महावीरं

गर्भस्य काचित्पीडा स्यात्, यदुक्तं भगवत्यां "पभू णं भंते हरिणेगमेसी सक्कदूए इत्थीगब्भं णहसिरंसि वा रोमकूवंसि वा साहरित्तए वा णिहरित्तए वा? हंता पभू णो चेव णं तस्स गब्भस्स आबाहं वा विबाहं वा उप्पाएज्जा छविच्छेअं पुण करिज्जा" छविच्छेदं त्वक्छेदनं अकृत्वा गर्भस्य प्रवेशयितु

नशीलया उद्धुआए उद्धुतया प्रचंडपवनोद्धूतधूमादेरिव सिग्घाए शीघ्रया " छेयाए इति कुत्रचित्पाठस्तत्र छेकया विघ्नपरिहारदक्षया" दिव्वाए देवयोग्यया ईदृश्या देवगत्या वीइवयमाणे वीइवयमाणे अभिगच्छन् २ तिरियं तिर्यक् असंखेज्जाणं असंख्येयानां द्वीपसमुद्राणां मध्यंमध्येन मध्यभागेन जेणेव यत्रैव

उद्धुआए सिग्घाए दिव्वाए देवगईए वीइवयमाणे वीइवयमाणे तिरियमसंखेज्जाणं दीवसमुद्दाणं मज्झं मज्झेणं जेणेव जंबुद्दीवे दीवे भारहे वासे जेणेव माहणकुंडग्गामे णयरे जेणेव उसभदत्तस्स माहणस्स गिहे जेणेव देवाणंदा माहणी तेणेव उवागच्छइ उवागच्छित्ता आलोए समणस्स भगवओ

जंबुद्वीपो भरतक्षेत्रं, यत्रैव ब्राह्मणकुंडग्रामं नगरं, यत्रैव ऋषभदत्तस्य ब्राह्मणस्य गृहं, यत्रैव देवानंदा ब्राह्मणी, तत्रैव उपागच्छति, उपागत्य च आलोके दर्शनमात्रे श्रमणस्य भगवतो महावीरस्य प्रणामं

त्यक्त्वा अहासुहुमे यथासूक्ष्मान् सारान् इत्यर्थः, तान् पुद्गलान् परियाएइ पर्यादत्ते गृह्णातीत्यर्थः॥२७॥ परियाइत्ता पर्यादाय गृहीत्वा दुच्चंपि द्वितीयवारं वैक्रियसमुद्घातेन समुद्धंति पूर्ववत् प्रयत्नविशेषं करोतीत्यर्थः, तत् कृत्वा च उत्तरवेउव्वियं उत्तरवैक्रियं भवधारणीयापेक्षया अन्यत् इत्यर्थः,

डित्ता अहासुहुमे पुग्गले परियाएइ ॥ २७ ॥ परियाइत्ता दुच्चंपि वेउव्वियसमुग्घाएणं समोहणइ समोहणित्ता उत्तरवेउव्विअं रूवं विउव्वइ उत्तरवेउव्विअं रूवं विउव्वइत्ता ताए उक्किट्ठाए तुरियाए चवलाए चंडाए जयणाए

ईदृशं रूपं करोति कृत्वा च ताए तया उक्किट्ठाए उत्कृष्टया अन्येषां गतिभ्यो मनोहरया तुरियाए त्वरितया चित्तौत्सुक्यवत्या चवलाए कायचापल्यवत्या चंडाए चंडया तीव्रया जयणाए शेषगतिजय-

पुद्गलान् आदत्ते तंजहा तद्यथा रयणाणं रत्नानां कर्केतनादीनां (१) यद्यपि रत्नपुद्गला औदारिका वैक्रियशरीरकरणेऽसमर्थाः तत्र वैक्रियवर्गणापुद्गला एव उपयुज्यंते तदपि रत्नानां इव सारपुद्गला इति ज्ञेयं, तत्र वयराणं वज्राणां हीरकाणां ( २ ) वेरुलिआणं वैडूर्याणां नीलरत्नानां ( ३ )

रयणाणं वयराणं वेरुलिआणं लोहिअक्खाणं मसारगल्लाणं हंसगब्भाणं पुलयाणं सोगंधिआणं जोईरसाणं अंजणाणं अंजणपुलयाणं जायरूवाणं सुभगाणं अंकाणं फलिहाणं रिट्ठाणं अहावायरे पुग्गले परिसाडेइ परिसा-

तथा लोहिताक्ष १ मसारगल्ल २ हंसगर्भ ३ पुलक ४ सौगंधिक ५ ज्योतीरस ६ अंजन ७ अंजनपुलक ८ जातरूप ९ सुभग १० अंक ११ स्फटिक १२ रिष्टाख्याः १३ रत्नजातयस्तेषां च अहावायरेत्ति यथाबादरान् स्थूलान् असारान् इत्यर्थः, तान् पुद्गलान् परिसाडेइ परित्यजति परिसाडित्ता परित्यज्य

जावत्ति यावत्करणात् करयलपरिग्गहिअं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु इति प्राग्वद्वाच्यं, तथा मस्तके अंजलिं कृत्वा ज देवो आणवेइत्ति यद्देव आज्ञापयतीत्युक्त्वा आणाए विणएणं वयणं पडिसुणेइ आज्ञाया उक्तरूपाया यद्वचनं तद्विनयेन प्रतिशृणोति अंगीकरोति, प्रतिश्रुत्यच उत्तरपुरत्थिमं दिसिभागं ईशानकोणनामके दिग्विभागे इत्यर्थः तत्र अवक्कमइ अपक्रामति गच्छतीत्यर्थः

करयलजावत्तिकट्टु जं देवो आणवेइत्ति आणाए विणएणं वयणं पडिसुणेइ पडिसुणित्ता उत्तरपुरत्थिमं दिसिभागं अवक्कमइ अवक्कमित्ता वेउव्विअसमुग्घाएणं समोहणइ समोहणित्ता संखिज्जाइं जोअणाइं दंडं णिस्सरइ, तंजहा–

गत्वा च वेउव्वियसमुग्घाएणं समोहणइ वैक्रियसमुद्घातेन समुद्धंति वैक्रियशरीरकरणार्थं प्रयत्नविशेषं करोतीत्यर्थः, तत्कृत्वा च संखिज्जाइं जोअणाइं संख्येययोजनप्रमाणं दंडं दंडाकारं शरीरबाहल्य ऊर्ध्वाधः आयतं जीवप्रदेशकर्मपुद्गलसमूहं णिस्सरइ शरीरात् बहिर्निष्काशयतीत्यर्थः तत्कुर्वाणस्तु एवंविधान्

यावत् देवानंदाब्राह्मण्याः कुक्षेर्भगवंतं त्रिशलाक्षत्रियाण्याः कुक्षौ मुंच, योपि च त्रिशलाक्षत्रियाण्याः गर्भस्तमपि देवानंदायाः कुक्षौ मुंच, तथाकृत्वा च मम एअमाणत्तिअं मम एतां आज्ञप्तिं आज्ञां खिप्पामेव शीघ्रमेव पच्चप्पिणाहि प्रत्यर्पय, कार्यं कृत्वागत्य मयैतत्कार्यं कृतं इति शीघ्रं निवेदय इत्यर्थः

जेविअ णं से तिसलाए खत्तिआणीए गब्भे तंपिअणं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराहि, साहरित्ता मम एअमाणत्तिअं खिप्पामेव पच्चप्पिणाहि ॥ २६ ॥ तएणं से हरिणेगमेसी पायत्ताणिआहिवइ देवे सक्केणं देविंदेणं देवरण्णा एवं वुत्ते समाणे हट्ठजावहिअए

॥ २६ ॥ तएणं ततः स हरिणैगमेषी पदात्यनीकाधिपतिर्देवः शक्रेण देवेंद्रेण देवराजेन एवं उक्तः सन् हट्ठजावहियए इत्यादि, यावत्करणात् हट्ठतुट्ठचित्तमाणंदिए पिइमणे परमसोमणसिए धाराहयकयंबपुप्फगंपिव समूससिअरोमकूवे इत्यादि सर्वं वक्तव्यम्। अथैवंविधः सन् हरिणैगमेषी करयल-

येन सर्वं स्वचिंतितं शक्रो हरिणैगमेषिणे अकथयत्, तच्च आग्वत् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ तं गच्छ णं

माहणकुलेहिंतो तहप्पगारेसु उग्ग-भोग-राइण्ण-णाय-खत्तिअ-इक्खाग-हरिवंसकुलेसु वा, अण्णयेरसु वा, तहप्पगारेसु विसुद्धजाइकुलवंसेसु साहराविचए ॥ २५ ॥ तं गच्छ णं तुमं देवाणुप्पिआ ! समणं भगवं महावीरं माहणकुंडग्गामाओ णयराओ उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तिअकुंडग्गामे णयरे णायाणं खत्तियाणं सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारियाए तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिसि गब्भत्ताए साहराहि ।

तुमं देवाणुप्पिअत्ति यस्मात् कारणात् इंद्राणां एप आचारः तस्मात्कारणात् त्वं गच्छ देवानुप्रिय !

जण्णं अरिहंता वा, चक्क-बल-वा सुदेवा वा, अंतकुलेसु वा, पंत-तुच्छं-किविण दरिद्द-भिक्खागकुलेसु वा, आयाइंसु वा, आयाइंति वा, आइस्संति वा, कुच्छिसि गब्भत्ताए वक्कमिंसु वा, वक्कमंति वा, वक्कमिस्संति वा, णोचेव णं जोणीजम्मणणिक्खमणेणं णिक्खमिंसु वा, णिक्खमंति वा, णिक्खमिस्संति वा ॥२३॥

अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे णयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स भारिआए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिसि गब्भत्ताए वक्कंते ॥ २४ ॥

तं जीअमेअं तीअपच्चुपण्णमणागयाणं सक्काणं देविंदाणं देवराईणं अरिहंते भगवंते तहप्पगारेहिंतो अंत-पंत-तु च्छ-किविण-दरिद्द-वणीमग-

यासीति एवं अवादीत् ॥२१॥ किं तदित्याह, एवं खलु इत्यादिना साहराविचएत्ति पर्यंतेन सूत्रचतुष्ट-

एवं खलु देवाणुपिआ! ण एअं भूअं, ण एयं भवं, ण एअं भविस्सं, जण्णं अरिहंता वा, चक्कवलवासुदेवा वा, अंत-पंत-किविण-दरिद्द-तुच्छ-भिक्खाग-माहणकुलेसु वा, आयाइंसु वा, आयाइंति वा, आइस्संति वा, एवं खलु अरिहंता वा, चक्क-वल-वासुदेवा वा, उग्गकुलेसु वा, भोग राइण्ण-णाय-खत्तिअ-इक्खाग-हरिवंसकुलेसु वा, अण्णयरेसु वा, तहप्पगारेसु विसुद्धजाइकुलवंसेसु आयाइंसु वा, आयाइंति वा, आइस्संति वा ॥२२॥ अत्थि पुण एसेवि भावे लोगच्छेरयभूए अणंताहिं उसप्पिणिओसप्पिणीहिं वइक्कंताहिं समुप्पज्जइ णामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइयस्स अणिज्जिण्णस्स उदएणं

णायाणंति ज्ञातानां श्रीऋषभस्वामिवंश्यानां क्षत्रियविशेषाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य भार्यायास्त्रिशलाक्षत्रियाण्याः कुक्षौ गर्भतया मोचयितुं तथा जेविअणं इत्यादि-योऽपि च त्रिशलायाः क्षत्रियाण्या गर्भः पुत्रिकारूपः तंपिअणंति तमपि देवानंदाया ब्राह्मण्याः कुक्षौ मोचयितुं मम

सिद्धत्थस्स खत्तिअस्स कासवगुत्तस्स भारियाए तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविंत्तए। जेविअ णं से तिसलाए खत्तियाणीए गब्भे तंपिय णं देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए साहराविंत्तएत्ति कट्टु एवं संपेहेइ संपेहित्ता हरिणेगमेसिं पायत्ताणिआहिवई देवं सद्दावेइ सद्दावित्ता एवं वयासी ॥ २१ ॥

युक्तं इति संबंधः, इति कट्टुत्ति कृत्वा एवं संपेहेइत्ति इति विचारयति, विचार्य च हरिणेगमेसिंति हरिणैगमेषिणं पायत्ताणियाहिवइत्ति पदातिकटकनायकं देवं सद्दावेइत्ति आकारयति आकार्य एवंव-

प्रकारेभ्यः पूर्वोक्तस्वरूपेभ्यः अंत्यादिकुलेभ्यस्तथाप्रकारेषु उग्रादीनां अन्यतरेषु कुलेषु साहराविचएत्ति

गारेहिंतो पंतकुलेहिंतो, तुच्छदरिद्दभिक्खागकिविणकुलेहिंतो वा, माहण-कुलेहिंतो, तहप्पगारेसु उग्गकुलेसु वा, भोगकुलेसु वा, रायण्णणायखत्ति-अहरिवंसकुलेसु वा, अण्णयरेसु वा तहप्पगारेसु विसुद्धजाइकुलवंसेसु जाव रज्जसिरिं कारेमाणेसु पालेमाणेसु साहरावित्तए । तं सेयं खलु ममावि समणं भगवं महावीरं चरमतित्थयरं पुव्वतित्थयरणिद्दिट्ठं माहणकुंडगा-माओ णयराओ उसभदत्तस्स माहणस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छीओ खत्तियकुंडग्गामे णयरे णायाणं खत्तिआणं

मोचयितुं तं सेयं खलुत्ति तत् श्रेय. खलु युक्तमेतन्ममापि श्रमणं भगवंतं महावीरं देवानंदाकुक्षेः

ष्यंति च, अयमर्थः यद्यपि कदाचित् कर्मोदयेन आश्चर्यभूतस्तुच्छादिकुलेषु अर्हदादीनां अवतारो भवति, परं जन्म तु कदाचिन्न भूतं, न भवति, न भविष्यति च ॥ १९ ॥ अयं च णं इत्यादितः गब्भत्ताए वक्कंते इति यावत्सुगमम् ॥ २० ॥ तं जीअमेयंति तत्तस्मात् जीतं एतत् आचार एष इत्यर्थः

वा, णिक्खमंति वा, णिक्खमिस्संति वा ॥ १९ ॥ अयं च णं समणे भगवं महावीरे जंबुद्दीवे दीवे भारहे वासे माहणकुंडग्गामे णयरे उसभदत्तस्स माहणस्स केडालसगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिसि गब्भत्ताए वक्कंते ॥ २० ॥ तं जीअमेयं तीअपच्चुप्पण्णमणागयाणं सक्काणं देविंदाणं देवराईणं अरिहंते भगवंते तहप्प-

केषां ? इत्याह सक्काणंति शक्राणां देवेंद्राणां देवराजानां किंविशिष्टानां ? तीअपच्चुप्पण्णमणागयाणंति अतीतवर्तमानानागतानां, कोऽसौ ? इत्याह यत् अरिहंतेत्ति अर्हतो भगवतः तहप्पगारेहिंतोत्ति तथा-

स्थितिको देवो जातस्ततश्च्युत्वा तेन मरीचिभववद्धेन नीचैर्गोत्रकर्मणा भुक्तशेषेण सप्तविंशे भवे (२७) ब्राह्मणकुंडग्रामे नगरे ऋषभदत्तब्राह्मणस्य देवानंदाया ब्राह्मण्याः कुक्षौ उत्पन्न.। ततः शक्र एवं चिंतयति, जण्णमित्यादि–यत् एवं नीचैर्गोत्रोदयेन अर्हदादयः(४)अंतादिकुलेषु आगता., आगच्छंति,

जण्णं अरिहंता वा, चक्कवट्टी वा, बलदेवा वा, वासुदेवा वा, अंतकुलेसु वा, पंतकुलेसु वा, तुच्छ-दरिद्द-भिक्खाग-किविण-माहणकुलेसु वा, आयाइंसु वा, आयाइंति वा, आइस्संति वा, कुच्छिसि गब्भत्ताए वक्कमिंसु वा, वक्कमंति वा, वक्कमिस्संति वा, णो चेव णं जोणीजम्मणणिक्खमणेणं णिक्खमिंसु

आगमिष्यंति च, कुक्षौ गर्भतया उत्पन्ना वा, उत्पद्यन्ते वा, उत्पत्स्यन्ते वा, परं णोचेवणंति नैव जोणीजम्मणणिक्खमणेणंति योन्या यत् जन्मार्थं निष्क्रमणं तेन निष्क्रांता., निष्क्रामंति, निष्क्रमि-

देवे निद्राणेऽपि न ते निवारितास्ततः क्षणात् प्रबुद्धेन वासुदेवेन आः! पाप! मदाज्ञापालनादपि तव गीतश्रवणंप्रियं! लभस्व तर्हि तत् फलं इत्युक्त्वा तत्कर्णयोस्तप्तं त्रपुं क्षिप्तवान्, तेन च कर्णयोः कीलकप्रक्षेपकारणं कर्मोपार्जितवान्, एवं च कृतानेकदुष्कर्मा ततो मृत्वा एकोनविंशे (१९)भवे सप्तमनरके नारकतया उत्पन्नस्ततो निर्गत्य विंशतितमे भवे (२०) सिंहस्ततो मृत्वा एकविंशतितमे (२१) भवे चतुर्थनरके, ततो निर्गत्य बहून् भवान् भ्रांत्वा द्वाविंशे भवे(२२)मनुष्यत्वं प्राप्योपार्जितशुभकर्मा त्रयोविंशे भवे(२३) मूकायां राजधान्यां धनंजयस्य राज्ञो धारिण्या देव्याः कुक्षौ चतुरशीतिलक्षपूर्वायुःप्रियमित्रनामा चक्रवर्ती बभूव, स च पोट्टिलाचार्यसमीपे दीक्षां गृहीत्वा वर्षकोटिं यावत्परिपाल्य चतुर्विंशतितमे भवे(२४)महाशुक्रे देवस्ततश्च्युतः पंचविंशे भवे(२५)इहैव भरतक्षेत्रे छत्रिकायां नगर्यां जितशत्रुनृपतेर्भद्रादेव्याः कुक्षौ पंचविंशतिवर्षलक्षायुर्नंदनो नाम पुत्रः, स च पोट्टिलाचार्यपार्श्वे चारित्रं गृहीत्वा यावज्जीवं मासक्षपणैर्विंशतिस्थानकाराधनेन च तीर्थकरनामकर्म निकाच्य वर्षलक्षं चारित्रपर्यायं परिपाल्य मासिकया संलेखनया मृत्वा षड्विंशतितमे भवे (२६) प्राणतकल्पे पुष्पोत्तरावतंसकविमाने विंशतिसागरोपम-

शुर्भारद्वाजनामा विप्रस्त्रिदंडी भूत्वा मृतः (१२), त्रयोदशे भवे माहेंद्रकल्पे मध्यस्थितिः सुरः (१३), ततश्च्युतः कियत्कालं संसारे भ्रांत्वा चतुर्दशे भवे राजगृहे चतुस्त्रिंशल्लक्षपूर्वायुः स्थावरो नाम विप्रस्त्रिदंडी भूत्वा मृतः(१४), पंचदशे भवे ब्रह्मलोके मध्यस्थितिको देवः (१५), षोडशे भवे कोटिवर्षायुर्विश्वभूतिनामा युवराजपुत्रः, संभूतिमुनिपादांते चारित्रं गृहीत्वा वर्षसहस्रं दुस्तपं तपस्तप्यमानो मासोपवासपारणायां मथुरायां गोचरचर्यार्थं गतस्तत्र एकया धेन्वा तपःकृशत्वाद्भुवि पातितः, तत् दृष्ट्वा च परिणयनार्थं तत्रागतेन विशाखनंदिनाम्ना पितृव्यपुत्रेण हसितः सन् कुपितस्तां धेनुं शृंगयोर्गृहीत्वा आकाशे भ्रमितवान्निदानं चैवं कृतवान्, यदनेन उग्रतपसा भवांतरे भूयिष्टवीर्यो भूयासं(१६), ततो मृत्वा सप्तदशे भवे महाशुक्रे उत्कृष्टस्थितिः सुरः(१७), ततश्च्युतोऽष्टादशे(१८) भवे पोतनपुरे स्वपुत्रीकामुकस्य प्रजापते राज्ञो मृगावत्याः पुत्र्याः पद्मायाश्च कुक्षौ चतुरशीतिलक्षवर्षायुस्त्रिपृष्ठनामा वासुदेवस्तत्र बाल्येऽपि प्रतिवासुदेवशालिक्षेत्रविघ्नकारिणं सिंहं विमुक्तशस्त्रः कराभ्यां विदारितवान्, क्रमेण च वासुदेवत्वं प्राप्तः, एकदा च शय्यापालकं आदिष्टवान् यदस्मासु निद्राणेषु एते गायना गीतगानान्निवारणीयास्तेन च गीतरसासक्तेन वासु-

भाषिणां अनंत एव संसार इति नियमाभावात्, श्रीभगवत्यादिवहुग्रंथानुसारेण उत्सूत्रभाषिशिरोमणेर्जमालिनिह्नवस्याऽपि परिमितभवत्वदर्शनात्, न चोत्सूत्रमिश्रत्वकथनेऽपि अस्य मरीचिवचनस्य उत्सूत्रत्वं अपगच्छति, विषमिश्रितान्नस्यापि विषत्वमेवेत्यलं प्रसंगेन " ]

ततोऽनालोचिततत्कर्मा चतुरशीतिलक्षपूर्वाणि आयुः परिपाल्य मृत्वा चतुर्थे (४) भवे ब्रह्मलोके दशसागर स्थितिः सुरः संजातस्ततः च्युतः पंचमे (५) भवे कोल्लाकसन्निवेशेऽशीतिलक्षपूर्वायुर्विप्रो भूत्वा विषयासक्तो निःशूकः प्रांते त्रिदंडी भूत्वा वहुकालं संसारे भ्रांतस्ते हि भवाः स्थूलभवमध्ये न गण्यंते, ततः षष्ठे(६) भवे स्थूणायां नगर्यां द्वासप्ततिलक्षपूर्वायुः पुष्पनामा द्विजस्त्रिदंडी भूत्वा मृतः, सप्तमे (७)भवे सौधर्मकल्पे मध्यमस्थितिः सुरोऽभूत्, ततश्च्युतोऽष्टमे (८) भवे चैत्यसन्निवेशे षष्टिलक्षपूर्वायुः अग्निद्योतो नाम विप्रस्त्रिदंडी भूत्वा मृतः, (९) नवमे भवे ईशानदेवलोके मध्यस्थितिकः सुरः, ततश्च्युतो दशमे भवे (१०) मंदरसंनिवेशे षट्पंचाशल्लक्षपूर्वायुरग्निभूतिनामा ब्राह्मणोऽन्ते त्रिदंडी भूत्वा मृतः, एकादशे भवे (११) तृतीयकल्पे मध्यस्थितिकः सुरस्ततश्च्युतो द्वादशे भवे श्वेतांव्यां नगर्यां चतुश्चत्वारिंशल्लक्षपूर्वा-

करोमीति क्रमेण च नीरोगो जातः, एकदा कपिलनामा राजपुत्रो देशनां निशम्य प्रतिबुद्धो मरीचिना प्रोक्तो भो कपिल! याहि साधुसमीपे चारित्रं गृहाण, तदा कपिलेन प्रोक्तं स्वामिन्! भवद्दर्शने एव व्रतं ग्रहीष्यामि, तदा मरीचिरुवाच भो कपिल! श्रमणास्त्रिदंडविरता अहं तु त्रिदंडवानित्यादि सर्वं स्वरूपं कथितं तथापि स बहुलकर्मा चारित्रपराङ्मुखः प्रोवाच, किं भवद्दर्शने सर्वथा धर्मो नास्ति? तदा मरीचिना एष मम योग्य. शिष्य इति विचिंत्य उक्तं "कविला! इत्थपि इहयंपि" कपिल! जैनमार्गेऽपि धर्मोऽस्ति मम मार्गेपि विद्यते इति, तत् श्रुत्वा च कपिलस्तत्पार्श्वे प्रव्रजितः। मरीचिरपि अनेन उत्सूत्रवचनेन कोटाकोटिसागरप्रमाणं संसारं उपार्जयामास।

[ "यत्तु किरणावलीकारेण प्रोक्त "कविला! इत्थंपि इहयंपिचि" वचनं उत्सूत्रमिश्रितमिति तदुत्सूत्रभाषिणां नियमादनंतः संसार इति स्वमतस्थापनरसिकतयेति ज्ञेयं, इद हि तन्मतं–उत्सूत्र भाषिणस्तावन्नियमादनंत एव संसारः स्यात्, यदि च इदं मरीचिवचनमुत्सूत्रमित्युच्यते तदा अस्यापि अनंत. संसारः प्रसज्यते न चाऽसौ संपन्नस्तदिदं उत्सूत्रमिश्रितमिति, तच्चायुक्तं, उत्सूत्र

वंदित्वाऽवदत्; भो मरिचे ! यावंतो लाभास्ते त्वयैव लब्धाः यतस्त्वं तीर्थंकरो वासुदेवश्चक्री च भविष्यसि, अहं च तव पारिव्राज्यं न वंदे किंतु त्वं चरमतीर्थंकरो भविष्यसीति वंदे, इति पुनः २ स्तुत्वा भरतः स्वस्थानं गतः।

मरीचिरपि तच्छ्रुत्वा हर्षोद्रेकात्त्रिपदीं आस्फोट्य नृत्यन्निदं अवोचत् । यतः—"प्रथमो वासुदेवोऽहं, मूकायां चक्रवर्त्यहं । चरमस्तीर्थराजोऽहं, ममाहो ! उत्तमं कुलम् ॥ १ ॥ आद्योऽहं वासुदेवानां, पिता मे चक्रवर्त्तिनाम् । पितामहो जिनेंद्राणां ममाहो ! उत्तमं कुलम् ॥ २ ॥" इत्थं च मदकरणेन नीचैर्गोत्रं बद्धवान् । यतः—" जाति १ लाभ २ कुलै ३ श्वर्य ४ बल ५ रूप ६ तपः ७ श्रुतैः ८ । कुर्वन्मदं पुनस्तानि, हीनानि लभते जनः ॥ ३ ॥ " ततो भगवति निर्वृते प्राग्वज्जनान् प्रतिबोध्य साधूनां शिष्यान् कुर्वन् तैः सह विहरति ।

एकदा च ग्लानीभूतस्य तस्य न कोऽपि वैयावृत्त्यं करोति, तदा स चिंतितवान्, अहो एते बहुपरिचिता अपि परकीया एव निर्ग्रंथाः ! ततो यदि नीरोगो भवामि तदैकं वैयावृत्त्यकरं शिष्यं

अहं तु न तथेति मम शिरसि चूडा क्षुरमुंडनं चास्तु। तथा श्रमणानां सर्वेभ्य. प्राणातिपातादिभ्यो विरतिर्मम तु स्थूलेभ्यः सास्तु। शीलसुगंधाः साधवो नाह तथेति मम चदनादिविलेपनमस्तु। तथा अपगतमोहा. श्रमणा अहं तु मोहाच्छादित इति मे छत्रकं अस्तु। श्रमणा अनुपानच्चरणा मम तु चरणयोरुपानदस्तु। श्रमणा निष्कपाया अहं तु सकषाय इति मम काषायं वस्त्रं अस्तु। श्रमणा. स्नानाद्विरता. मम तु परिमितजलेन स्नानं पानं चास्तु।" एवं स्वबुद्ध्या परिव्राजकवेषं विकल्पितवान्, ततस्तं विरूपवेषं विलोक्य सर्वे जना धर्मं पृच्छंति, तत्पुरश्च साधुधर्मं प्ररूपयति, देशनाशक्त्या च अनेकान् राजपुत्रादीन् प्रतिबोध्य भगवत. शिष्यतया ददाति, भगवता सहैव च विहरति।

एकदा भगवानयोध्यायां समवसृतस्तत्र वंदनार्थं आगतेन भरतेन पृष्टः, स्वामिन्नस्यां पर्षदि कोऽपि भरतक्षेत्रेऽस्यां चतुर्विंशतिकायां भाविजिनोऽस्ति? भगवानुवाच, भरत! तव पुत्रोय मरीचि-नामास्यां अवसर्पिण्यां वीरनामा चतुर्विंशत्तीर्थकृत् १ विदेहे मूकाराजधान्यां प्रियमित्रनामा चक्री २ अत्रैव भरते प्रथमो वासुदेवश्च ३ भविष्यतीति श्रुत्वा हर्षितो भरतो गत्वा त्रिःप्रदक्षिणीकृत्य मरीचिं

ब्राह्मणीकुक्षौ उत्पन्न इति योगः, तच्च नीचैर्गोत्रं भगवता स्थूलसप्तविंशतिभवापेक्षया तृतीयभवे बद्धं, तथाहि—प्रथमभवे पश्चिममहाविदेहे नयसारनामा ग्रामपतिः, स चैकदा काष्ठनिमित्तं वनं गतस्तत्र मध्याह्ने भोजनसमये सार्थभ्रष्टान् साधून् दृष्ट्वा हृष्टश्चिंतितवान्, अहो मे भाग्यं ! यदस्मिन्समये अतिथिसमागमः, ततः तेन परमप्रमोदेन साधवोऽशनपानादिभिः प्रतिलंभिताः, पश्चाद्भोजनानंतरं साधून्नत्वा उवाच, चलंतु महाभागा ! मार्गं दर्शयामि, ततो मार्गे गच्छद्भिः साधुभिर्योग्योयमिति धर्मोपदेशेन सम्यक्त्वं प्रापितः, (१) अंते च नमस्कारस्मरणपूर्वं मृत्वा द्वितीयभवे सौधर्मदेवलोके पल्योपमायुर्देवो जातः (२) ततश्च्युत्वा तृतीये भवे (३) मरीचिनाम्ना भरतचक्रवर्तिपुत्रो जातः, स च प्राप्तवैराग्यः श्रीऋषभदेवपार्श्वे प्रव्रजितः, स्थविरपार्श्वे एकादशांगीं अधीतश्च, एकदा च ग्रीष्मकाले तापादिपीडितश्चिंतितवान्, अतिदुर्वहोऽयं संयमभारो, मया निर्वोढुं न शक्यते ! गृहे गमनं च सर्वथा अनुचितं इति ध्यात्वाऽभिनवं वेषं रचितवान्, तथाहि—

"श्रमणास्त्रिदंडविरता अहं तु न तथा इति मम त्रिदंडं चिह्नमस्तु। श्रमणा द्रव्यभावाभ्यां मुंडा

इमानि दशापि आश्चर्याणि अनंतकालातिक्रमे अस्यां अवसर्पिण्यां जातानि । एवं च कालसाम्यात् शेषेष्वपि चतुर्षु भरतेषु पंचसु ऐरवतेषु च प्रकारांतरेण दश दश आश्चर्याणि ज्ञेयानि ।

अथ दशानां आश्चर्याणां तीर्थव्यक्तिः । अष्टाधिकशतसिद्धिगमनं ऋषभतीर्थे । १ । हरिवंशोत्पत्ति॰ शीतलतीर्थे । २ । अपरकंकागमन श्रीनेमितीर्थे । ३ । स्त्रीतीर्थंकरी मल्लितीर्थे । ४ । असयतपूजा सुविधिजिनतीर्थे । ५ । शेषाणि च उपसर्ग १ गर्भापहार २ अभावितपर्षदा ३ चमरोत्पात ४ चंद्रसूर्यावतरणलक्षणानि पंच आश्चर्याणि श्रीवीरतीर्थे । एक तावत् आश्चर्यं इदं

णामगुत्तस्स वा कम्मस्स अक्खीणस्स अवेइयस्स अणिज्जिण्णस्स उदएणं

अपरं च णामगुत्तस्स नाम्ना गोत्रं इति प्रसिद्धं यत्कर्म गोत्राभिधानं कर्मेत्यर्थः तस्य, किं विशिष्टस्य? अक्खीणस्सत्ति अक्षीणस्य, स्थितेः अक्षयेण अवेइयस्सत्ति अवेदितस्य, रसस्य अपरिभोगेन अणिज्जिण्णस्सत्ति अनिर्जीर्णस्य, जीवप्रदेशेभ्योऽपरिशटितस्य ईदृशस्य गोत्रस्य नीचैर्गोत्रस्य उदयेन भगवान्

कृत्य सौधर्मेन्द्रात्मरक्षकाँस्त्रासयन् सौधर्मावतंसकविमानवेदिकायां पादं मुक्त्वा शक्रं आक्रोशयामास, ततो रुष्टेन शक्रेण जाज्वल्यमानं वज्रं तं प्रति मुक्तं, ततोऽसौ भीतो भगवत्पादयोर्लीनस्ततो ज्ञातव्यतिकरेण इंद्रेण सहसागत्य चतुरंगुलाप्राप्तं वज्रं गृहीतं, भगवत्प्रसादान्मुक्तोसीत्युक्त्वा चमरो मुक्त इदं चमरस्योर्ध्वगमनं आश्चर्यम् ॥ ८ ॥

अट्ठसयत्ति—एकस्मिन्समये उत्कृष्टावगाहनावंतोऽष्टाधिकशतमिता न सिध्यंति ते च अस्यां अवसर्पिण्यां सिद्धाः ॥ यतः ॥ "वृषभो १ वृषभस्य सुता ९९, भरतेन विवर्जिताश्च नवनवतिः । अष्टौ ८ भरतस्य सुताः, शिवं गता एकसमयेन । १ ।" ९ ॥

असंजयाणत्ति—असंयता असंयमवंतः आरंभपरिग्रहप्रसक्तास्तेषां पूजा, संयता एव सर्वदा पूज्यंते, अस्यां अवसर्पिण्यां तु नवमदशजिनयोरंतरे असंयतानां अपि ब्राह्मणादीनां पूजा प्रवृत्ता इति आश्चर्यम् ॥ १० ॥

भार्या वनमाला नाम्नी सुरूपेति स्वांतःपुरे क्षिप्ता, स च शालापतिस्तस्या वियोगेन विकलो जातो यं कंचन पश्यति तं वनमाला वनमालेति जल्पयति, एवं च कौतुकाक्षिप्तैरनेकैर्लोकैः परिवृतः पुरे भ्रमन् वनमालया समं क्रीडता राज्ञा दृष्टस्ततश्चास्माभिरनुचितं कृतं इति चिंतयंतौ तौ दंपती तत्क्षणाद्विद्युत्पातेन मृतौ हरिवर्षक्षेत्रे युगलित्वेन समुत्पन्नौ, शालापतिश्च तौ मृतौ श्रुत्वा आः ! पापिनोः पाप लब्धं ! इति सावधानोऽभूत्, ततोऽसौ वैराग्यात्तपस्तप्त्वा व्यंतरोभूद्विभंगज्ञानेन च तौ दृष्ट्वा चिंतितवान्, अहो ! इमौ मद्वैरिणौ युगलसुखं अनुभूय देवौ भविष्यतस्तत इमौ दुर्गतौ पातयामीति विचिंत्य स्वशक्त्या संक्षिप्तदेहौ तौ इहानीतवान्, आनीय च राज्यं दत्वा सप्तव्यसनानि शिक्षितौ, ततस्तौ तथाभूतौ नरकं गतौ, अथ तस्य वंशो हरिवंशः । अत्र युगलिकस्यात्रानयनं, शरीरायुःसंक्षेपणं, नरकगमनं चेति सर्वं आश्चर्यम् ॥ ७ ॥

चमरुप्पाओत्ति—चमरस्य असुरकुमारराजस्य उत्पातः, स चैवं—पूरणनामा ऋषिस्तपस्तप्त्वा चमरेंद्रतया उत्पन्नः, स च नवोत्पन्नः शिरःस्थं सौधर्मेन्द्रं विलोक्य कोपाक्रांतः परिघं गृहीत्वा श्रीवीरं शरणी-

धातकीखंडभरते अपरकंकाराजधानीप्रभोः पद्मोत्तरस्य स्त्रीलुब्धस्य पुरतो रूपवर्णनं कृतं, तेनापि स्वमित्रदेवेन द्रौपदी स्वगृहं आनायिता । इतश्च पांडवमात्रा कुंत्या विज्ञप्तेन कृष्णेन द्रौपदीगवेषण-व्यग्रेण नारदमुखादेव स समाचारो लब्धस्ततः सोऽपि आराधितसुस्थितदेवताप्रदत्तमार्गो द्विलक्षयोजनायामं लवणसमुद्रं अतिक्रम्य अपरकंकां गतस्तत्र च तर्जितपांडवं पद्मोत्तरं नरसिंहरूपकरणेन विजित्य द्रौपदीवचसा जीवंतं मुक्त्वा च द्रौपद्या सह पश्चाद्वलितः, वलमानश्च शंखं आपूरितवान्, तच्छब्दं श्रुत्वा च तत्र विहरमानमुनिसुव्रतजिनवचनेन कृष्णं आगतं ज्ञात्वा मिलनोत्सुकः कपिलवासुदेवोऽपि जलधितटमुपेत्य शंखं आपूरितवान्, ततो मिथः शंखशब्दौ मिलितौ, ततोऽस्यां अवसर्पिण्यां कृष्णस्य अपरकंकागमनं आश्चर्यम् ॥ ५ ॥

अवयरणं चंदसूराणंति—यत् कौशांब्यां भगवतः श्रीवर्धमानस्वामिनो वंदनार्थं मूलविमानेन सूर्याचंद्रमसौ उत्तीर्णौ तदाश्चर्यम् ॥ ६ ॥

हरिवंसकुलुप्पत्तित्ति—सा चैवं, कौशांब्यां नगर्यां सुमुखनाम्ना राज्ञा वीरकस्य शालापते-

तस्यास्तापेन षण्मासीं यावल्लोहितवर्चोबाधां अनुभूतवान् । तदेवं नामस्मरणशमितसकलदुःखस्य भगवतोप्येवं यदुपसर्गस्तदाश्चर्यम् ॥ १ ॥

गब्भहरणंति–गर्भस्य हरणं उदरांतरे मोचनं, तत्कस्यापि जिनस्य न भूतपूर्वं श्रीवीरस्य जातं इत्याश्चर्यम् ॥ २ ॥

इत्थीतित्थंति–तीर्थंकरा हि भगवंतः पुरुषोत्तमा एव भवंति, अत्रावसर्पिण्यां च मिथिलापति-कुंभराजस्य पुत्री मल्लिनाम्नी एकोनविंशतितमजिनत्वेनोत्पन्ना तीर्थं प्रवर्तितवतीति आश्चर्यम् ॥ ३ ॥

अभावियापरिसत्ति–अभाविता पर्षत्, भगवतो हि देशना कदापि निष्फला न भवति अत्र च समुत्पन्नकेवलेन श्रीवर्धमानस्वामिना प्रथमसमवसरणे देशना दत्ता न च तया कस्यापि विरति-परिणामो जात इत्याश्चर्यम् ॥ ४ ॥

कण्हस्सत्ति–कृष्णस्य नवमवासुदेवस्य द्रौपदीनिमित्तं अपरकंकागमनं आश्चर्यं, तच्चैवं–पुरा किल पांडवभार्यया द्रौपद्या असंयतत्वान्नारदस्य अभ्युत्थानादि न कृतं, तेन च रुष्टेन तस्याः कष्टे पातनार्थं

तत्र गत्वा एनं अर्थं तस्मै निवेदय, त्वां च वृद्धवणिजमिव हितोपदेशकत्वाज्जीवंतं रक्षिष्यामीति श्रुत्वा भीतोऽसौ मुनिर्भगवदग्रे सर्वं व्यतिकरं कथितवान्, ततो भगवता उक्तं, भो आनंद! शीघ्रं त्वं गौतमादीन्मुनीन् कथय यत् एष गोशाल आगच्छति न केनाप्यस्य संभाषणं कर्तव्यं इतस्ततः सर्वेऽपसरंतु, ततस्तैस्तथाकृते गोशाल आगत्य भगवंतं अवादीत्, भो काश्यप! किमेवं वदसि ? यदयं गोशालो मंखलिपुत्र इत्यादि, स तव शिष्यस्तु मृतः, अहं तु अन्य एव परीषहसहनसमर्थं तच्छरीरं ज्ञात्वा अधिष्ठाय स्थितोऽस्मि, एवं च भगवत्तिरस्कारं असहमानौ सुनक्षत्रसर्वानुभूती अनगारौ मध्ये उत्तरं कुर्वाणौ तेन तेजोलेश्यया दग्धौ स्वर्गं गतौ। ततो भगवता उक्तं, भोगोशाल! स एव त्वं नाऽन्यो मुधा किं आत्मानं गोपायसि ? नह्येवं आत्मा गोपयितुं शक्यः! यथा कश्चिच्चौर आरक्षकैर्दृष्टोंऽगुल्या तृणेन वा आत्मानं आच्छादयति स किं आच्छादितो भवति ? एवं च प्रभुणा यथास्थितेऽभिहिते स दुरात्मा भगवदुपरि तेजोलेश्यां मुमोच, सा च भगवंतं त्रिःप्रदक्षिणीकृत्य गोशालकशरीरं प्रविष्टा, तया च दग्धशरीरो विविधा वेदना अनुभूय सप्तमरात्रौ मृतः !! भगवानपि

नामा अस्माकं एव शिष्यीभूतोऽसत्त एव किंचिद्वहुश्रुतीभूतो मुधा स्वं जिनं ख्यापयति, ततः सर्वतः प्रसिद्धां इमां वार्तां आकर्ण्य रुष्टो गोशालो गोचरचर्यागतं आनंदनामानं भगवच्छिष्यं जगाद, भोआनंद ! एकं दृष्टांतं शृणु, यथा–केचित् वणिजो धनोपार्जनाय विविधक्रयाणकपूर्णशकटाः परदेशं गच्छंतोऽरण्यं प्रविष्टास्तत्र जलाभावेन तृषाकुला जलं गवेषयंतः चत्वारि वल्मीकशिखराणि पश्यंतिस्म, ततस्तैरेकं शिखरं स्फोटितं, तस्माद्विपुलं जलं निर्गतं, तेन जलेन गतपिपासाः पयःपात्राणि पूरितवंतस्तत्र एकेन वृद्धेनोक्तं, सिद्धं अस्माकं समीहितं, अथ मा स्फोटयंतु द्वितीयं शिखरं इति निवारिता अपि द्वितीयं स्फोटयामासुस्तस्माच्च सुवर्णं प्रापवंतस्तथैव वृद्धवारिता अपि तृतीयं स्फोटितवंतस्तस्माद्रत्नानि प्राप्य तथैव बहुवारिता अपि लोभांधाश्चतुर्थं अपि स्फोटयंतिस्म, तस्माच्च प्रादुर्भूतेन दृष्टिविषसर्पेण सर्वेपि स्वदृष्टिपातेन पंचत्वं प्रापिताः, स हितोपदेशको वणिक् तु न्यायित्वात् आसन्नदेवतया स्वस्थाने मुक्तः, एवं तव धर्माचार्योपि एतावत्या स्वसंपदा असंतुष्टो यथातथाभाषणेन मां रोषयति तेनाहं स्वतपस्तेजसा तं धक्ष्यामि, ततस्त्वं शीघ्रं

भूतः अणंताहिंति अनंतासु उत्सर्पिण्यवसर्पिणीषु व्यतिक्रांतासु ईदृशः कश्चित्पदार्थ उत्पद्यते, तत्रास्यां अवसर्पिण्यां ईदृशानि दश आश्चर्याणि जातानि । यथा–"उवसग्ग १ गब्भहरणं २, इत्थीतित्थं ३ अभाविआ परिसा ४ । कण्हस्स अवरकंका ५, अवयरणं चंदसूराणं ६ ॥ १ ॥ हरिवंसकुलुप्पत्ती ७, चमरुप्पाओ अ ८ अट्ठसयसिद्धा ९ । अस्संजयाण पूआ १०, दसवि अणंतेण कालेण ॥ २ ॥" व्याख्या-'उवसग्गत्ति'-उपसर्गा उपद्रवाः, ते हि श्रीवीरस्वामिनः छद्मस्थावस्थायां अग्रे वक्ष्यमाणा बहवोऽभवन्, किंच अस्य भगवतः केवल्यवस्थायां अपि स्वप्रभावप्रशमितसर्वोपद्रवस्यापि स्वशिष्याभासेन गोशालकमात्रेणापि उपद्रवः कृतस्तथाहि ।

एकदा श्रीवीरो विहरन् श्रावस्त्यां समवसृतः, गोशालकोऽपि जिनोहमिति लोके ख्यापयन् तत्रागतः, ततो द्वौ जिनौ श्रावस्त्यां वर्त्तेते इति लोके प्रसिद्धिर्जाता, तां श्रुत्वा श्रीगौतमेन भगवान् पृष्टः, स्वामिन् ! कोऽसौ द्वितीयो जिन इति स्वं ख्यापयति ? श्रीभगवानुवाच, गौतम ! नायं जिनः, किंतु शरवणग्रामवासी संखलिसुभद्राभ्यां गोबहुलब्राह्मणगोशालायां जातत्वात् 'गोशाल

तेषां कुलेषु राइण्णकुलेसुवत्ति राजन्याः श्रीऋषभदेवेन मित्रस्थाने स्थापिता. तेषां कुलेषु इक्खागत्ति इक्ष्वाकाः श्रीऋषभदेववंशोद्भवास्तेषां कुलेषु खत्तिअत्ति क्षत्रियाः श्रीआदिदेवेन प्रजालोकतयास्थापितास्तेषां कुलेषु हरिवंसत्ति तत्र 'हरीति' पूर्वभववैरिसुरानीतहरिवर्षक्षेत्रयुगल तस्य वंशो हरिवंशस्तत्-

खत्तिअकुलेसु वा, हरिवंसकुलेसु वा, अण्णयरेसु वा, तहप्पगारेसु विसुद्धजाइकुलवंसेसु आयाइंसु वा, आयाइंति वा, आयाइस्संति वा ॥ १८ ॥ अत्थि पुण एसेवि भावे लोगच्छेरयभूए अणंताहिं उस्सप्पिणिओसप्पिणीहिं वइक्कंताहिं समुप्पज्जइ ॥ [ ग्रं० १०० ]

कुलेषु अण्णयरेसुवत्ति अन्यतरेषु विशुद्धे जातिकुले यत्र एवंविधेषु वंशेषु, तत्र जातिर्मातृपक्षः, कुल पितृपक्षः, ईदृशेषु कुलेषु आगता आगच्छंति आगमिष्यंति च न तु पूर्वोक्तेषु ॥ १८ ॥ तर्हि भगवान्कथं उत्पन्न? इत्याह । अत्थिपुणेत्यादि–अस्ति पुन. एषोऽपि भावो भवितव्यताख्यः लोके आश्चर्य-

दरिद्दकुलेसुवत्ति निर्द्धनकुलेषु किविणकुलेसुवत्ति कृपणकुलेषु अदातृकुलेषु इत्यर्थः भिक्खागकुलेसुवत्ति भिक्षाकास्तालाचरास्तेषां कुलेषु तथा माहणकुलेसुवत्ति ब्राह्मणकुलेषु तेषां भिक्षुकत्वात्, एतेषु कुलेषु आयाइंसुवत्ति आयाता अतीतकाले आयाइंतिवत्ति आगच्छंति वर्तमानकाले आयाइस्संतिवत्ति

वा, तुच्छकुलेसु वा, दरिद्दकुलेसु वा, किविणकुलेसु वा, भिक्खागकुलेसु वा,
माहणकुलेसु वा, आयाइंसु वा, आयाइंति वा, आयाइस्संति वा ॥ १७ ॥
एवं खलु अरिहंता वा, चक्कवट्टी वा, बलदेवा वा, वासुदेवा वा,
उग्गकुलेसु वा, भोगकुलेसु वा, राइण्णकुलेसु वा, इक्खागकुलेसु वा,

आगमिष्यंति अनागतकाले एतन्न भूतमित्यादियोगः ॥ १७ ॥ तर्हि अर्हदादयः केषु कुलेषु उत्पद्यंते? इत्याह । एवं खलित्यादि–एवं अनेन प्रकारेण खलु निश्चये अर्हदादयः (४) उग्गकुलेसुवत्ति उग्राः श्रीआदिनाथेन आरक्षकतया स्थापिताः जनाः तेषां कुलेषु भोगकुलेसुवत्ति भोगा गुरुतया स्थापिताः

तस्य शक्रस्य देवेंद्रस्य देवानां राज्ञः अयमेयारूवेत्ति अयं एतद्रूपः अब्भत्थिएत्ति आत्मविपय इत्यर्थः चिंतिएत्ति चिंतात्मकः पत्थिएत्ति प्रार्थितोऽभिलापरूप. मणोगएत्ति मनोगतो नतु वचनेन प्रकाशितः ईदृश. सकप्पेत्ति संकल्पो विचारः समुप्पज्जित्थत्ति समुत्पन्नः ॥१६॥ कोऽसौ ? इत्याह । न खल्वित्यादि-

तए णं तस्स सक्कस्स देविंदस्स देवरण्णो अयमेयारूवे अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था ॥ १६ ॥ ण खलु एयं भूयं, ण भवं, ण भविस्सं, जण्णं अरहंता वा, चक्कवट्टी वा, बलदेवा वा, अंतकुलेसु वा, पंतकुलेसु

एतत् न भूतं अतीतकाले ण भवंति न भवति एतत् वर्तमानकाले ण भविस्संति एतत् न भविष्यति आगामिनि काले, किं तदित्याह जण्णंति यत् अर्हंतश्चक्रवर्तिनो बलदेवा वासुदेवाश्च अंतकुलेसुवत्ति अंत्यकुलेषु शूद्रकुलेषु इत्यर्थः पंतकुलेसुवत्ति प्रांतकुलेषु अधमकुलेषु तुच्छकुलेसुवत्ति अल्पकुटुंबेषु

नमो जिनेभ्यो जितभयेभ्यः । एवं सर्वं जिनान्नमस्कृत्याथशक्रः श्रीवीरं नमस्करोति । नमोस्तु श्रमणस्य भगवतो महावीरस्य पूर्वतीर्थंकरैः निर्दिष्टस्य यावत्सिद्धिगतिनामकं स्थानं संप्राप्तुकामस्य श्रीवीरो हि अथ मुक्तिं यास्यतीति एवं विशेषणं, इमानि सर्वाण्यपि विशेषणानि चतुर्थ्यर्थेषष्ठ्येकव-

संपत्ताणं णमो जिणाणं जिअभयाणं।णमोत्थुणं समणस्स भगवओ महावी-
रस्स पुव्वतित्थयरणिद्दिठ्ठस्स जाव संपाविउकामस्स वंदामि णं भगवंतं तत्थ
गयं इह गए पासउ मे भगवं तत्थगए इह गयं ति कट्टु समणं भगवं महावीरं
वंदइ णमंसइ वंदित्ता णमंसइत्ता सीहासणवरंसि पुरत्थाभिमुहे सण्णिसण्णे।

चनांतानि ज्ञेयानि। वंदामिणं भगवंतं इत्यादि—तत्र तत्थगयंति तत्र गतं देवानंदा कुक्षौ स्थितं इत्यर्थः इहगएत्ति अत्र स्थितोऽहं पश्यतु च भगवांस्तत्रगत इह गतं मां इति कृत्वा वंदते नमस्यति तथाकृत्वा पुरत्थाभिमुहेत्ति पूर्वाभिमुखः सिंहासने सन्निषण्णः उपविष्ट इत्यर्थः। तएणमित्यादि—ततः

छउमत्ति छद्म घातिकर्माणि येभ्यस्ते व्यावृत्तछद्मानस्तेभ्यः जिणाणंति रागद्वेषजेतृभ्य. जावयाणंति उपदेशदानादिना भव्यसत्वे रागादिजापकास्तेभ्यः । तिण्णाणंति भवसमुद्रं तीर्णेभ्य. तारयाणंति सेवकानां तारकेभ्यः बुद्धाणंति सर्वतत्वबुद्धेभ्यः बोहयाणंति अन्येषां बोधकेभ्य. मुत्ताणंति मुक्तेभ्य. कर्मपंजरात् मोअगाणति सेवकानां मोचकेभ्य. सव्वण्णूणंति सर्वज्ञेभ्यः सव्वदरिसीणंति सर्वदर्शिभ्य.

डिहयवरणाणदंसणधराणं वियट्टछउमाणं जिणाणं जावयाणं तिण्णाणं तारयाणं बुद्धाणंबोहयाणं मुत्ताणंमोअगाणं सव्वण्णूणं सव्वदरिसीणं सिवमयलमरुअमणंतमक्खयमव्वाबाहमपुणराविंत्तिसिद्धिगइणामधेयं ठाणं ॥२५॥

सिवंति निरुपद्रवं अयलंति अचलं अरुयंति अरुजं रोगरहितं अणंतंति अनंतं अनंतवस्तुविषयज्ञानत्व-परूत्वात् । अक्खयंति क्षयरहितं साधनतत्वात् । अव्वावाहत्ति व्याबाधारहितं अपुणराविंत्तित्ति पुनरावृत्तिः पुनरागमनं तेन रहितं एवंविधं सिद्धिगइणामधेयंति सिद्धिगतिनामकं यत्स्थान तत्संप्राप्तेभ्य.

# ॥ अथ द्वितीयः क्षणः ॥

धम्मवरचाउरंतचक्कवट्टीणंति त्रयः समुद्राश्चतुर्थो हिमवानिति चत्वारोंतास्तेषु प्रभुतया भवाश्चातुरंतास्चतुरंतस्वामिन एवंविधा ये चक्रवर्तिनस्ते चातुरंतचक्रवर्तिनः धर्मस्य वराः श्रेष्ठाः चातुरंतचक्रवर्तिनो धर्मवरचातुरंतचक्रवर्तिनः धर्मनायका इत्यर्थः तेभ्यः दीवोत्ति समुद्रे मज्जतां द्वीप इव संसारसमुद्रे आधारः ताणंति त्राणं अनर्थप्रतिघातहेतुः अत एव सरणंति कर्मोपद्रवेभ्यो भीतानां शरणं गइत्ति

धम्मवरचाउरंतचक्कवट्टीणं दीवोत्ताणं सरणं गई पईट्ठा अप्प-

गम्यते सौस्थ्याय दुःस्थैराश्रीयते इति गतिः पइट्टत्ति भवकूपे पतत्प्राणिनां अवलंबनं,दीवोत्ताणं इत्यादीनि पदानि प्रथमांतान्यपि चतुर्थ्यर्थषष्ठ्यंततया व्याख्येयानि। अप्पडिहयेत्यादि—अप्रतिहते कटकुड्यादिभिरस्खलिते वरे प्रधाने ज्ञानदर्शने केवलज्ञानदर्शने धरंति ये ते तथा तेभ्यः वियट्टत्ति व्यावृत्तं गतं

सूरिं श्रीविजयानन्द, विजयानन्दकारकम् । "आत्माराम" इति ख्यात, वन्दे सद्गुणसम्पदे ॥ १ ॥

## ॥ इति प्रथमः क्षणः समाप्तः ॥

वल्लभविजयस्तेष, शिष्यशिष्यस्य शिष्यक । नित्य स्मरति य भक्त्या, स ददातु सदा सुखम् ॥ १ ॥

पुत्रत्वेन जातस्त्वम्, ततो भो मेघ! तदानीं तिर्यग्भवेऽपि त्वया धर्मार्थं तत्कष्टं सोढं, तर्हि जगद्वन्द्यानां साधूनां चरणैर्घट्ट्यमानः किं दूयसे? इत्याद्युपदेशेन भगवता धर्मे स्थिरीकृतोऽवाप्तजातिस्मरणो मेघकुमारो नेत्रे विमुच्याऽन्यत्सर्वं शरीरं मया व्युत्सृष्टं इत्यभिग्रहं कृतवान्, क्रमान्निरतिचारं चारित्रमाराध्य अंते मासिकीं संलेखनां कृत्वा विजयविमाने सुरोऽभवत्, ततश्च्युतो महाविदेहे सेत्स्यति। इतिमेघकुमारकथा ॥

इति महोपाध्यायश्रीकिर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां
कल्पसुबोधिकायां प्रथमः क्षण॰ समाप्त॰ ॥ १ ॥

तीये भवे वैताढ्यभूमौ षड्दंतः शुभ्रो हस्तिनीसहस्रभर्ता सुमेरुप्रभनामा त्वं गजराजोऽभूः, अन्यदा दावानलाद्भीतः पलायमानस्तृषितः पंकबहुलं एकं सरः प्राप्तस्तत्र चाऽज्ञातमार्गः पंके निमग्नो नीरात्तीराच्च भ्रष्टः पूर्ववैरिहस्तिना दंतैर्हन्यमानः सप्तदिनानि वेदनां अनुभूय सविंशं शतं आयुः समाप्य विंध्याचले रक्तवर्णश्चतुर्दंतः सप्तहस्तिनीशतभर्ता हस्ती जातः, क्रमेण च दावानलं दृष्ट्वा जातजातिस्मरणः पूर्वभवं स्मृतवान्, ततो दावानलपराभवरक्षणाय योजनपरिमितं मंडलं कृतवान्, तत्र वर्षाणां आदौ मध्ये अंते च यत्किंचित्तृणवल्ल्यादि भवति तत्सर्वं उन्मूलयति, अन्यदा च दावाग्नेर्भीताः सर्वे वनजीवास्तन्मंडलं व्याप्तवंतस्त्वमपि शीघ्रं आगत्य तत्र मंडले स्थितः, कदाचिद्देह-कंडूयनेच्छया एकं पादं उत्पाटितवान्, उत्पाटिते च तस्मिन्पादे अन्यत्र सांकीर्ण्यपीडितः शशक-स्तत्र आगत्य स्थितः, गात्रं कंडूयित्वा च पादं मुंचन् शशकं दृष्ट्वा तद्दयया सार्द्धं दिनद्वयं तथैव पादं स्थापितवान्, उपशांते च दावानले सर्वेषु जीवेषु स्वस्थानं गतेषु विलगितपादो झटिति भूमौ पतितस्ततो दिनत्रयं क्षुधया तृषा च पीडितः कृपापरः शतवर्षं आयुः परिपाल्याऽत्र श्रेणिकधारिण्योः

रथं मार्गे आनयति, एवं भगवंतोऽपि मार्गभ्रष्टं जनं मार्गे आनयंति। अत्र च मेघकुमारदृष्टांतो यथा—

एकदा श्रीवीरस्वामी राजगृहे समवसृतस्तत्र श्रेणिकधारिण्यो. सुतो मेघकुमार. प्रतिबुद्धः कथमपि पितरौ आपृच्छय अष्टौ प्रियाः परित्यज्य दीक्षां गृहीतवान्, प्रभुणा च शिक्षार्थं स्थविराणां अर्पितस्तत्र अनुक्रमेण संस्तारककरणे द्वारपार्श्वे मेघकुमारस्य संस्तारक आगतस्ततः प्रश्रवणाद्यर्थं गच्छदागच्छत्साधुपादरजोभिर्भरित. मेघकुमारः समग्रायां रजन्यां क्षणमपि निद्रां न प्राप्तश्चिंतयामास "क मे सुखशय्या ? क्वेदं भूलुण्ठनम् ! कियत्कालं इदं दुःखं मया सोढव्यम् ॥ ततः प्रातः प्रभुमापृच्छय गृहं यास्यामीति" प्रभाते प्रभुपार्श्वमागतः,प्रभुणाऽपि मधुरवचनेन आभाषित.,वत्स! त्वया निशि एवं दुर्ध्यानं कृतं परं अविचारितं एतत् नरकातिदुःखाग्रे कियदेतद्दुःखम् ? तान्यपि दुःखानि सागरोपमानि अनेकानि यावत्प्राणिना बहुशः सोढानि ! किं च :"वरमग्गिमि पवेसो, वरं विसुद्धेण कम्मुणा मरणं। मा गहिअवयभंगो, मा जीअं खलिअसीलस्स ॥ १ ॥" तथा इदं चारित्रादिकष्टानुष्ठानं महते फलाय भवति, यथा त्वयैव पूर्वभवे अनुभूतं धर्मार्थं कष्ट एतावत्फलप्रापकं अभवत्, शृणु तत. पूर्वभवान्, यथा—इतस्तृ-

चक्षुःसमानश्रुतज्ञानदायकेभ्यः मग्गदयाणंति मार्गस्य सम्यग्दर्शनादिमोक्षमार्गस्य दायकेभ्यः, यथा-केचिज्जनाश्चौरैर्लुंटितधना लोचने पट्टबंधं कृत्वा उन्मार्गे पातिताः स्युस्तेषां च कोऽपि पट्टकापनयनेन धनार्पणेन मार्गदर्शनेन उपकारी भवति, एवं भगवंतोऽपि कषायैर्लुंण्टितधर्मधनानां मिथ्यात्वाच्छादितविवेकनयनानां श्रुतज्ञानसद्धर्ममुक्तिमार्गदानेन उपकारिणो भवंति, सरणदयाणंति भवभीतानां

मग्गदयाणं सरणदयाणं जीवदयाणं धम्मदयाणं
धम्मदेसयाणं धम्मणायगाणं धम्मसारहीणं

शरणदायकेभ्यः जीवदयाणंति जीवनं जीवः सर्वथा मरणाभावस्तद्दायकेभ्यः, क्वचिद् 'वोहिदयाणं' इति पाठस्तत्र वोधिः सम्यक्त्वं तद्दायकेभ्यः धम्मदयाणंति धर्मश्चारित्ररूपस्तद्दायकेभ्यः धम्मदेसयाणंति धर्मोपदेशदायकेभ्यः, धर्मदेशकत्वं च एतेषां धर्मस्वामित्वे सति न पुनर्नटवदिति दर्शयन्नाह। धम्मणायगाणंति धर्मनायकेभ्यः धम्मसारहीणंति धर्मस्य सारथय इव, यथा सारथिः उन्मार्गे गच्छंतं

स्वभावेण दुर्भिक्षाद्योऽपि, तथा लोगुत्तमाणंति लोकेषु भव्यसमूहेषु चतुस्त्रिंशदतिशययुक्तत्वात् उत्तमा लोकोत्तमास्तेभ्यो लोकोत्तमेभ्यः लोगणाहाणंति लोकानां भव्यानां नाथेभ्यो योगक्षेमकारिभ्य., तत्र योगोऽप्राप्तज्ञानादिप्रापणं, क्षेमं च प्राप्तज्ञानादिरक्षणं लोगहिआणंति लोकानां सर्वजीवानां हितेभ्यो हितकारकेभ्यो दयाप्ररूपकत्वात् लोगपईवाणंति लोकप्रदीपेभ्यः मिथ्यात्वध्वांतना-

लोगहिआणं लोगपईवाणं लोगपज्जोअगराणं अभयदयाणं चक्खुदयाणं

शकत्वात् लोगपज्जोअगराणंति लोकप्रद्योतकरेभ्यः सूर्यवत्सर्ववस्तुप्रकाशकत्वात् अभयदयाणंति भयानां अभावोऽभयं तद्दायकेभ्य. "भयानि सप्त, तद्यथा-मनुष्यस्य मनुष्याद्भयं इहलोकभयं (१) मनुष्यस्य देवादेर्भय परलोकभयं (२) धनादिग्रहणाद्भयं आदानभयं (३) बाह्यनिमित्तनिरपेक्ष भयं अकस्माद्भयं (४) आजीविकाभयं (५) मरणभयं (६) अपयशोभयं च (७) इति" चक्खुदयाणंति

वनकृतपूजायोग्येभ्यः, रागद्वेषरूपकर्मवैरिहननात् अरिहंताणं इति पाठः, रागद्वेषरूपकर्मबीजाभावेन भवक्षेत्रे प्ररोहणाभावात् अरुहंताणं इति पाठश्च भगवंताणंति भगवद्भ्यो ज्ञानादिवद्भ्यः, आदिकरेभ्यः स्वस्वतीर्थापेक्षया धर्मस्येति ज्ञेयं, तीर्थकरेभ्यस्तत्र तीर्थं संघः प्रथमगणधरो वा तत्स्थापकेभ्यः सयंसंबुद्धाणंति स्वयं संबुद्धेभ्यो न तु परोपदेशेन पुरिसुत्तमाणंति पुरुषोत्तमेभ्योऽनंत-

भगवंताणं आइगराणं तित्थयराणं सयंसंबुद्धाणं पुरिसुत्तमाणं पुरिससीहाणं पुरिसवरपुंडरीआणं पुरिसवरगंधहत्थीणं लोगुत्तमाणं लोगणाहाणं

गुणनिधानत्वात्, पुरुषसिंहेभ्यः कर्मवैरिषु निर्दयशूरत्वात् पुरिसवरपुंडरियाणंति पुरुषवरपुंडरीकेभ्यः पुरुषेषु वरं प्रधानं यत्पुंडरीकं श्वेतपद्मं तत्तुलेभ्यः, यथा पुंडरीकं पंके जातं जलैर्वृद्धं जलपंकौ त्यक्त्वा उपरि तिष्ठति एवं भगवंतोऽपि कर्मकर्दमे उत्पन्ना भोगजलेन वृद्धाः कर्मभोगौ त्यक्त्वा पृथक् तिष्ठंति पुरिसवरगंधहत्थीणंति पुरुषवरगंधहस्तिभ्यः, यथा गंधहस्तिगंधेन अन्ये गजाः पलायंति तथा भगव-

धरणितलंसित्ति दक्षिण जानु धरणीतले साहट्टुत्ति निवेश्य तिक्खुत्तोत्ति वारत्रयं मुद्धाणंति मस्तकं धरणीतले निवेशयति तथा कृत्वा ईसिं पच्चुण्णमइत्ति ईषदभ्युन्नमति उत्तरार्द्धेन ऊर्ध्वो भवतीत्यर्थः । तथा कृत्वा कटकत्रुटिकाः कंकणबाहुरक्षकास्ताभिः स्तंभिते भुजे साहरइत्ति वालयति

साहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि णिवेसेइ णिवेसित्ता ईसिं पच्चुण्णमइ पच्चुण्णमित्ता कडयतुडिअथंभियाओ भुआओ साहरइ साहरित्ता करयलपरिग्गहिअं दसणहं सिरवासत्तं मत्थए अंजलिं कट्टु एवं वयासी "नमुत्थुणं अरिहंताणं

वालयित्वा करतलपरिगृहीतं हस्तसंपुटघटितं दशनखाः समुदिता यत्र स तथा तं सिरसावत्तंति शिरसि मस्तके आवर्तः प्रदक्षिणभ्रमणं यस्य एवंविधं मस्तके अंजलिं कृत्वा एवं अवादीत्, किं तदित्याह नमुत्थुणंति 'णंकारः सर्वत्र वाक्यालंकारार्थः' नमोस्तु, केभ्यः? अरहंताणंति अर्हद्भ्यस्त्रिभु-

वेरुलिअत्ति वैडूर्यं मरकतं नाम नीलरत्नं वरिट्ठरिट्ठअंजणत्ति वरिष्ठे प्रधाने रिष्टअंजननाम्नी श्यामरत्ने एते रत्नैः कृत्वा निउणोवचिअत्ति निपुणेन शिल्पिना रचिते इव, पुनः किं० ? मिसिमिसिंतत्ति देदीप्यमानानि मणिरयणत्ति मणयश्चंद्रकांतादयः, रत्नानि कर्केतनादीनि, तैर्मंडिते ईदृश्यौ पादुके अवमुच्य

पच्चोरुहित्ता वेरुलिअवरिट्ठरिट्ठअंजणनिउणोवचिअमिसिमिसिंतमणिरयण-
मंडियाओ पाउयाओ ओमुयइ ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ
करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठपयाइं अणुगच्छइ
अणुगच्छित्ता वामं जाणुं अंचेइ अंचित्ता दाहिणं जाणुं धरणितलंसि

एगसाडिअंति एकपटं उत्तरासंगं करोति तं कृत्वा अंजलिमउलिअग्गहत्थेत्ति अंजलिकरणेन मुकुलीकृतौ योजितौ अग्रहस्तौ येन स तथाभूतः सप्ताष्टपदानि तीर्थंकराभिमुखोऽनुगच्छति तथा कृत्वा वामं जानु अंचेइत्ति उत्पाटयति भूमौ अलग्नं स्थापयति अंचित्तत्ति तथा संस्थाप्य दाहिणं जाणुं

अवलोकयन् २ विहरति आस्ते इति संबंधः 'तत्थणमित्यादि सुगमं यावत् धाराहयत्ति' नवरं णंदिएत्तिं हर्षधनेन समृद्धतां गतः परमाणंदिएत्ति अतीवसमृद्धभावं गतः पीइमणेत्ति प्रीतिर्मनसि यस्य सः परमसोमणसिएत्ति परमं सौमनस्यं तुष्टचित्तत्वं प्राप्तः हरिसवसविसप्पमाणहियएत्ति हर्षवशेन

त्ताए वक्कंतं पासइ पासित्ता हट्ठतुट्ठचित्तमाणंदिए णंदिए परमाणंदिए पीइ-
मणे परमसोमणसिए हरिसवसविसप्पमाणहियए धाराहयकयंबसुरहिकु-
सुमचंचुमालइयऊससिअरोमकूवे विअसिअवरकमलाणणणयणे पचलिअ

विसर्प्पत् हृदयं यस्य सः, प्रमोदचित्तप्राग्भारेणैव धाराहयत्ति धाराहतं यत्कदंबस्य सुरभि कुसुमं तद्वत् चंचुमालइयत्ति रोमांचितः अत एव ऊससिअरोमकूवेत्ति उच्छ्रितरोमकूपः, तथा विअसिअवर-कमलाणणणयणेत्ति विकसितं वरं प्रधानं यत्कमलं तद्वत् आननं मुखं नयने च यस्य स तथा

तेषां, तत्र तंत्री वीणा, तलताला हस्तताला तुडिअत्ति त्रुटितानि अन्यवादित्राणि घणमुइंगत्ति घनमृदंगो मेघध्वनिमर्दलो तथा पडुपडहवाइयत्ति पटुपटहस्य यद्वादितं वादन एतेषां महता शब्देन

तुडिअघणमुइंगपडुपडहवाइयरवेण दिवाइं भोगभोगाइं भुंजमाणे विहरइ ॥ १४ ॥ इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ विहरइ। तत्थणं समणं भगवं महावीरं जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे माहणकुंडग्गामे णयरे उसभदत्तस्स माहणस्स कोडालगुत्तस्स भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिसि गब्भ-

दिव्यान् भोगभोगान् भुजानो विहरति ॥ १४ ॥ पुनः स किं कुर्वन्नित्याह । इमंचणंति इमं केवलकप्पंति संपूर्णं जंबूद्वीपं द्वीपं विपुलेन विस्तीर्णेन ओहिणत्ति अवधिना आभोएमाणे २ त्ति

णंति चतसृषु दिक्षु प्रत्येकं चतुरशीतिसहस्रमितानामात्मरक्षकदेवानां, सर्वसंख्यया च षट्त्रिंशत्सहस्राधिकलक्षत्रयमितानां(३३६०००)अन्येषां च बहूनां सौधर्मकल्पवासिनां वैमानिकानां देवानां देवीनां च आहेवच्चंति अधिपतिकर्म रक्षां इत्यर्थः पोरेवच्चंति अग्रगामित्वं सामित्तंत्ति नायकत्वं भट्टित्तंति भर्तृत्वं पोषकत्वं महत्तरगत्तंति गुरुतरत्वं आणाईसरसेणावच्चंति आज्ञया ईश्वरो यः सेनापतिस्तत्त्वं

**वेमाणिआणं देवाणं देवीण य आहेवच्चं पोरेवच्चं सामित्तं भट्टित्तं महत्तरगत्तं आणाईसरसेणावच्चं कारेमाणे पालेमाणे महयाहयणट्टगीअवाइअतंतीतलताल**

स्वसैन्यं प्रति अद्भुतमाज्ञाप्राधान्यं इत्यर्थः कारेमाणेत्ति कारयन् नियुक्तैः पालेमाणेत्ति पालयन् स्वयमेव, पुनः किंकुर्वन् ? महयेत्यादि तत्र महतेति रवेण इत्यनेन योज्यते महता शब्देनेत्यर्थः, केषां इत्याह अहयत्ति अविच्छिन्नं एवंविधं यत् णट्टत्ति नाटकं गीतं प्रसिद्धं वाइयत्ति वादितानि यानि तंत्र्यादीनि

ते हि इंद्रसमानऋद्धयः तायत्तीसाएत्ति त्रयस्त्रिंशत् ३३ त्रायस्त्रिंशकानां, ते हि महत्तरा इंद्रपूज्या., चतुर्णां लोकपालानां, सोम १ यम २ वरुण ३ कुबेरा ४ भिधानाना अट्ठण्हंति अष्टानां अग्रमहिषीणां, ता हि पद्मा १ शिवा २ शची ३ अंजू ४ अमला ५ अप्सरो ६ नवमिका ७ रोहिणी ८ त्यभिधाना., किंविशिष्टानां तासां ? सपरिवाराणंति सपरिवारणां, प्रत्येकं षोडशसहस्रदेवीपरिवाराणां तिण्हंपरिसाण

तायत्तीसाए तायत्तीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं सपरिवाराणं तिण्हं परिसाणं सत्तण्हं अणीआणं सत्तण्हं अणीआहिवईणं चउण्ह चउरासीणं आयरक्खदेवसाहस्सीणं अण्णेसिं च बहूण सोहम्मकप्पवासीणं

तथा तिसृणां पर्षदां, बाह्य १ मध्यमा २ भ्यंतराणां ३ सत्तण्हं अणिआणंति सप्तानां अनीकानां सैन्यानां, गंधर्व १ नाटक २ अश्व ३ गज ४ रथ ५ सुभट ६ वृषभ ७ संज्ञकानां, भवनपत्यादीनां तु वृषभस्थाने महिषा भवंतीति ज्ञेयं, तथा सत्तण्हअणिआहिवईणंति सप्तानां सेनापतीनां चउण्हंचउरासी-

पुनः किंवि० ? भासुरत्ति भासुरं देदीप्यमानं बोंदित्ति शरीरं यस्य स तथा, पुनः किंविशिष्टः ? पलंबवणमालधरे प्रलंबा आपादलंबिनी वनमाला पंचवर्णपुष्पमाला तां धरति यः स तथा, अथ स कुत्र वर्तते ? इत्याह सोहम्मे कप्पेत्ति सौधर्मे कल्पे सोहम्मवडिंसए विमाणेत्ति सौधर्मावतंसके विमाने सुहम्माए

भासुरबोंदी पलंबवणमालधरे सोहम्मे कप्पे सोहम्मवडिंसए
विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि सेणं तत्थ बत्ती-
साए विमाणावाससयसाहस्सीणं चउरासीए सामाणियसाहस्सीणं

सभाएत्ति सुधर्मायां सभायां सक्कंसि सीहासणंसित्ति शक्र इति नामके सिंहासने, अथ स किंकुर्वन् विहरतीत्याह । सेणं तत्थ बत्तीसाए इत्यादि-स इंद्रस्तत्र देवलोके द्वात्रिंशद्विमानावासशतसहस्राणां द्वात्रिंशल्लक्षविमानानां इत्यर्थः चउरासीए सामाणिअसाहस्सीणंति चतुरशीतिः सामानिकसहस्राणां,

पतिः अरयत्ति अरजस्कानि रजोरहितानि अंबरवत्थधरेत्ति स्वच्छतया अंबरतुल्यानि वस्त्राणि अंबरवस्त्राणि तानि धरतीति अरजोंबरवस्त्रधरः आलइयमालमउडेत्ति आलगितौ यथास्थानं परिहितौ मालामुकुटौ येन स तथा नवत्ति नवाभ्यां इव हेमत्ति हेमसत्काभ्यां चारुभ्यां मनोज्ञाभ्यां चित्तत्ति चित्राभ्यां चित्रकारिभ्यां चवलत्ति चपलाभ्यां इतस्ततः कंपमानाभ्यां ईदृशाभ्यां कुंडलाभ्यां

णसयसहस्साहिवई अरयंबरवत्थधरे आलइयमालमउडे नवहेमचारुचित्तचंचलकुंडल-विलिहिज्जमाणगल्ले महिड्ढीए महज्जुइए महब्बले महायसे महाणुभावे महासुक्खे

विलिहिज्जमाणत्ति विलिख्यमानौ गल्लौ यस्य स तथा महिड्ढीएत्ति महती ऋद्धिः छत्रादिराजचिह्नरूपा यस्य स तथा महज्जुइएत्ति महती द्युतिराभरणशरीरादिकांतिर्यस्य स तथा महब्बलेत्ति महाबलः महायसेत्ति महायशाः महाणुभावेत्ति महान् अनुभावो महिमा यस्य स तथा महासुक्खेत्ति महासुखः

पराभविष्यदिति विचिंत्याष्टाधिकसहस्रवणिक्पुत्रैः ( १००८ ) सह श्रीमुनिसुव्रतस्वामिसमीपे चारित्रं गृहीत्वा द्वादशांगीं अधीत्य द्वादशवर्षपर्यायः सौधर्मेन्द्रोऽभूत्, गैरिकोपि निजधर्मतस्तद्वाहनं ऐरावणोऽभवत्, ततः कार्तिकोयमिति ज्ञात्वा पलायमानं तं धृत्वा शक्रः शीर्षं आरूढः, स च शक्रभापनार्थं रूपद्वयं कृतवान्, शक्रोपि तथा, एवं रूपचतुष्टयं, शक्रोऽपि तथा, ततश्चावधिना ज्ञातस्वरूपस्तं तर्जितवान्, तर्जितश्च स्वाभाविकं रूपं चक्रे । इति कार्तिकश्रेष्ठिकथा ॥ सहस्सक्खेत्ति मंत्रिदेवपंचशत्या

**सहस्सक्खे मघवं पागसासणे दाहिणड्ढलोगाहिवई एरावणवाहणे सुरिंदे वत्तीसविमा-**

लोचनानि इंद्रकार्यकराणीति इंद्रसंबंधीन्येवेति सहस्राक्षः मघवंति मघा महामेघा वशे संत्यस्येति मघवान् पागसासणेत्ति पाकं दैत्यं शास्ति शिक्षयतीति पाकशासनः दाहिणड्ढलोगाहिवइत्ति मेरोर्दक्षिणतो यत् लोकार्द्धं तस्याधिपतिः, उत्तरलोकार्द्धस्य ईशानस्वामिकत्वात् एरावणवाहणेत्ति ऐरावणवाहनः सुरिंदेत्ति सुराणां इंद्र आल्हादकः वत्तीसविमाण सयसहस्साहिवइत्ति द्वात्रिंशल्लक्षविमानाधि-

सक्केत्ति शक्रनामासिंहासनाधिष्ठाता देविंदेत्ति देवानां इंद्र. देवरायत्ति देवेषु राजा कांत्यादिगुणे राजमानः वज्जपाणीत्ति करधृतवज्रः पुरंदरेत्ति दैत्यनगरविदारक. सयक्कउत्ति शतं क्रतव. श्राद्धपंचमप्रतिमारूपा नियमविशेषा यस्य स शतक्रतुः । इदं हि कार्तिकश्रेष्ठिभवापेक्षया, तथाहि–

पृथिवीभूषणनगरे प्रजापालो नाम राजा कार्तिकनामा श्रेष्ठी तेन श्राद्धप्रतिमानां शतं कृतं ततः शतक्रतुरिति ख्यातिः, एकदा च गैरिकपरिव्राजको मासोपवासी तत्रागत., एकं कार्तिकं विना सर्वोऽपि

सक्के देविंदे देवराया वज्जपाणी पुरंदरे सयक्कऊ

लोकस्तद्भक्तो जातस्तच्च ज्ञात्वा कार्तिकोपरि गैरिको रुष्ट., एकदा च राज्ञा निमंत्रितोऽवदत् यदि कार्तिक. परिवेषयति तदा तव गृहे पारणां करोमि, राज्ञा तथेति प्रतिपद्य कार्तिकायोक्तं 'यत्वं मद्गृहे गैरिकं भोजय' ततः, कार्तिकेणोक्तं राजन्! भवदाज्ञया भोजयिष्यामि, ततः श्रेष्ठिना भोज्यमानो गैरिको घृष्टोसीति अंगुल्या नासिकां स्पृशँश्चेष्टां चकार! श्रेष्ठी दध्यौ यदि मया पूर्वं दीक्षा गृहीताऽभविष्यत्तदाऽयं न

प्रतीष्टं युष्मन्मुखात्पतदेव गृहीतं इच्छियपडिच्छियंति उभयधर्मोपेतं सच्चेणं एसमट्ठेत्ति सत्यः स एषोऽर्थः सेत्ति अथ जहेयंति यथैतं अर्थं तुब्भे वयहत्ति यूयं वदथ इति कट्टुत्ति कृत्वा इति भणित्वा ते सुमिणे तान् स्वप्नान् सम्यक् प्रतीच्छति अंगीकरोति पडिच्छित्तत्ति अंगीकृत्य ऋषभदत्तब्राह्मणेन

प्पिया! पडिच्छियमेयं देवाणुप्पिया! इच्छियपडिच्छियमेयं देवाणुप्पिया! सच्चेणं एसमट्ठे से जहेयं तुब्भे वयहत्ति कट्टु ते सुमिणे सम्मं पडिच्छइ सम्मं पडिच्छित्ता उसभदत्तेणं माहणेणं सद्धिं उरालाइं माणुस्सगाइं भोगभोगाइं भुंजमाणा विहरइ ॥ १३ ॥ तेणं कालेणं तेणं समएणं

सार्द्धं उदारान्मानुष्यकान् भोगभोगाइंति भोगार्हा भोगा भोगभोगास्तान् भोगभोगान् भुंजाना विहरति ॥ १३ ॥ तेणंकालेणं इत्यादि-तस्मिन्काले तस्मिन्समये स शक्रो विहरतीति संबंधः, किंविशिष्टः?

तत उदारास्त्वया स्वप्ना दृष्टा- इतिकट्टुत्ति इतिकृत्वा भुज्जो २ अणुवूहइत्ति भूयो वारं २ अनुबृंहयति अनुमोदयति ॥ ११ ॥ तएणमित्यादितो वयासित्ति यावत्सुगमं ॥१२॥ तत- सा देवानंदा एवं अवादी-

सुमिणा दिट्ठुत्ति कट्टु भुज्जो २ अणुवूहइ ॥ ११ ॥ तएणं सा देवाणंदा माहणी उसभदत्तस्स माहणस्स अंतिए एअमट्ठं सुच्चा णिसम्म हट्ठतुट्ठ-जावहियया करयल परिग्गहिअं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ १२ ॥ एवमेयं देवाणुप्पिया! तहमेयं देवाणुप्पिया! अवि-तहमेयं देवाणुप्पिया! असंदिद्धमेयं देवाणुप्पिया! इच्छियमेयं देवाणु-

त्किमित्याह । एवमेयमित्यादि-एवं एतद्देवानुप्रिय! तहमेअंति तथैतद्यथा भवद्भिरुक्तं अवितहमेयंति यथास्थितं एतत् असंदिद्धमेयंति संदेहरहितं एतत् इच्छियमेयंति ईप्सितं एतत् पडिच्छियमेयंति-

सिक्खाकप्पेत्ति शिक्षाऽक्षराम्नायग्रंथः, कल्पश्च यज्ञादिविधिशास्त्रं तत्र तथा वागरणेत्ति व्याकरणे शब्दशास्त्रे, तानि च विंशतिः, ऐंद्र १ जैनेंद्र २ सिद्धहेमचंद्र ३ चांद्र ४ पाणिनीय ५ सारस्वत ६ शाकटायन ७ वामन ८ विश्रांत ९ बुद्धिसागर १० सरस्वतीकंठाभरण ११ विद्याधर १२ कलापक १३ भीमसेन १४ शैव १५ गौड १६ नंदि १७ जयोत्पल १८ मुष्टिव्याकरण १९ जयदेवाभिधानानि ।२०। छंदेत्ति छंदःशास्त्रे

वागरणे छंदे णिरुत्ते जोइसामयणे अण्णेसु अ बहुसु बंभण्णएसु परिव्वायएसु
णएसु सुपरिणिट्ठिए आवि भविस्सइ॥१०॥तं उरालाणं तुमे देवाणुप्पिए!
सुमिणा दिट्ठा जाव आरुग्गतुट्ठिदीहाउअमंगल्लकारगाणं तुमे देवाणुप्पिए!

णिरुत्तेति पदभंजने पदव्युत्पत्तिरूपे टीकादौ इत्यर्थः जोइसामयणेत्ति ज्योतिःशास्त्रे अण्णेसुयत्ति एषु पूर्वोक्तेषु अन्येषु च बहुसु बंभण्णएसुत्ति ब्राह्मणहितेषु शास्त्रेषु परिव्वायएसुत्ति परिव्राजकसंबंधिषु णएसु नयेष्वाचारशास्त्रेषु सुपरिणिट्ठिएत्ति अतिनिपुणो भविष्यतीति योगः ॥ १० ॥ तंउरालाणं इत्यादि-

२ छंदो ४ ज्योति ५ निरुक्तयः ६। उपांगानि अंगार्थविस्तररूपाणि ।पुनः कीदृशानां ? सरहस्साणत्ति तात्पर्ययुक्तानां चउण्हंति ईदृशानां पूर्वोक्तानां चतुर्णां वेदानां सारएत्ति स्मारकः अन्येषां विस्मरणे वारएत्ति वारकः अन्येषां अशुद्धपाठनिषेधात् धारएत्ति धारणसमर्थः, ईदृशो दारको भावी। पुन॰ किंवि॰? सडंगवी पूर्वोक्तानि षट् अंगानि वेत्ति विचारयतीति षडंगवित्, ज्ञानार्थत्वे तु पौनरुक्त्यं स्यात्, पुन॰ किंवि॰? सट्ठितंतविसारएत्ति षष्टितंत्रं कापिलीयशास्त्रं तत्र विशारदः पंडितः, पुन॰ किंवि॰? संखाणेत्ति

चउण्हं वेआणं सारए वारए धारए सडंगवी सट्ठितंतविसारए संखाणे सिक्खाकप्पे

गणितशास्त्रे, यथा "अर्द्धं तोये कर्दमे द्वादशांशः, षष्ठो भागो वालुकायां निमग्नः। सार्द्धो हस्तो दृश्यते यस्य तस्य, स्तंभस्याशु ब्रूहि मानं विचिंत्य ॥१॥" स्तंभोहस्ताः ६। तथा "अमलकमलराशेस्त्र्यंशपंचांश-षष्ठै-स्त्रिनयनहरिसूर्या येन तुर्येण चार्या। गुरुपदमथ षड्भिः पूजितः शेषपद्मैः, सकलकमलसंख्यां ब्रूहि तस्यानुचिंत्य ॥१॥" कमलसंख्या १२०॥ क्वचित् सिक्खाणेत्ति पाठस्तत्र 'सिक्खाण'शब्देन आचारग्रथः

पियदंसणंति वल्लभदर्शनं सुरूवंति शोभनरूपं दारकं प्रजनिष्यसीति ज्ञेयम् ॥ ९ ॥ सेविअणं दारए सोपि दारक एवंविधो भविष्यति, किंवि० ? उम्मुक्कबालभावेत्ति त्यक्तबाल्यो जाताष्टवर्षः, पुनः किंवि० ? विण्णायपरिणयमित्तेत्ति विज्ञानं परिणतमात्रं यस्य स तथा ततः क्रमाच्च किंवि० ? जोव्वणगमणुप्पत्तेत्ति यौवनमनुप्राप्तः, पुनः किंवि० ? रिउव्वेअजउव्वेअसामवेअअथव्वणवेअत्ति अत्र षष्ठीबहुवचनलोपात्

पियदंसणं सुरूवं दारयं पयाहिसि ॥ ९ ॥ सेविय णं दारए उम्मुक्कबाल-
भावे विण्णायपरिणयमित्ते जोव्वणगमणुप्पत्ते रिउव्वेअजउव्वेअसामवेअ-
अथव्वणवेअ इतिहासपंचमाणं णिघंटुछट्ठाणं संगोवंगाणं सरहस्साणं

ऋग्वेद १ यजुर्वेद २ सामवेद ३ अथर्वणवेदानां, कीदृशानां ? इतिहासपंचमाणंति इतिहासः पुराणं पंचमं येषां ते तथा तेषां, पुनः कीदृशानां ? निघंटुछट्ठाणंति निघंटुर्नामसंग्रहः षष्ठो येषां ते तथा तेषां, पुनः कीदृशानां ? संगोवंगाणंति अंगोपांगसहितानां, तत्र अंगानि, शिक्षा १ कल्प २ व्याकरण

सार्द्धशतं मणे । मणैर्दशभिरेका च, धटिका कथिता बुधै. । २ । धटीभिर्दशभिस्ताभि-रेको भारः प्रकीर्त्तितः" अत्र तेषां सार्द्धशतं मणे इति तेषां गद्याणानां इति वाच्यं नतु पलानां, पलानां सार्द्धशतेन मणकथने हि भारे अष्टसततिर्मणाः स्युस्तदर्द्धे च एकोनचत्वारिंशन्मणा एतावच्च शरीरमानं न संभवति, गद्याणानां सार्द्धशतेन मणकथने तु भारे चत्वारिंशत् सेरमाना. पादोना अष्ट मणाः किंचिदधिका जायंते, संभवति च तदर्धमानं पंचसेराधिकपादोनचतुर्मणप्रमाणं शरीरमिति, संभवति च गद्याणकानां सार्द्धशतस्यापि मणत्वं, क्वचिद्देशे किंचिदूनसेरत्रयस्यापि मणत्वव्यवहारात् ।

माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगं ससिसोमागारं कंतं

तथा पमाणत्ति स्वांगुलेन अष्टोत्तरशतांगुलोच्च उत्तमपुरुष., मध्यमहीनपुरुषौ च षण्णवतिचतुरशीत्यंगुलोच्चौ स्यातां, अत्र उत्तमपुरुषोऽपि अन्य एव, तीर्थंकरस्तु द्वादशांगुलोष्णीषसद्भावेन विंशत्यधिकशतांगुलोच्चो भवति, ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि सुजातानि सर्वांगाणि शिरःप्रमुखाणि यत्र एवंविधं सुंदरं अंगं यस्य स तथा तम् । पुनः किंवि०? ससिसोमागारंति शशिवत् सौम्याकारं कंतंति कमनीयं

द्धे यांति तिस्रोपि, तर्जन्यंगुष्ठकांतरम् ।११। येषां रेखा इमास्तिस्रः, संपूर्णा दोषवर्जिताः। तेषां गोत्रधनायूंषि, संपूर्णान्यन्यथा न तु । १२ । उल्लंघ्यंते च यावत्यो-ऽङ्गुल्यो जीवितरेखया। पंचविंशतयो ज्ञेयास्तावत्यः शरदां बुधैः।१३। यवैरंगुष्ठमध्यस्थै-र्विद्याख्यातिविभूतयः। शुक्लपक्षे तथा जन्म, दक्षिणांगुष्ठगैश्च तैः । १४ । न स्त्री त्यजति रक्ताक्षं, नार्थः कनकपिंगलम् । दीर्घबाहुं नचैश्वर्यं, न मांसोपचितं सुखम् ।१५। चक्षुःस्नेहेन सौभाग्यं, दंतस्नेहेन भोजनम् । वपुःस्नेहेन सौख्यं स्यात्, पादस्नेहेन वाहनम्। १६ ।

उरोविशालो धनधान्यभोगी, शिरोविशालो नृपपुंगवश्च।
कटीविशालो बहुपुत्रदारो, विशालपादः सततं सुखी स्यात्। १७।

इमानि लक्षणानि, व्यंजनानि मषतिलकादीनि च तेषां ये गुणास्तैरुपेतं, पुनः किं०? माणुम्माणेत्यादि-तत्र मानं जलभृतकुंडांतः पुरुषे निवेशिते यज्जलं निस्सरति यदि तज्जलं द्रोणमानं भवेत्तदा स पुरुषो मानप्राप्तः, यदि च तुलारोपितोऽर्द्धभारमानः स्यात्तदा स उन्मानप्राप्तः। तत्र भारमानं—"षट्सर्षपैर्यवस्त्वेको,गुंजैका च यवैस्त्रिभिः। गुंजात्रयेण वल्लः स्याद्गद्याणे ते च षोडश। १। पले च दश गद्याणा-स्तेषां

वदनं च ३। त्रीणि, लघूनि ग्रीवा १ जंघा २ मेहन च ३। त्रीणि गंभीराणि, सत्त्वं १ स्वर. २ नाभिश्च ३।
मुखमर्द्धं शरीरस्य, सर्वं वा मुखमुच्यते। ततोऽपि नासिका श्रेष्ठा, नासिकायाश्च लोचने। १। यथा नेत्रे तथा शीलं, यथा नासा तथार्जवम्। यथा रूपं तथा वित्तं, यथा शीलं तथा गुणाः। २। अतिह्रस्वेऽतिदीर्घेऽति–स्थूले चातिकृशे तथा। अतिकृष्णेऽतिगौरे च, षट्सु सत्त्वं निगद्यते। ३। सद्धर्मः सुभगो नीरुक्, सुस्वप्नः सुनय. कवि.। सूचयत्यात्मनः श्रीमान्, नर. स्वर्गगमागमौ। ४। निर्दंभः सदयो दानी, दांतो दक्षः सदा ऋजुः। मर्त्ययोनेः समुद्भूतो, भविता च पुनस्तथा। ५। मायालोभक्षुधालस्य-बह्वाहारादिचेष्टितै.। तिर्यग्योनिसमुत्पत्तिं, ख्यापयत्यात्मन. पुमान्। ६। सरागः स्वजनद्वेषी, दुर्भाषो मूर्खसंगकृत्। शास्ति स्वस्य गतायातं, नरो नरकवर्त्मनि। ७। आवर्तो दक्षिणे भागे, दक्षिणः शुभकृन्नृणाम्। वामो वामेऽतिनिंद्यः स्यात्, दिगन्यत्वे तु मध्यमः। ८। अरेखं बहुरेखं वा, येषां पाणितलं नृणाम्। ते स्युरल्पायुषो नि.स्वा, दुःखिता नात्र संशयः। ९। अनामिकांत्यरेखायाः, कनिष्ठा स्याद्यदाधिका। धनवृद्धिस्तदा पुंसां, मातृपक्षो बहुस्तथा। १०। मणिबंधात्पितुर्लेखा, करभाद्विभवायुषोः। लेखे

चक्रितीर्थंकृतां अष्टोत्तरसहस्रं । बलदेववासुदेवानां अष्टोत्तरशतं । अन्येषां तु भाग्यवतां द्वात्रिंशत् । तानि चेमानि । "छत्रं १ तामरसं २ धनू ३ रथवरो ४ दंभोलि ५ कूर्मां ६ कुशाः ७ ।
वापी ८ स्वस्तिक ९ तोरणानि १० च सरः ११ पंचाननः १२ पादपः १३ ।
चक्रं १४ शंख १५ गजौ १६ समुद्र १७ कलशौ १८ प्रासाद १९ मत्स्या २० यवाः २१ ।
यूप २२ स्तूप २३ कमंडलु २४ न्यवनिभृत् २५ सच्चामरो २६ दर्पणः २७ ॥ १ ॥
उक्षा २८ पताका २९ कमलाभिषेकः ३० । सुदाम ३१ केकी ३२ घनपुण्यभाजाम् ।"

तथा–"इह भवति सप्तरक्तः, षडुन्नतः पंचसूक्ष्मदीर्घश्च ।
त्रिविपुललघुगंभीरो, द्वात्रिंशल्लक्षणः स पुमान् ॥ १ ॥"

तत्र सप्त रक्तानि, नख १ चरण २ हस्त ३ जिह्वा ४ ओष्ठ ५ तालु ६ नेत्रांताः ७ । षडुन्नतानि, कक्षा १ हृदयं २ ग्रीवा ३ नासा ४ नखाः ५ मुखं च ६ । पंच सूक्ष्माणि, दंताः १ त्वक् २ केशाः ३ अंगुलिपर्वाणि ४ नखाश्च ५ । तथा पंच दीर्घाणि, नयने १ हृदयं २ नासिका ३ हनुः ४ भुजौ च ५ । त्रीणि विस्तीर्णानि, भालं १ उरः २

वस्तूनां कारकास्त्वया स्वप्ना दृष्टाः तंजहा तद्यथा अत्थलाभो देवाणुप्पिए इत्यादीनि सुगमानि, एवं खलु त्वं देवानुप्रिये! णवण्हं मासाणंति नवसु मासेषु बहुप्रतिपूर्णेषु अद्धट्ठमाणत्ति सार्द्धसप्ताहोरात्राधिकेषु अतीतेषु एतादृशं दारकं पुत्रं पयाहिसित्ति प्रजनिष्यसीति संबंधः । किंविशिष्टं दारकं?

दिट्ठा । तं जहा । अत्थलाभो देवाणुप्पिए! भोगलाभो देवाणुप्पिए! पुत्तलाभो देवाणुप्पिए! सुक्खलाभो देवाणुप्पिए! एवं खलु तुमं देवाणुप्पिए! णवण्हं मासाणं बहुपडिपुण्णाणं अद्धट्ठमाणराइंदियाणं विइक्कंताणं सुकुमालपाणिपायं अहीणपडिपुण्णपंचिंदियसरीरं लक्खणवंजणगुणोववेयं

सुकुमालेत्यादि-सुकुमालं पाणिपादं यस्यैवंविधं, पुनः किंवि०? अहीणत्ति अहीनानि लक्षणोपेतानि पडिपुण्णत्ति स्वरूपेण प्रतिपूर्णानि पंचेंद्रियाणि यत्र तादृशं शरीरं यस्य स तथा तं । तथा लक्खणवंजणगुणोववेयंति लक्षणानि व्यंजनानि तेषां गुणास्तैरुपेतस्तं । तत्र लक्षणानि छत्रचामरादीनि

च अप्पणोत्ति आत्मनः स्वाभाविकेन मतिपूर्वकेन बुद्धिविज्ञानेन, तत्र अनागतकालविषया मतिः, वर्तमानकालविषया बुद्धिः, विज्ञानं चातीतानागतवस्तुविषयं । ततस्तेषां स्वप्नानां अत्थुग्गहंति अर्थनिश्चयं करोति तं कृत्वा देवानंदां ब्राह्मणीं एवं अवादीत् । किं तदित्याह । 'उरालाणमित्यादि' उदारास्त्वया

अप्पणो साहाविएणं मइपुव्वएणं बुद्धिविण्णाणेणं तेसिं सुमिणाणं अत्थुग्गहं करेइ अत्थुग्गहं करित्ता देवाणंदं माहणीं एवं वयासी । उरालाणं तुमे देवाणुप्पिए! सुमिणा दिट्ठा कल्लाणाणं सिवा-धन्ना-मंगल्ला-सस्सिरीया-आरुग्ग-तुट्ठि-दीहाउ-कल्लाण-मंगल्लकारगाणं तुमे देवाणुप्पिए! सुमिणा

देवानुप्रिये! स्वप्ना दृष्टाः 'कल्लाणेत्यादि' प्राग्वत् आरुग्गत्ति आरोग्यं नीरोगत्वं तुट्ठित्ति तुष्टिः संतोषः दीहाउत्ति दीर्घायुश्चिरंजीवित्वं कल्लाणत्ति कल्याणं उपद्रवाभावः मंगलत्ति मंगलं वांछितावाप्तिः एतेषां

एएसिणं एतेषां देवानुप्रिय! चतुर्दशानां महास्वप्नानां के मण्णेत्ति मन्ये विचारयामि कः कल्याणकारी फलवृत्तिविशेषो भविष्यति? तत्र फलं पुत्रादि, वृत्तिर्जीवनोपायादिः ॥८॥ तएणंति ततः स ऋषभदत्तो

गय—जाव सिहिं च ॥७॥ एएसिणं देवाणुप्पिआ! ओरालाणं जाव चउद्दसण्हं महासुमिणाणं के मण्णे कल्लाणे फलवित्तिविसेसे भविस्सइ? ॥ ८ ॥ तएणं से उसभदत्ते माहणे देवाणंदाए माहणीए अंतिए एअमट्ठं सुच्चा निसम्म हट्ठ-तुट्ठ-जाव हियए धाराहयकयंबपुप्फगंपिव समुस्ससिअरोमकूवे सुमिणुग्गहं करेइ करित्ता ईहं अणुप्पविसइ ईहं अणुप्पविसित्ता

ब्राह्मणो देवानंदाया ब्राह्मण्या अंतिके पार्श्वे एतं अर्थं श्रुत्वा कर्णाभ्यां निशम्य चेतसा अवधार्य हट्ठेत्यादि प्राग्वत्। सुमिणुग्गहंति स्वप्नधारणं करोति तत्कृत्वा च ईहां अर्थविचारणां प्रविशति तां कृत्वा

आश्वस्ता श्रमापनयनेन वीसत्थत्ति विश्वस्ता क्षोभाभावेन अत एव सुहासणवरगयत्ति सुखेन आसनवरं प्राप्ता 'करयलपरिग्गहिअमित्यादि' करतलाभ्यां परिगृहीतं कृतं, दश नखाः समुदिता यत्र तं सिर-

वीसत्था सुहासणवरगया करयलपरिग्गहिअं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी ॥ ५ ॥ एवं खलु अहं देवाणुप्पिआ! अज्ज सय णिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे ओराले जाव सस्सिरीए चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा ॥ ६ ॥ तं जहा।

सावत्तंति शिरसि आवर्तः प्रदक्षिणभ्रमणं यस्य एवं विधं अंजलिं मस्तके कृत्वा देवानंदा एवं वयासित्ति अवादीत् ॥ ५ ॥ किं तदित्याह । एवं खल्वित्यादि सिहिं चेति यावत्प्राग्वत् ॥ ६–७ ॥

१ एवंखलु वाक्योपन्यासे देवानांप्रिय ! सुभग ! । यद्वा देवानपि अनुरूपं प्रीणयति यः स तथा तत्संबोधनं 'देवानुप्रिय' ! ॥

स्वप्नानां अवग्रहं स्मरणं करोति तत्कृत्वा च सयणिज्जाओअब्भुट्ठेइ शय्याया अभ्युत्तिष्ठति अभ्युत्थाय अतुरियत्ति अत्वरितया मानसौत्सुक्यरहितया अचवलत्ति अचपलया कायचापल्यवर्जितया असंभंताएत्ति असंभ्रांतया अस्खलंत्या अविलंबियाएत्ति विलंबरहितया राजहंससदृशया गत्या जेणेवत्ति

अरोमकूवा सुमिणुग्गहं करेइ सुमिणुग्गहं करित्ता सयणिज्जाओ अब्भुट्ठेइ अब्भुट्ठित्ता अतुरिअमचवलमसंभंताए अविलंबियाए रायहंससरिसीए गईए जेणेव उसभदत्ते माहणे तेणेव उवागच्छइ उवागच्छित्ता उसभदत्तं माहणं जएणं विजएणं वद्धावेइ वद्धावित्ता भद्दासणवरगया आसत्था

यत्रैव ऋषभदत्तो ब्राह्मणस्तत्रैवोपागच्छति उपागत्य ऋषभदत्तं ब्राह्मणं जयेन विजयेन वर्द्धापयति आशिषं ददाति। तत्र जयः स्वदेशे, विजयः परदेशे, वर्द्धापयित्वा च भद्रासनवरगता ततश्च आसत्थत्ति

यथोक्तान् स्वप्नान् दृष्ट्वा पडिबुद्धा समाणीत्ति जागरिता सती हट्ठत्ति हृष्टा विस्मयं प्राप्ता तुट्ठत्ति संतोषं प्राप्ता चित्तमाणंदियत्ति चित्तेन आनंदिता पीइमणत्ति प्रीतिर्मनसि यस्याः सा तथा प्रीतियुक्तचित्ता परमसोमणसिआ परमं सौमनस्यं संतुष्टचित्तत्वं जातं यस्याः सा तथा हरिसवसत्ति हर्षवसेन

ओराले कल्लाणे सिवे धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासि-
त्ताणं पडिबुद्धा समाणी हट्ठतुट्ठचित्तमाणंदिया पीइमणा परमसोमण-
सिआ हरिसवसविसप्पमाणहियया धाराहयकयंबपुप्फगंपिव समुस्ससि

विसप्पमाणत्ति विस्तारवत् हिअयत्ति हृदयं यस्याः सा तथा । पुनः किंभूता ? धाराहयकयंबपुप्फगंपिव धारया मेघजलधारया 'आहयंति' सिक्तं एवं विधं यत्कदंबतरुकुसुमं तद्धि मेघधारया फुल्लति ततस्तद्वत् समुस्ससिअत्ति समुच्छ्वसितानि उल्लसितानि रोमाणि कूपेषु यस्याः सा तथा एवं विधा सती

हरान् धन्नेत्ति धन्यान् धन्यहेतून् मंगल्लेत्ति मंगल कारकान् सस्सिरीएत्ति सश्रीकान् ईदृशान् चतुर्दश महास्वप्नान् पासित्ता पडिबुद्धत्ति दृष्ट्वा जागरिता तंजहत्ति तद्यथा–गयवसहेत्यादि गाथा सुबोधा, नवरं, अभिषेक॰ श्रियाः संबंधी पउमसरत्ति पद्मोपलक्षित सरः विमाणभवणत्ति विमानं देवसंबंधि

धन्ने मंगल्ले सस्सिरीए चउद्दस महासुमिणे पासित्ताणं पडिबुद्धा । तं जहा ।
"गय १ वसह २ सीह ३ अभिसेअ ४ दाम ५ ससि ६ दिणयरं ७ झयं
८ कुंभं ९ । पउमसर १० सागर ११ विमाण भवण १२ रयणुच्चय १३
सिहिं च १४ ॥" १ ॥ ४ ॥ तएणं सा देवाणंदा माहणी इमे एयारूवे

भवनं गृहं तत्र यः स्वर्गादवतरति तन्माता विमानं पश्यति यस्तु नरकादायाति तन्माता भवनमिति द्वयोरेकतरदर्शनाच्चतुर्दशैव स्वप्नाः सिहिं चेति शिखी निर्धूमोऽग्निः ॥ ४ ॥ तएणंति ततः सा देवानंदा

विष्यत्कालं जानातीत्यर्थः च्यवमानो न जानाति एकसामयिकत्वात् च्युतोऽस्मीति च जानाति ॥ ३ ॥ तथा जंरयणिंचणंति यस्यां रजन्यां श्रमणो भवान्महावीरो देवानंदाब्राह्मण्याः कुक्षौ गर्भतया उत्पन्नः तंरयणिंचणं तस्यां रजन्यां सा देवानंदा सयणिज्जंसित्ति शयनीये शय्यायां सुत्तजागरत्ति नाति-

चइस्सामित्ति जाणइ चयमाणे न जाणइ चुएमित्ति जाणइ ॥ ३ ॥ जं रयणिं च णं समणे भगवं महावीरे देवाणंदाए माहणीए जालंधरसगुत्ताए कुच्छिंसि गब्भत्ताए वक्कंते तं रयणिं च णं सा देवाणंदा माहणी सयणिज्जंसि सुत्तजागरा ओहीरमाणी ओहीरमाणी इमे एयारूवे ओराले कल्लाणे सिवे

निद्रायंती नातिजाग्रती अत एव ओहीरमाणीत्ति अल्पां निद्रां कुर्वती इमेत्ति इमान् एयारूवेत्ति एतद्रूपान् वक्ष्यमाणस्वरूपान् ओरालेत्ति उदारान् प्रशस्तान् कल्लाणेत्ति कल्याणहेतून् शिवान् उपद्रव

कोडाले॰ समानं गोत्रं यस्य स तथा तस्य कोडालगोत्रस्येत्यर्थः भारियाएत्ति तस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरसगोत्रायाः कुक्षौ गर्भतया वक्कंतेत्ति व्युत्क्रांत उत्पन्न इति संबंध॰। कदा? पुव्वरत्तावरत्तत्ति पूर्वरात्रापररात्रकालसमये मध्यरात्रे इत्यर्थः हत्थुत्तराहिंति उत्तराफल्गुनीनक्षत्रे जोगमुवा-

भारियाए देवाणंदाए माहणीए जालंधरसगुत्ताए पुव्वरत्तावरत्तकालसमयंसि हत्थुत्तराहि नक्खत्तेणं जोगमुवागएणं आहारवक्कंतीए भववक्कंतीए सरीरवक्कंतीए कुच्छिंसि गब्भत्ताए वक्कंते॥२॥ समणे भगवं महावीरे तिण्णाणोवगए आविहोत्था

गएणंति चंद्रयोगं प्राप्ते सति कया? आहारवक्कंतीएत्ति आहारापक्रांत्या दिव्याहारत्यागेन भववक्कंतीएत्ति दिव्यभवत्यागेन सरीरवक्कंतीएत्ति दिव्यशरीरत्यागेन ॥ २ ॥ अथ यदा भगवान् गर्भे उत्पन्नस्तदा तिण्णाणोवगएआविहोत्थत्ति ज्ञानत्रयोपगत आसीत् तत॰ च्योष्ये इति जानाति च्यवनम-

पूर्वोक्ता या द्विचत्वारिंशद्वर्षसहस्री सा एकविंशत्येकाविंशतिवर्षसहस्रप्रमाणयोः पंचमारकषष्ठारकयोः संबंधिनी ज्ञेया एक्कवीसाए तित्थयरेहिं एकविंशतौ तीर्थंकरेषु इक्खागत्ति इक्ष्वाकुकुलसमुत्पन्नेषु कासवगुत्तेहिं काश्यपगोत्रेषु दोहिं द्वयोर्मुनिसुव्रतनेम्योः हरिवंशकुलसमुत्पन्नयोर्गौतमगोत्रयोः एवं

कासवगुत्तेहिं दोहिं अ हरिवंसकुलुप्पन्नेहिं गोअमसगुत्तेहिं तेवीसाए
तित्थएरेहिं विइक्कंतेहिं समणे भगवं महा वीरे चरमतित्थयरे पुव्वतित्थय-
रनिद्दिट्ठे माहणकुंडग्गामे णयरे उसभदत्तस्स माहणस्स कोडालसगुत्तस्स

च तेवीसाएत्ति त्रयोविंशतौ तीर्थंकरेषु अतीतेषु समणेत्ति श्रमणो भगवान्महावीरः किं विशिष्टः? चरमतीर्थंकरः, पुनः किंविशिष्टः? पूर्वतीर्थंकरनिर्दिष्टः श्रीवीरो भविष्यतीत्येवं पूर्वजिनैः कथितः। माहणेत्यादि-ब्राह्मणकुंडग्रामनामके नगरे उसभदत्तस्सत्ति ऋषभदत्तस्य ब्राह्मणस्य किं विशिष्टस्य?

सागरप्रमाणे प्रथमारके अतिक्रांते सुसमाएसमाएत्ति सुषमानाम्नि त्रिकोटाकोटिसागरप्रमाणे द्वितीयारके अतिक्रांते सुसमदुसमाएसमाएत्ति सुषमदुषमानाम्नि द्विकोटाकोटिसागरप्रमाणे तृतीयेऽरके अतीते दुसमसुसमाएसमाएत्ति दुषमसुषमानाम्नि चतुर्थेऽरके बहुविइक्कंताएत्ति बहुव्यतिक्रांते किं-

समाए विइक्कंताए दुसमसुसमाए समाए बहुविइक्कंताए सागरोवमकोडाकोडीए बायालीसाए वाससहस्सेहिं ऊणियाए पंचहत्तरीए वासेहिं अद्धनवमेहिं अ मासेहिं सेसेहिं एक्कवीसाए तित्थयरेहिं इक्खागकुलसमुप्पण्णेहिं-

चिदूने तदेवाह सागरोवमकोडाकोडीएत्ति द्विचत्वारिंशद्वर्षसहस्रो ४२००० ना एका सागरकोटाकोटिश्चतुर्थारकप्रमाणं तत्रापि चतुर्थारकस्य पंचसप्तति ७५ वर्षेषु सार्धाष्टमासाधिकेषु शेषेषु श्रीवीरावतारः द्वासप्ततिवर्षाणि च श्रीवीरस्यायुः श्रीवीरनिर्वाणाच्च त्रिभिर्वर्षैः सार्धाष्टमासैश्चतुर्थारकसमाप्तिः तत-

तिकात् तत्र हि देवानां विंशतिसागराणि उत्कृष्टा स्थितिर्भवति भगवतोऽपि एतावत्येव स्थितिरासीत्। अथ तस्माद्विमानात् आउक्खएणंति देवायुःक्षयेण भवक्खएणंति देवगतिनामकर्मक्षयेण ठिइक्खएणं स्थितिर्वैक्रियशरीरेऽवस्थानं तस्याः क्षयेण पूर्णीकरणेन अणंतरंति अंतररहितं चयंचइत्तत्ति च्यवं

**ठिइआओ आउक्खएणं भवक्खएणं ठिइक्खएणं अणंतरं चयं चइत्ता इहेव जंबुद्दीवे दीवे भारहे वासे दाहिणड्ढभरहे इमीसे ओसप्पिणीए सुसम-सुसमाए समाए विइक्कंताए सुसमाए समाए विइक्कंताए सुसमदुसमाए**

च्यवनं कृत्वा इहेव जंबुद्दीवे दीवेत्ति अस्मिन्नेव जंबुद्वीपनाम्नि द्वीपे भारहेवासेत्ति भरतक्षेत्रे दाहिणड्ढ-भरहेत्ति दक्षिणार्धभरते इमीसे ओसप्पिणीएत्ति यत्र समये २ रूपरसादीनां हानिः स्यात्साऽवसर्पिणी ततोऽस्यां अवसर्पिण्यां सुसमसुसमाएत्ति सुषमसुषमानाम्नि समाए विइक्कंताए चतुःकोटाकोटि-

अथ विस्तरवाचनया श्रीवीरचरित्रं तेणं कालेणं तेणं समएणं समणे भगवं महावीरेत्ति प्राग्वत् जे से गिम्हाणंति यः स ग्रीष्मकालस्य चउत्थे मासेत्ति चतुर्थो मासः अट्ठमे पक्खेत्ति अष्टमः पक्षः कोर्थः? आषाढशुक्लपक्षः तस्सणं आसाढसुद्धस्सत्ति तस्य आषाढशुक्लपक्षस्य छट्ठीपक्खेणंति षष्ठीरात्रौ दिनरात्रिभ्यामहोरात्रस्योभयपक्षत्वात् 'पुव्वरत्तावरत्तकालसमयंसित्ति' उत्तरत्र वक्ष्यमाणत्वाच्च पक्षशब्देनात्र

तेणं कालेणं तेणं समएणं समणे भगवं महावीरे जेसे गिम्हाणं चउत्थे मासे अट्ठमे पक्खे आसाढसुद्दे तस्सणं आसाढसुद्धस्स छट्ठीपक्खेणं महाविजयपुप्फुत्तरपवरपुंडरीआओ महाविमाणाओ वीसं सागरोवम-

रात्रिर्व्याख्याता ॥ महाविजयत्ति महान्विजयो यत्र तन्महाविजयं पुप्फुत्तरत्ति पुष्पोत्तरनामकं पवरपुंडरीआओत्ति प्रवरेषु प्रधानेषु अन्यश्रेष्ठविमानेषु पुंडरीकमिव श्वेतकमलमिव अतिश्रेष्ठं इत्यर्थः तस्मात् महाविमाणाओत्ति महाविमानात् किंविशिष्टात्? वीसंसागरोवमठिइआओत्ति विंशतिसागरोपमस्थि-

हत्थुत्तराहिं मुंडे भवित्ता आगाराओ अणगारिअं पव्वइएत्ति उत्तरफल्गुनीषु मुंडो भूत्वा तत्र द्रव्यतो मुंडः केशलुंचनेन भावतो मुंडो रागद्वेषाभावेन अगारात् गृहात् निष्क्रम्येति शेषः अनगारितां साधुतां पव्वइएत्ति प्रतिपन्नः तथा उत्तरफल्गुनीषु अणंतेत्ति अनंतं अनंतवस्तुविषयं अणुत्तरेत्ति अनुपमं निव्वाघाएत्ति निर्व्याघातं भित्तिकटादिभिरस्खलितं निरावरणेत्ति समस्तावरणरहितं कसिणेत्ति

हत्थुत्तराहिं मुंडे भवित्ता आगाराओ अणगारिअं पव्वइए हत्थुत्तराहिं अणंते अणुत्तरे निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाण-दंसणे समुप्पण्णे साइणा परिणिव्वुए भयवं ॥ १ ॥

कृत्स्नं सर्वपर्यायोपेतसर्ववस्तुज्ञापकं पडिपुण्णेत्ति परिपूर्णं सर्वावयवसंपन्नं एवं विधं यत् वरं प्रधानं केवलज्ञानं केवलदर्शनं च तत् उत्तरफल्गुनीषु प्राप्तः साइणापरिणिव्वुए भयवंति स्वातिनक्षत्रे मोक्षं गतो भगवान् ॥ १ ॥

वास्यायां मोक्षः (५) एवं श्रीवीरस्य पंच कल्याणकानि उक्तानि अथ यदि षष्ठं स्यात्तदा तस्यापि दिनं उक्तं स्यात्। अन्यच्च नीचैर्गोत्रविपाकरूपस्य अति निंद्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वकथनं अनुचितम्। अथ 'पंचहत्थुत्तरे' इत्यत्र गर्भापहरणं कथं उक्तम्? इति चेत्सत्यं अत्र हि

तं जहा। हत्थुत्तराहिं चुए चइत्ता गब्भं वक्कंते हत्थुत्तराहिं
गब्भाओ गब्भं साहरिए हत्थुत्तराहिं जाए ॥

भगवान् देवानंदाकुक्षौ अवतीर्णः प्रसूतवती च त्रिशलेति असंगतिः स्यात्तन्निवारणाय पंचहत्थुत्तरेति वचनं इत्यल प्रसंगेन कल्याणकानि पंचैव।" तद्यथा पंचहस्तोत्तरत्वं भगवतो मध्यमवाचनया दर्शयति हत्थुत्तराहिं चुए उत्तराफल्गुनीषु च्युतः प्राणताभिधानदशमदेवलोकात् चइत्ता गब्भं वक्कंते च्युत्वा गर्भे उत्पन्नः हत्थुत्तराहिं गब्भाओ गब्भं साहरिए उत्तराफल्गुनीषु गर्भात् गर्भं संहृतो देवानंदागर्भात् त्रिशलागर्भे मुक्त इत्यर्थ. हत्थुत्तराहिं जाए उत्तराफल्गुनीषु जात.

होत्थत्ति हस्तोत्तरा उत्तराफल्गुन्यः गणनया ताभ्यो हस्तस्य उत्तरत्वात् ताः पंचसु स्थानेषु यस्य स पंचहस्तोत्तरो भगवान् होत्थत्ति अभवत् ॥

"अथ षट्कल्याणकवादी प्राह। ननु ? 'पंच हत्थुत्तरे साइणा परिणिव्वुडे' इति वचनेन महावीरस्य षट्कल्याणकत्वं संपन्नमेव। मैवं एवं उच्यमाने 'उसभेणं अरहा कोसलिए पंच उत्तरासाढे अभीइ छट्टे होत्थत्ति' जंबूद्वीपप्रज्ञातिवचनात् श्रीऋषभस्यापि षट्कल्याणकानि वक्तव्यानि स्युः न च तानि त्वयापि तथोच्यंते तस्माद्यथा 'पंच उत्तरासाढे' इत्यत्र नक्षत्रसाम्यात् राज्याभिषेको मध्ये गणितः परं कल्याणकानि तु 'अभीइ छट्टे' इत्यनेन सह पंचैव, तथात्रापि 'पंचहत्थुत्तरे' इत्यत्र नक्षत्रसाम्यात् गर्भापहारो मध्ये गणितः परं कल्याणकानि तु 'साईणा परिणिव्वुडे' इत्यनेन सह पंचैव । तथा श्रीआचारांगटीकाप्रभृतिषु 'पंचहत्थुत्तरे' इत्यत्र पंचवस्तून्येव व्याख्यातानि नतु कल्याणकानि । किंच श्रीहरिभद्रसूरिकृतयात्रापंचाशकस्य अभयदेवसूरिकृतायां वृत्तौ अपि आषाढशुद्धषष्ठ्यां गर्भसंक्रमः (१) चैत्रशुद्धत्रयोदश्यां जन्म (२) मार्गासितदशम्यां व्रतं (३) वैशाखशुद्धदशम्यां केवलं (४) कार्तिकामा-

तानि (१) गणहराइथेरावलित्ति । गणधरादिस्थविरावली (२) चरित्तमिति । सामाचारी (३) तत्र प्रथमाधिकारे जिनचरितेषु आसन्नोपकारितया प्रथमं श्रीवीरचरितं वर्णयंतः श्रीभद्रबाहुस्वामिनो जघन्यमध्यमवाचनात्मकं प्रथमं सूत्रं रचयति । तेणं कालेणं । तस्मिन्काले अवसर्पिणीचतुर्थारकपर्यंतलक्षणे णंकारः सर्वत्र वाक्यालंकारार्थः तेणं समएणं विशिष्टः कालविभागः समयस्तस्मिन्समये समणे भगवं महावीरे श्रमणस्तपोनिरतः 'भगवंति' भगवान् अर्कयोनिवर्जितद्वादशभगशब्दार्थवान् ।

॥ तेणं कालेणं तेणं समएणं समणे भगवं महावीरे पंच हत्थुत्तरे होत्था ।

यदाहुः । "भगोर्क १ ज्ञान २ माहात्म्य ३ यशो ४ वैराग्य ५ मुक्तिषु ६ । रूप ७ वीर्य ८ प्रयत्ने ९च्छा १० श्री ११ धर्मै १२ श्वर्य १३ योनिषु १४॥१॥" अत्र आद्यंतौ अर्थौ वर्जनीयौ । ननु अंत्योर्थस्तु वर्ज्य एव परं अर्कः कथं वर्ज्यः ? सत्यं उपमानतया अर्को भवति परं वत्प्रत्ययांतत्वेन अर्कवानित्यर्थो न लगतीति वर्जितः । महावीरत्ति कर्मवैरिपराभवसमर्थः श्रीवर्धमानस्वामीत्यर्थः । पंचहत्थुत्तरे

राजानं च पादप्रहारेण रुधिरं वमंतं सिंहासनाद्भूमौ पातयामास । तदा स नागकेतुः कथं इमं संघप्रासादविध्वंसं जीवन् पश्यामीति बुद्ध्या प्रासादशिखरं आरुह्य शिलां पाणिना दध्रे । ततः स व्यंतरोऽपि तत्तपःशक्तिं असहमानः शिलां संहृत्य नागकेतुं नतवान् तद्वचनेन भूपालं अपि निरुपद्रवं कृतवान् । अन्यदा च स नागकेतुर्जिनेंद्रपूजां कुर्वन् पुष्पमध्यस्थितसर्पेण दष्टोपि तथैवाव्यग्रो भावनारूढः केवलज्ञानं आसादितवान् । ततः शासनदेवतार्पितमुनिवेषश्चिरं विहरतिस्म । एवं नागकेतुकथां श्रुत्वा अन्यैरपि अष्टमतपसि यतनीयम् । इति नागकेतुकथा ॥

अथात्र श्रीकल्पसूत्रे त्रीणि वाच्यानि यथा–"पुरिमचरिमाण कप्पो, मंगलं वद्धमाणतित्थंमि । इह परिकहिआ जिणगण–हराइथेरावली चरित्तं" । व्याख्या–"पुरिमचरिमाणत्ति०" ऋषभवीरजिनयोः कप्पत्ति अयं कल्पः आचारः यत् वृष्टिर्भवतु मा वा परं अवश्यं पर्युषणा कर्त्तव्या उपलक्षणत्वात्कल्पसूत्रं वाचनीयं च 'मंगलमिति' एकं अयं आचारः अपरं च मंगलं मंगलकारणं भवति वर्धमानतीर्थे । कस्मादेवं ? इत्याह । यस्मादिह परिकथितानि "जिणत्ति" जिनानां चरि-

साहाय्यार्थं आगतोऽस्मि । राजादिभिरुक्तं स्वामिन्! जातमात्रेण अनेन अष्टमतपः कथं कृतम्? धरणेंद्र उवाच राजन्! अयं हि पूर्वभवे कश्चिद्वणिक्पुत्रो बाल्येऽपि मृतमातृक आसीत् स च अपरमात्रात्यंतं पीड्यमानो मित्राय स्वदुःखं कथयामास । सोऽपि त्वया पूर्वजन्मनि तपो न कृतं तेनैवं पराभवं लभसे इत्युपदिष्टवान् । ततोऽसौ यथाशक्तितपोनिरत आगामिन्यां पर्युषणायां अवश्यं अष्टमं करिष्यामीति मनसि निश्चित्य तृणकुटीरे सुष्वाप । तदा च लब्धावसरया विमात्रा आसन्नप्रदीपनकादग्निकणस्तत्र निक्षिप्तस्तेन च कुटीरके ज्वलिते सोऽपि मृतः अष्टमध्यानाच्च अयं श्रीकांतमहेभ्यनंदनो जातस्ततोऽनेन पूर्वभवचिंतितं अष्टमतपः सांप्रतं कृतम्। तदसौ महापुरुषो लघुकर्माऽस्मिन्भवे मुक्तिगामी यत्नात्पालनीयो भवतां अपि महते उपकाराय भविष्यतीति उक्त्वा नागराजः स्वहारं तत्कंठे निक्षिप्य स्वस्थानं जगाम। ततः स्वजनैः श्रीकांतस्य मृतकार्यं विधाय तस्य नागकेतुरिति नाम कृतं क्रमाच्च स बाल्यादपि जितेंद्रियः परमश्रावको बभूव । एकदा च विजयसेनराजेन कश्चित् अचौरोपि चौरकलंकेन हतो व्यंतरो जातः समग्रनगरविघाताय शिलां रचितवान्

चंद्रकांता नगरी तत्र विजयसेनो राजा श्रीकांताख्यश्च व्यवहारी तस्य श्रीसखी भार्या तया च बहुप्रार्थित एकः सुतः प्रसूतः स च बालक आसन्ने पर्युषणापर्वणि कुटुंबकृतां अष्टमवार्तां आकर्ण्य जातजातिस्मृतिः स्तन्यपोऽपि अष्टमं कृतवान् । ततस्तं स्तन्यपानमकुर्वाणं पर्युषितमालतीकुसुममिव म्लानं आलोक्य मातापितरौ अनेकानुपायांश्चक्रतुः । क्रमाच्च मूर्च्छा प्राप्तं तं बालं मृतं ज्ञात्वा स्वजना भूमौ निक्षिपंतिस्म । ततश्च विजयसेनो राजा तं पुत्रं तद्दुःखेन तत्पितरं च मृतं विज्ञाय तद्धनग्रहणाय सुभटान्प्रेषयामास । इतश्च अष्टमप्रभावात्प्रकंपितासनो धरणेंद्रः सकलं तत्स्वरूपं विज्ञाय भूमिष्ठं तं बालकं अमृतछटया आश्वास्य विप्ररूपं कृत्वा धनं गृह्णतस्तान्निवारयामास । तत् श्रुत्वा राजापि त्वरितं तत्रागत्योवाच भोभूदेव! परंपरागतं इदं अस्माकं अपुत्रधनग्रहणं कथं निवारयसि? धरणोवादीत् राजन्! जीवत्यस्य पुत्रः कथं? कुत्रास्तीति राजादिभिरुक्ते भूमेस्तं जीवंतं बालकं साक्षात्कृत्य निधानमिव दर्शयामास । ततः सर्वैरपि सविस्मयैः स्वामिन्! कस्त्वम्? कोऽयम्? इति पृष्टे सोऽवदत् । अहं धरणेंद्रो नागराजः कृताष्टमतपसोऽस्य महात्मनः

रात्रौ विहितकालग्रहणादिविधीनां साधूनां वाचनं श्रवणं च। साध्वीनां च निशीथचूर्ण्याद्युक्तविधिना दिवापि श्रवणम्। तथा श्रीवीरनिर्वाणादशीत्यधिकनवशत ९८० वर्षातिक्रमणे मतांतरेण च त्रिनवतियुत नवशत ९९३ वर्षातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य समाधिमाधातुमानंदपुरे सभासमक्षं समहोत्सवं श्रीकल्पसूत्रं वाचयितुमारब्धम्। ततः प्रभृति चतुर्विधोपि संघ. श्रवणेऽधिकारी। वाचने तु विहितयोगानुष्ठानः साधुरेव ॥

अथ अस्मिन्वार्षिकपर्वणि कल्पश्रवणवत् इमान्यपि पंच कार्याणि अवश्यं कार्याणि। तद्यथा। चैत्यपरिपाटी (१) समस्तसाधुवंदनं (२) सांवत्सरिकप्रतिक्रमणं (३) मिथःसाधर्मिकक्षामणं (४) अष्टमं तपश्च (५) एषां अपि कल्पश्रवणवद्वांछितदायकत्वं अवश्यकर्तव्यत्वं जिनानुज्ञातत्वं च ज्ञेयम्। तत्र अष्टमं तप उपवासत्रयात्मकं महाफलकारणं रत्नत्रयवदान्यं शल्यत्रयोन्मूलनं जन्मत्रयपावनं कायवाङ्मनोदोषशोषकं विश्वत्रयाग्र्यपदप्रापकं निःश्रेयसपदाभिलाषुकैरवश्यं कर्तव्यम् नागकेतुवत्। तथाहि—

अष्टचत्वारिंशदधिकया द्विसहस्र्या २०४८ । त्रयोदशं षण्णवत्यधिकया चतुःसहस्र्या ४०९६ । चतुर्दशं च अष्टसहस्र्या द्विनवत्युत्तरशताधिकया ८१९२ । सर्वाणि पूर्वाणि षोडशभिः सहस्रैस्त्र्यशीत्यधिकैस्त्रिभिः शतैश्च ( १६३८३ ) हस्तिप्रमाणमषीपुंजैर्लेख्यानि ॥ स्थापना च—

| पूर्वाणांसंज्ञा | उत्पाद पूर्व १ | अग्राय णीय २ | वीर्य प्रवाद ३ | अस्ति प्रवाद ४ | ज्ञान प्रवाद ५ | सत्य प्रवाद ६ | आत्म प्रवाद ७ | कर्म प्रवाद ८ | प्रत्याख्या नप्रवाद९ | विद्याप्र वाद १० | कल्याण ११ | प्राणावाय १२ | क्रियावि शाल १३ | लोकबिंदु-सार १४ | सर्व संख्या |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| हस्तिमित मषीपुंजाः | १ | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ | १०२४ | २०४८ | ४०९६ | ८१९२ | १६३८३ |

तस्मान्महापुरुषप्रणीतत्वेन मान्यं गंभीरार्थं च । यतः—“सव्वनईणं जा हुज्ज, वालुआ सव्वोदहीण जं उदयं । तत्तो अणंतगुणिओ, अत्थो इक्कस्स सुत्तस्स ॥ १ ॥ मुखे जिह्वासहस्रं स्यात्, हृदये केवलं यदि । तथापि कल्पमाहात्म्यं, वक्तुं शक्यं न मानवैः ॥ २ ॥”

अथ तस्य श्रीकल्पस्य वाचने श्रवणे च अधिकारिणो मुख्यवृत्त्या साधुसाध्व्यस्तत्रापि कालतो

आलस्यं न विधेयम् सकलसामग्रीसहितस्यैव तस्य कल्पसूत्रश्रवणस्य वांछितफलप्रापकत्वात् । यथा बीजं अपि वृष्टिवायुप्रभृतिसामग्रीसद्भावे एव फलनिष्पत्तौ समर्थं नान्यथा। एवं अयं कल्पोपि देवगुरुपूजाप्रभावनासाधर्मिकभक्तिप्रमुखसामग्रीसद्भावे एव यथोक्तफलहेतुः । अन्यथा—"इक्कोवि नमुक्कारो, जिणवरवसहस्स वद्धमाणस्स । संसारसागराओ, तारेइ नरं व नारिं वा ।" इति श्रुत्वा किंचित्प्रयाससाध्ये कल्पश्रवणेपि आलस्यं भवेत् ।

अथ पुरुषविश्वासे वचनविश्वास इति श्रीकल्पसूत्रस्य प्रणेता वक्तव्यः । स च चतुर्दशपूर्वविद्युगप्रधानश्रीभद्रबाहुस्वामी दशाश्रुतस्कंधस्य अष्टमाध्ययनतया प्रत्याख्यानप्रवादाभिधाननवमपूर्वात् उद्धृत्य कल्पसूत्रं रचितवान् । तत्र पूर्वाणि च प्रथमं एकेन हस्तिप्रमाणमषीपुंजेन लेख्य । द्वितीय द्वाभ्यां २ । तृतीयं चतुर्भिः ४ । चतुर्थं अष्टाभिः ८ । पंचमं षोडशभि. १६ । षष्ठं द्वात्रिंशता ३२ । सप्तमं चतुःषष्ठ्या ६४ । अष्टमं अष्टाविंशत्यधिकशतेन १२८ । नवमं षट्पंचाशदधिकशतद्वयेन २५६ । दशमं द्वादशाधिकैः पंचभि शतैः ५१२ । एकादशं चतुर्विंशत्यधिकेन सहस्रेण १०२४ । द्वादशं

साहसिकेषु रावणः, बुद्धिमत्सु अभयः, तीर्थेषु शत्रुंजयः, गुणेषु विनयः, धानुष्केषु धनंजयः, मंत्रेषु नमस्कारः, तरुषु सहकारः, तथा सर्वशास्त्रेषु शिरोमणीभावं बिभर्ति ॥ यतः ।

" नार्हतः परमो देवो, न मुक्तेः परमं पदम् । न श्रीशत्रुंजयात्तीर्थं, श्रीकल्पान्न परं श्रुतम् १ । " तथाऽयं कल्पः साक्षात्कल्पद्रुम एव तस्य च पश्चानुपूर्व्या उक्तत्वात् श्रीवीरचरित्रं बीजं, श्रीपार्श्वचरित्रं अंकुरः, श्रीनेमिचरित्रं स्कंधः, श्रीऋषभचरित्रं शाखासमूहः, स्थविरावली पुष्पाणि, सामाचारीज्ञानं सौरभ्यं, फलं मोक्षप्राप्तिः । किंच–

" वाचनात्साहाय्यदानात्, सर्वाक्षरश्रुतेरपि । विधिनाराधितः कल्पः, शिवदोंतर्भवाष्टकम् । २ । एगग्गचित्ता जिणसासणंमि, पभावणापूअपरायणा जे । तिसत्तवारं निसुणंति कप्पं, भवण्णवं गोअम ! ते तरंति ॥ ३ ॥ मंत्राणां परमेष्ठिमंत्रमहिमा तीर्थेषु शत्रुंजयो, दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम् । संतोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं, सर्वज्ञोदितसर्वपर्वसु तथा श्रीवार्षिकं पर्व च ॥ १ ॥" एवं च कल्पमहिमानं आकर्ण्य तपःपूजाप्रभावनादिधर्मकार्येषु कष्टधनव्ययसाध्येषु

पूर्वोक्तचतुर्गुणादधिक पंचादिगुणं त्रयोदशगुणाच्च न्यूनं द्वादशगुणपर्यंत मध्यमं क्षेत्रम्। एवं च उत्कृष्टे क्षेत्रे, तदप्राप्तौ मध्यमे, तस्यापि अप्राप्तौ जघन्ये क्षेत्रे । सांप्रतं च गुर्वादिष्टे क्षेत्रे साधुभि॰ पर्युषणाकल्पः कर्तव्यः ॥ अयं च दशप्रकारोऽपि कल्पो दोषाभावेपि क्रियमाणस्तृतीयौषधवत् हितकारको भवति। तथाहि—केनचिद्भूपतिना स्वपुत्रस्य अनागतचिकित्सार्थं त्रयो वैद्या आकारितास्तत्र प्रथमो वैद्य आह मदीयं औषधं रोगसद्भावे रोगं हंति रोगाभावे च दोषं प्रकटयति। राज्ञोक्त सुप्तसर्पोत्थापनतुल्येनानेनौषधेन किम् ? द्वितीय॰ प्राह मदीयमौषधं विद्यमानं व्याधिं हंति रोगाभावे च न गुणं न दोष च करोति। राजा प्राह भस्मनि हुततुल्येन अनेनापि पर्याप्तं! तृतीय॰ प्राह मदीयं औषधं रोगसद्भावे रोगं हन्ति तदभावे च शरीरे सौंदर्यवीर्यपुष्टिं करोति। राज्ञोक्तं इदं औषधं समीचीनं। तद्वदयमपि कल्पो दोषसद्भावे दोषं निराकरोति दोषाभावे च धर्मं पुष्णाति। तदेव समुपस्थिते पर्युषणापर्वणि मंगलनिमित्तं पंचभिरेव दिनैः कल्पसूत्रं वाचनीयम् तच्च यथा देवेषु इंद्रः, तारासु चंद्रः, न्यायप्रवीणेषु राम॰, सुरूपेषु कामः, रूपवतीषु रंभा, वादित्रेषु भंभा, गजेषु ऐरावणः,

कुंथु ८ ष्वग्नौ ९ तथा सर्पे १०, विहर्तुं कल्पतेऽन्यतः । २ ।" तथा एभिः कारणैश्चतुर्मासकात्परतोऽपि स्थातुं कल्पते । "वर्षादविरते मेघे, मार्गे कर्दमदुर्गमे । अतिक्रमेपि कार्तिक्या–स्तिष्ठंति मुनिसत्तमाः । १ ।" एवं अशिवादिदोषाभावेपि संयमनिर्वाहार्थं क्षेत्रगुणा अन्वेपणीयास्तच्च क्षेत्रं त्रिविधं जघन्यं १ उत्कृष्टं २ मध्यमं ३ च । तत्र चतुर्गुणयुक्तं जघन्यं ते चामी–यत्र विहारभूमिः सुलभा आसन्नो जिनप्रासाद इत्यर्थः १ यत्र स्थंडिलं शुद्धं निर्जीवं अनालोकं च २ यत्र स्वाध्यायभूमिः सुलभा अस्वाध्यायादिरहिता ३ यत्र भिक्षा च सुलभा । ४ । त्रयोदशगुणं च उत्कृष्टं ते चामी । यत्र भूयान् कर्दमो न भवति १ यत्र वहवः संमूर्च्छिमाः प्राणिनो न भवंति २ यत्र स्थंडिलं निर्दोपं भवति ३ यत्र वसतिः स्त्रीसंसर्गादिरहिता ४ यत्र गोरसं प्रचुरं ५ यत्र जनसमवायो महान् भद्रकश्च ६ यत्र वैद्याश्च भद्रकाः ७ यत्र औषधानि सुलभानि ८ यत्र गृहस्थगृहाः सकुटुंवा धनधान्यादिपूर्णाश्च ९ यत्र राजा भद्रकः १० यत्र ब्राह्मणादिभ्यो मुनीनामपमानं न स्यात् ११ यत्र भिक्षा सुलभा १२ यत्र स्वाध्यायः शुद्ध्यति १३ ।

विलोक्य प्राज्ञत्वात् विचारयामासुर्यदस्माकं रागहेतुत्वाद्गुरुभिर्नटनिरीक्षणं निषिद्धं तर्हि नटी तु अत्यंतरागकारणत्वात् सर्वथा निषिद्धैवेति विचार्य नटीं नालोकितवंतः ॥

ननु तर्हि द्वाविंशतिजिनयतीनां ऋजुप्राज्ञानां भवतु धर्म॰ परं प्रथमजिनयतीनां ऋजुजडानां कुतो धर्मः? अनवबोधात्। तथा च वक्रजडानां वीरयतीनां तु सर्वथा धर्मस्य अभाव एव। मैव। ऋजुजडानां प्रथमजिनयतीनां जडत्वेन स्खलनासद्भावेपि भावस्य विशुद्धत्वाद्भवति धर्मस्तथा वक्रजडानां अपि वीरजिनयतीनां ऋजुप्राज्ञापेक्षया अविशुद्धो भवति परं सर्वथा धर्मो न भवतीति न वक्तव्यं। तथा वचने हि महान्दोषः। तदुक्तं—"जो भणइ नत्थि धम्मो, न य सामाइयं न चेवय वयाइं। सो समणसंघबज्झो, कायव्वो समण संघेण ॥ १ ॥"

तथा यो नियतमवस्थानलक्षणः सप्ततिदिनमानः पर्युषणाकल्प उक्तः सोपि कारणाभावे एव। कारणे तु तन्मध्येऽपि विहर्तुं कल्पते। तद्यथा—"अशिवे १ भोजनाप्राप्तौ २, राज ३ रोग ४ पराभवे। चतुर्मासकमध्येपि, विहर्तुं कल्पतेऽन्यतः। १। असति स्थंडिले ५ जीवाकुले ६ च वसतौ ७ तथा।

आगता गुरुभिस्तथैव पृष्टा वक्रतया अन्यानि उत्तराणि ददुर्वाढं पृष्टाश्च सत्यं प्रोचुः गुरुभिरुपालंभे च दत्ते सन्मुखं गुरूनेव उपालब्धवंतः यदस्माकं तदा नटनिषेधसमये नटीनिषेधोऽपि कुतो न कृतः? भवतां एव अयं दोषः! अस्माभिः किं ज्ञायते! इति प्रथमो दृष्टांतः ॥

तथा— कश्चिद्व्यवहारिसुतः पित्रा बहुशः शिक्ष्यमाणो जनकादीनां सन्मुखं जल्पनं न कर्तव्यं इति पितृवचनं वक्रतया मनसि दधार। अथैकदा सर्वेषु स्वजनेषु बहिर्गतेषु पुनः पुनः शिक्षयंतं पितरं अद्य शिक्षयामीति विचिंत्य कपाटं दत्वा स्थितः। आगतेषु च पित्रादिषु द्वारोद्घाटनार्थं बहुशब्दकरणेऽपि न वक्ति नचोद्घाटयति भित्त्युल्लंघनेन मध्ये प्रविष्टेन च पित्रा हसन् दृष्ट उपालब्धश्च कथयामास भवद्भिरेवोक्तं वृद्धानां उत्तरं न देयं इति द्वितीयः॥

अथ अजितादियतीनां ऋजुप्राज्ञत्वे दृष्टांतः। यथा— केचिदजितजिनयतयो नटं निरीक्ष्य चिरेणागता गुरुभिः पृष्टा यथास्थितं अकथयन् गुरुभिश्च निषिद्धाः। अथान्यदा ते बहिर्गता नटीं नृत्यंतीं

भागाः ! तदानीं भवतां नटो निषिद्धो नटे निषिद्धे च नटी सुतरां निषिद्धैव ततस्तैर्विज्ञप्तं स्वामिन् ! इदमस्माभिर्न ज्ञातं अथैवं न करिष्यामः । अत्र च जडत्वान्नटे निषिद्धे नटी निषिद्धेवेति तैर्न ज्ञातं ऋजुत्वाच्च सरलं उत्तरं दत्तं इति प्रथम. ॥

अत्र द्वितीयोऽपि दृष्टांतो यथा–कोपि कोंकणदेशीयो वणिक् वृद्धत्वे प्रव्रजितः स चैकदा ऐर्यापथिकीकायोत्सर्गे चिरं स्थितो गुरुभिः पृष्ट. एतावद्दीर्घकायोत्सर्गे किं चिंतित ? स प्रत्युवाच स्वामिन् ! जीवदया चिंतिता कथमिति ? पुनर्गुरुभि. पृष्ट आह पूर्वं गृहस्थावस्थायां क्षेत्रेषु वृक्षनिषूदनपूर्वकं उप्तानि धान्यानि बहून्यभूवन् इदानीं मम पुत्रास्तु निश्चिता यदि वृक्षनिषूदनं न करिष्यंति तदा धान्याभवनेन वराका. कथं भविष्यंति इति ऋजुत्वात्स्वाभिप्राये यथास्थिते निवेदिते गुरुभिः कथितं महाभाग ! दुर्ध्यातं भवता अयुक्तमेतद्यतीनां इत्युक्ते च मिथ्यादुष्कृतं ददौ ॥



तथा वीरजिनयतीनां वक्रजडत्वेपि दृष्टांतद्वयं । तत्र– केचिद्वीरतीर्थसाधवो नटं नृत्यंतं विलोक्य गुरुसमीपमागता गुरुभि. पृष्टा निषिद्धाश्च नटावलोकनं प्रति । पुनरन्यदा नटीं नृत्यतीं विलोक्य

तथा चोक्तं 'सप्ततिशतस्थानकग्रंथे'। देसिय १ राइय २ पक्खिय ३ चउमासिय ४ संवच्छरीय ५ नामाओ। दुण्हं पण पडिकमणा, मज्झिमगाणं तु दो पढमा ॥ १ ॥ तं दुण्हं सया दुकालं इयराणं कारणे इओ मुणिणो इति अष्टमः ॥ ८ ॥

मासत्ति। आद्यंत्यजिनयतीनां मासकल्पमर्यादा नियता। दुर्भिक्षाशक्तिरोगादिकारणसद्भावेपि शाखापुरपाटककोणकपरावर्त्तेनापि सत्यापनीयैव परं शेषकाले मासादधिकं न स्थेयं प्रतिबंधलघुत्व-प्रमुखबहुदोषसंभवात्। मध्यमजिनयतीनां तु ऋजुप्राज्ञानां पूर्वोक्तदोषाभावेन अनियतो मासकल्पः ते हि देशोनां पूर्वकोटिं यावदपि एकत्र तिष्टंति कारणे मासमध्येपि विहरंति इति नवमः ॥ ९ ॥

पज्जोसवणकप्पेत्ति। परिसामस्त्येन उषणा वसनं पर्युषणा तत्र पर्युषणाशब्देन सामस्त्येन वसनं वार्षिकं पर्व च द्वयं अपि कथ्यते। तत्र वार्षिकं पर्व भाद्रपदसितपंचम्यां कालकसूरेरनंतरं चतुर्थ्यामेवेति। सामस्त्येन वसनलक्षणश्च पर्युषणाकल्पो द्विविधः सालंबनो निरालंबनश्च तत्र निरालंबनः कार-

उपस्थापनातः प्रारभ्य दीक्षापर्यायगणना मध्यमजिनयतीनां च निरतिचारचारित्रत्वाद् दीक्षादिनादेव । अथ पितापुत्रमाताद्दुहितृराजामात्यश्रेष्ठिवणिक्पुत्रादीनां सार्द्धं गृहीतदीक्षाणां उपस्थापने को विधिः ? उच्यते यदि पित्रादयः पुत्रादयश्च समकमेव षड्जीवनिकायाध्ययनयोगोद्वहनादिभिर्योग्यतां प्राप्तास्तदा अनुक्रमेणैवोपस्थापना । अथ स्तोकं अंतरं तदा कियद्विलंबेनापि पित्रादीनामेव प्रथममुपस्थापना अन्यथा पुत्रादीनां वृद्धत्वेन पित्रादीनां अप्रीतिः स्यात् । तथा पुत्रादीनां सप्रज्ञत्वेन अन्येषां निष्प्रज्ञत्वेन महदंतरं तदा स पित्रादिरेवं प्रतिबोध्यः भो महाभाग ! स प्रज्ञोपि तव पुत्रः अन्येभ्यो बहुभ्यो लघुर्भविष्यति तव पुत्रे ज्येष्ठे तवैव गौरवं एवं प्रज्ञापितः स यदि अनुमन्यते तदा पुत्रादिः प्रथमं उपस्थापनीयः नान्यथा इति सप्तमः ॥ ७ ॥

पडिक्कमणेत्ति । अतिचारो भवतु मा वा परं श्रीऋषभवीरसाधूनां उभय कालं अवश्यं प्रतिक्रमणं कर्तव्यं एव । शेषजिनमुनीनां च दोषे सति प्रतिक्रमणं नान्यथा । तत्रापि मध्यमजिनयतीनां कारणसद्भावेपि दैवसिकरात्रिके एव प्रायः प्रतिक्रमणे नतु पाक्षिकचातुर्मासिकसांवत्सरिकाणि ।

साहिअं चीवरधारी होत्थत्ति जंबूद्वीपप्रज्ञप्तिवचनात् । सक्को अ लक्खमुल्लं, सुरदूसं ठवइ सव्वजिणखंधे। वीरस्स वरिसमहिअं, सयावि सेसाणं तस्स ट्ठिइत्ति सप्ततिशतस्थानकवचनाच्चेति ज्ञेयम् ।" साधून् आश्रित्य च अजितादिद्वाविंशतिजिनतीर्थसाधूनां ऋजुप्राज्ञानां बहुमूल्यविविधवर्णवस्त्रपरिभोगानुज्ञासद्भावेन सचेलकत्वमेव केषांचिच्च श्वेतमानोपेतवस्त्रधारित्वेन अचेलकत्वमपि इति अनियतस्तेषां अयं कल्पः । श्रीऋषभवीरतीर्थयतीनां च सर्वेषां अपि श्वेतमानोपेतजीर्णप्रायवस्त्रधारित्वेन अचेलकत्वमेव ।

ननु ? वस्त्रपरिभोगे सत्यपि कथं अचेलकत्वं इति चेदुच्यते जीर्णप्रायतुच्छवस्त्रे सत्यपि अवस्त्रत्वं सर्वजनप्रसिद्धमेव । तथाहि—कृतपोतिका नदीमुत्तरंतो वदंति अस्माभिर्नग्नीभूय नंदी उत्तीर्णा इति । तथा सत्यपि वस्त्रे तंतुवायरजकादींश्च वदंति शीघ्रं अस्माकं वस्त्रं देहि वयं नग्नाः स्म इति एवं साधूनां वस्त्रसद्भावेऽपि अचेलकत्वं इति प्रथमः ॥ १ ॥

तथा उद्देसिअत्ति उद्देशिकं आधाकर्मिकं इत्यर्थः साधुनिमित्तं कृतं अशनपानखादिमस्वादिमवस्त्र-

यद्यपि भानुद्युतयः, सर्वेषां वस्तुबोधिका बह्वयः । तदपि महीरुहगानां, प्रदीपिकेवोपकुरुते द्राग् ॥३॥
नास्यामर्थविशेषा, न युक्तयो नापि पद्यपांडित्यम् । केवलमर्थव्याख्या, वितन्यते बालबोधाय ॥ ४ ॥
हास्यो न स्यां सद्भिः, कुर्वन्नेतामतीक्ष्णबुद्धिरपि । यदुपदिशंति त एव हि, शुभे यथाशक्ति यतनीयम् ॥५॥

अत्र हि पूर्वं नवकल्पविहारक्रमेणोपागते योग्यक्षेत्रे सांप्रत च परंपरया गुर्वादिष्टे क्षेत्रे चतुर्मासीस्थिताः साधव. श्रेयोनिमित्तं आनंदपुरे सभासमक्षं वाचनादनु संघसमक्षं पंचभिर्दिवसैर्नवभिःक्षणे. श्रीकल्पसूत्रं वाचयंति । तत्र कल्पशब्देन साधूनां आचारः कथ्यते तस्य च कल्पस्य दशभेदास्तद्यथा–"आचेलक्क १ द्देसिअ २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पे १०॥१॥" व्याख्या–आचेलक्यमिति–न विद्यते चेल वस्त्रं यस्य स अचेलकस्तस्य भाव आचेलक्यं विगतवस्त्रत्वं इत्यर्थः तच्च तीर्थेश्वरानाश्रित्य प्रथमांतिमजिनयो. शक्रोपनीतदेवदुष्यापगमे सर्वदा अचेलकत्वं अन्येषां तु सर्वदा सचेलकत्व "यच्च किरणावलीकारेण चतुर्विंशतेरपि जिनानां शक्रोपनीतदेवदूष्यापगमे अचेलकत्वमुक्त तच्चिंत्यं । उसभेणं अरहा कोसलिए सवच्छरं



॥ न्यायाम्भोनिधिजैनाचार्यश्रीमद्विजयानन्दसूरिचरणकमलेभ्योनमः ॥

श्रीमद्विनयविजयोपाध्यायविरचिता

# ॥ श्रीकल्पसूत्रसुबोधिकावृत्तिः ॥

॥ ॐ अर्हँ नमः ॥ ॥ श्रीगुरुभ्यो नमः ॥ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥ श्रीसरस्वत्यै नमः ॥ ऐँनमः ॥

प्रणम्य परमश्रेय–स्करं श्रीजगदीश्वरम्। कल्पे सुबोधिकां कुर्वे, वृत्तिं बालोपकारिणीम् ॥ १ ॥

यद्यपि बह्व्यष्टीकाः, कल्पे सन्त्येव निपुणगणगम्याः। तदपि ममायं यत्नः, फलेग्रहिः स्वल्पमतिबोधात् ॥२॥

॥ अर्हम् ॥

विद्वन्मान्याः! हर्षास्पदमेतन्निखिलजनानामानन्दवतां भवतां यत्सम्प्रति श्रीआत्मानन्दग्रन्थरत्नमालाया इदमेकत्रिंश रत्नं कल्पाभिधानमतिप्रवरं सूत्ररत्नं समलङ्कृत्य सुबोधिकाभिधया वृत्त्या प्रकाश्यमानमालोक्यते जैनसंस्कृतसाहित्यसुधारससरसास्वादनतत्परैरत्र भवद्भिर्विपश्चिद्भिः। यद्यपि जातमस्यातःपुरापि प्रकाशनद्वयमस्य, परं न तत्पारगानन्दाय कल्पते श्रमणानां श्रावकाणाञ्चोत्पत्स्यते पारश्च एतेनेति नावितथम्। अतोऽस्य प्रकाशनेऽर्धव्ययायोपदेष्टुं संशोधनेऽसीमपरिश्रमञ्च विधाय न्यायाम्भोनिधिजैनाचार्यश्रीमद्विजयानन्दसूरिशिष्यप्रशिष्यैः पण्डितप्रकाण्डैर्मुनिपद्मविजयैरनुगृहीतोऽयमार्हतसमाज इति नातिरिक्तं वचः।

तथा धर्मविधे शुभोदयकरे ज्ञानरत्नाकरेऽर्थदानसाहाय्येन ज्ञानवृद्धिं विदधतो अणहिल्लपाटक (पाटण) नगरवास्तव्यानां—चूनीलाल सांकलचंद—इति नामधेयानां श्रेष्ठिवर्याणां वदान्यतापि सततमभिनन्दनीया, अनुकरणीया चान्यैरपि धनिकैरिति सततं प्रार्थ्यते—

भावनगरस्था—"श्रीजैन-आत्मानंद-सभा"

गुर्जरदेशीयसंवत् १९७१ ज्येष्ठ शुक्लपूर्णिमा-रविवार तारीख २७ जून १९१५.

म्भोनिधिजैनाचार्यश्रीमद्विजयानन्दसूरीश्वरस्थापितपञ्चनदचित्कोपसत्कं नूतनं शुद्धञ्च, तृतीयं तु श्रेष्ठि"देवचन्दलाल-भाई" जैनपुस्तकोद्धारसंस्थया मुद्रापितम् ।

एतत्पुस्तकत्रितयीनिरीक्षणेन यथाशक्ति संशोधितेप्यत्र दृष्टिदोषादक्षरयोजकदोषाद्वा यत्र क्वचनाशुद्धिर्जाता कृता वा भवेत्तत्र शोधनीयं पक्षपातपराङ्मुखैः करुणावरुणालयैः सरस्वतीनिलयैरिति प्रार्थयते—विविधविबुधकलापपालिताशेषनिदेशेभ्यः प्रतिभाप्राग्भारमन्थनमथितानेकविधागमग्रामपयोधिसमुपलब्धानवद्यविद्यापीयूषपरिपूरितनितान्तशान्तस्वान्तेभ्यः प्रौढपाण्डित्यप्रचण्डमार्तण्डकरनिकरपराहततमतमस्सकललोकविद्योतकेभ्यो निखिलजनमनःप्रासात्मानन्दश्रीमद्विजयानन्दसूरिभ्यो लब्धविनेयतानां श्रीमद्धर्षविजयमुनिमचर्चिकानां विनेयवल्लभो वल्लभविजयो मुनिः ॥

ज्येष्ठे मासे सिते वर्षे, करर्ष्यङ्केन्दु ( १९७२ ) सङ्ख्यके । विजयानन्दसूरीणा–मष्टम्यां सूर्यवासरे ॥ १ ॥
जयन्तीसमये पूर्णे, जाते सूर्यपुरे वरे । वल्लभविजयेनाय–मुपोद्घातः स्फुटीकृतः ॥ २ ॥ ( युग्मम् )

अवदद्‌थ च सा यथा गुरोर्नो—ऽनुमतिरधितिविधौ जिनागमानाम् ।
न विवृतिकरणे विचारमिच्छु—र्यदि हि तदा प्रभुसंनिधौ प्रयाहि ॥ २४ ॥"

एवमेव श्रीसमयसुन्दरोपाध्यायविरचितायां कल्पलताभिधायां श्रीकल्पसूत्रटीकायां—"अस्माभिः प्रायो गृहस्थस्याग्रे अर्थो न कथ्यते अस्मद्गुरवः उद्याने सन्ति ते कथयिष्यन्ति" इति पाठेऽपि स्पष्ट एवार्यिकाणामुपदेशदानप्रतिषेधः ॥

एवमन्यैरपि बहुभिराचार्यैस्तत्र तत्र स्थले साध्वीनां व्याख्यानदाननिषेध एव प्रत्यपादि परं लेखगौरवभयात्तद्वाक्यानि नेहोपन्यस्यन्ते, एवञ्चार्यिकाणां यदा व्याख्यातृत्वमेव प्रतिषिद्धमासीदास्तां तर्हि दूरे एव छेदसूत्रान्तःपातिदशाश्रुतस्कन्धस्याष्टमाध्ययनतया प्रसिद्धस्यास्य कल्पसूत्रस्य वाचनं श्रावणञ्चेति सम्यग् विभावनीयं सुधीभिः ॥

किञ्चात्राधिकृतकल्पद्रुमायमाणकल्पविषयेऽन्यद्यन्निगाद्यं तदग्रे व्याख्याकर्तृभिरेतैरेव निगदिष्यतेऽतस्तत्रैव कणेहत्यालोचनीयं प्रेक्षावद्भिरित्युपरम्यते पिष्टपेषणतः ॥

अस्य च संशोधनसमये त्रीणि पुस्तकानि सम्प्राप्तानि, तेषु प्रथमं मरुस्थलीयपालीनगरस्थसङ्घसम्बन्धिपुस्तकभाण्डागारसत्कं नातिनवीनमतिशुद्धं, शुद्धश्रद्धालुश्राद्धवर्यं "तेजमाल पोरवाड" इत्यनेन प्रेषितं, द्वितीयं पुनः श्रीन्याया-

मासेनैकेनेयं, सरस्वतीतोषतः कृता वृत्तिः। अणहिल्लपाटकनगरे, विजयिनि जयसिंहदेवनृपे ॥ २ ॥
दोहट्टिवसतिवासैः, श्रेष्ठिश्रीजासकस्य दानरुचेः। तदुपष्टम्भादपरञ्च, श्राविकाया वसुन्धर्याः ॥ ३ ॥
वीरादिपुत्रमातुर्नित्यं जिनसाधुपूजनरतायाः। श्रीदेवसूरिभिरसौ, भव्यजने जातविमलदयैः ॥ ४ ॥
श्रीमद्भिर्नेमिचन्द्राख्यसूरिभिः शोधितादृतैः। वृत्तिरेषातिगम्भीरसिद्धसिद्धान्तपारगैः ॥ ५ ॥"

एवञ्च प्रभावकचरितेपि श्रीहरिभद्रसूरिप्रबन्धे साध्वीनामुपदेशदानानधिकारित्वमेवोक्तं यथा—

"चक्किदुगं हरिपणगं, पणगं चक्कीण केसवो चक्की। केसव चक्की केसव, दुचक्की केसीय चक्की य ॥२१॥

अवददिति यदम्ब चाकचिक्यं, बहुतरमत्र विधापितं भवत्या।
इह समुचितमुत्तरं ददौ सा, शृणु ननु पुत्रक गोमयार्द्रलिप्तम् ॥ २२ ॥
इति विहितसदुत्तरेण सम्यक्, स च वदति स्म चमत्कृतिं दधानः।
निजपठितविचारणं विधेहि, त्वमिह सवित्रि न वेद्म्यहं त्वदर्थम् ॥ २३ ॥

ग्रन्थे । प्रकरणादिषु पञ्चाशकोपदेशपदोपदेशमालाष्टकादिष्वादिशब्दादाचाराङ्गसूत्रकृताङ्गपूज्योपदेशग्रहस्तद्ग्रथितमितिशेष इति गाथार्थः । प्रकारान्तरेण निजनाम कथयन् प्रकरणसङ्ख्यामाह ।

"देसवसुसूररीसा–हिंसाईवण्णकहियनामेहिं । पयरणमिणमो रइयं, तेवीसा तिन्निसयगाहं ॥"

व्याख्या—देव–वसु–सूर–रीसा–हिंसालक्षणा ये शब्दास्तेषु ये आदिवर्णाः प्रथमाक्षराणि तैः कथितं प्रतिपादितं नामाभिधेयं येषां ते तथा तैः, प्राकृतभाषया "देवसूरीहिं" इत्यर्थः । प्रकरण ग्रन्थसन्दर्भ इदं प्रत्यक्षं उ इति निपातः पूरणार्थो रचितं ग्रथितं, कियत्प्रमाणं ? त्रयोविंशत्यधिकत्रिशतगाथमिति गाथार्थः ॥ क्व नगरादौ विरचितमित्याह ।

"अणहिल्लवाडणयरे, जयसिंहनरेसरम्मि विज्जंते । दोहट्टिवसहिट्टिएहिं, बासट्ठी सूर नवमीए ॥"

व्याख्या—अणहिल्लपाटनगरे श्रीगुर्जरराजधान्यां जयसिंहनरेश्वरे श्रीकर्णदेवराजसुनौ विद्यमाने सति 'दोहट्टि' नामश्रावकवसतिस्थितैर्द्वाषष्ठिसंवत्सरे एकादशशतोपरिष्ठादितिशेषः ( ११६२ ) सूरेणादित्यवारेण नवमी तिथिलक्षणा तस्यां रचितमिति पूर्वगाथोक्तक्रियासम्बन्धादिति गाथार्थः ॥ समाप्तेयं जीवानुशासनवृत्तिः ॥

"एतस्य वृत्तिकरणे, पुण्यं यदुपार्जित मया तेन । सुखितोस्तु भव्यलोकः, कुग्राह वियोगतो नित्यम् ॥ १॥

प्रपाप्रदातृणामितियावत् उपदेशात् व्याख्यानशिक्षातो मध्यस्थतया रागाद्यभावत्वतः, श्रीदेवसूरिभिः श्रीवीरचन्द्रसूरीणां निजदेशनावशलब्धनिर्मलकीर्तीनां शिष्यमात्रैर्विनयगुणेपटुर्णौर्विरचितं दृब्धमेतदिदं सिद्धान्तयुक्तियुक्तं राद्धान्तयुक्तिसहितं जीवस्यात्मनो भव्यस्य वानुशासनं वोधकं विमलं निर्मलम् । तथेति किञ्च सकलागमपरमार्थकनककषपट्टलब्धोपमैर्निःशेषसिद्धान्ततत्त्वचामीकरतत्परीक्षादक्षोपलप्राप्तोपमानैः सकलगुणरत्नरोहणगिरिभिर्निखिलगुणमाणिक्यरोहणशैलैर्जिनदत्तसूरिभिरेतन्नामकैस्ससगृहनिवासिभिरितियावत् । शोधितं निर्दोषं कृतमेतज्जीवानुशासनम्, अन्येषां महेन्द्रसूरिप्रमुखाणां सूरिप्रवराणामाचार्यवर्याणां सम्मतमभिप्रेतं, किञ्चापरं यदत्र प्रकरणे अनागमिकमुत्सूत्रं तद्गीतार्थाः सिद्धान्तविदः शोधयन्तु निर्मलीकुर्वन्तु इति गाथाचतुष्टयार्थः ॥ स्वमतिकल्पितमिदं प्रकरण मिति मुग्धमतेः सन्देहः स्यात्तन्निराकरणार्थमाह ।

"समईए एत्थ नो किंपि, किंतु जं दिट्ठ कप्पववहारे । पंचकप्पे निसीहे, दसासुए पयरणाईसु ॥"

व्याख्या—स्वमत्या निजधिषणयाऽत्र प्रकरणे नो नैव किमपि स्तोकं, किन्तु नवरं यद्दृष्टमवलोकितं, केष्वित्याह । कल्पव्यवहारे एतन्नामछेदग्रन्थद्वये, पञ्चकल्पनिशीथे एतदभिधानछेदग्रन्थयुग्मे, दशाश्रुते दशाश्रुतस्कन्धनामछेद-

रमार्थानां तासामार्यिकाणां, तस्माज्जीवात्मन् ! यदि विकल्पार्थं, तिष्ठन्ति सन्निवारिता निषिद्धास्ततो वारय निषेधय मधुरवाक्येन कोमलवचसेति गाथार्थः ॥

निरमायि चायं सद्ग्रन्थस्तैर्द्वादशशताब्द्यां श्रीनेमिचन्द्रसूरीणामादेशतः, सम्मानितश्च महेन्द्रसूरिप्रभृतिभिराचार्यप्रवरैः, संशोधितश्च सूरिमण्डनैः श्रीजिनदत्तसूरिभिस्तथा च तत्पाठः ॥

"साम्प्रतं प्रकरणमिदमुपसंहरन् येषां यादृशादुपदेशादिद विहितं यया हेतुभूतया यैर्यच्छिष्यैर्यक्षामकं प्रकरणं यादृशं यैश्च यादृशैः शोधितं येषाञ्च यादृशानां सम्मतमिदमन्यैश्च यादृग्विधैः शोधनीयमित्यर्थावेदकं गाथाचतुष्टयमाह ॥

"इय सिरि सिद्धंतमहोयहीण सिरि नेमिचंदसूरीणं । उवएसाओ मज्झत्थयाए सिरिदेवसूरीहिं ॥ १ ॥
सिरिवीरचंदसूरीण, सिस्समित्तेहिं विरइयं एयं । सिद्धंतजुत्तिजुत्तं, जीवस्सणुसासणं विमलं ॥ २ ॥
तह सयलागमपरमत्थकणयकसवट्टलद्धउवमेहिं । सयलगुणरयणरोहणगिरीहिं जिणदत्तसूरीहिं ॥ ३ ॥
सोहियमेयं अन्नेसिं सूरिपवराण सम्मयं किंच । जं एत्थ अणागमियं, तं गीयत्था विसोहिंतु ॥ ४ ॥"



व्याख्या—इतिः प्रकरणसमाप्तौ श्रीसिद्धान्तमहोदधीनां शोभनागमवृहत्समुद्राणां श्रीनेमिचन्द्रसूरीणां एतन्नाम्नां श्रीमदुत्तराध्ययनलघुवृत्ति-वीरचरित-रत्नचूडादिशास्त्रकर्तॄणां बृहद्गच्छशिरोमणीनां निष्कलङ्कसिद्धान्तव्याख्यानामृत-

"संपइ पुणो न दिज्जइ, पकप्पगंथस्स ताण सुत्तत्थो। जइयाविय दिज्जंतो, तइयाविय एस पडिसेहो॥"

व्याख्या—साम्प्रतमधुना पुनर्नैव दीयते वितीर्यते प्रकल्पग्रन्थस्य निशीथस्य तासामार्यिकाणां सूत्रार्थः सूत्रेण वर्णपद्धत्या सहितोऽर्थोऽभिधेयः सूत्रार्थं उभयमिति हृदयम्। यदापि च दीयते वितीर्यते स्म तदापि च तस्मिन्नपि काले एष व्याख्यानकरणलक्षणः प्रतिषेधो निवारणमिति गाथार्थः॥ अमुमेवार्थं दृष्टान्तपूर्वकं दर्शयन्नाह।

"हरिभद्दधम्मजणणीए, किंच जाइणिपवत्तिणीएवि। एगोविय गाहत्थो, नो सिट्ठो मुणियतत्ताए॥"

व्याख्या—सूचनात्सूत्रस्य हरिभद्रसूरिधर्मजनन्यापि धर्मदातृत्वेन प्रतिपन्नमात्रा, किञ्चाभ्युच्चये, याकिनीप्रवर्तिन्या एतन्नाममहत्तरया न केवलमन्याभिरित्यपि शब्दार्थः, एकोपि च गाथार्थोऽभिधेय आस्तां प्रभूत इत्यपेरर्थो नो नैव शिष्टः कथितो मुणिततत्त्वया ज्ञातपरमार्थया, तथा च किल "चक्किदुगं हरिपणगं" इत्यादि गाथायाश्चार्थं पृष्टा हरिभद्रभट्टेन न च तथा कथित इति सुप्रतीतोयमिति गाथार्थः॥ एवं ज्ञाते जीवोपदेशमाह—

"बहुमन्नसु मा चरियं, अमुणियतत्ताण ताण ता जीव। जइ ठंति वारियाओ, ता वारसु महुरवक्केण॥"

व्याख्या—बहुमन्यस्व भव्यमिदमिति मंस्थाः, मेति निषेधे चरितं धर्मकथनलक्षणं, अमुणिततत्त्वानामविदितप-

"मुद्धजणछेत्तसुहवोह सस्स विद्दवणदक्खसमणीओ । ईईओवि य काओवि, अडंति धम्म कहंतीओ ॥"

व्याख्या—मुग्धजनाः स्वल्पबुद्धिलोकास्त एव क्षेत्राणि बीजवपनभूमयस्तेषु शुभबोधः प्रधानाशय. स एव सस्यं धान्यं तस्य विद्रवण विनाशकरणं तत्र दक्षाः पटूव्य. प्राकृतत्वाचात्र विभक्तिलोपः श्रमण्य आर्यिका ईतय इव लिङ्गाद्याः काश्चन न सर्वा अटन्ति ग्रामादिषु चरन्ति धर्मं दानादिक कथयन्त्यो ब्रुवाणा इति गाथार्थः । एतदपि निराकर्त्तुमाह—

"एगंतेणंविय तं, न सुंदरं जेण ताण पडिसेहो । सिद्धंतदेसणाए, कप्पट्ठियएव गाहाए ॥"

व्याख्या—एकान्तेनैव सर्वथा तद्धर्मकथनं न नैव सुन्दरं भव्यं येन तासां साध्वीनां प्रतिषेधो निराकरण सिद्धान्तदेशनाया आगमकथनस्य, कया प्रतिषेधः ? कल्पस्थितयैव गाथयेत्यर्थ. । कल्पगाथामेवाह—

"कुसमयसुईण महणो, विबोहओ भवियपुंडरियाणं। धम्मो जिणपण्णत्तो, पकप्पजइणा कहेयव्वो ॥"

व्याख्या—कुसमयश्रुतीनां कुसिद्धान्तमतीनां मथनो विनाशको विबोधको विकाशको भव्यपुण्डरीकाणां मुक्तियोग्यप्राणिशतपत्राणां धर्मो दानादिको जिनप्रज्ञप्तो मुनीन्द्रगदितः प्रकल्पयतिना निशीथज्ञसाधुना कथयितव्यो वक्तव्यो न पुन. साध्व्येति हृदयमिति गाथार्थः ॥ ननु ! यदि तासां स दीयते ततोऽनिन्द्यं तद्धर्मकथनमित्याह ।

दिसुश्लोकैः । समयश्चैषां—"रसनिधिरसशशिवर्षे, ज्येष्ठे मासे समुज्ज्वले पक्षे । गुरुपुष्ये यत्नोयं, सफलो जज्ञे द्वितीयायाम् ॥" इति स्वकृतकल्पटीकाप्रशस्तिश्लोकात्ससदशशतीयो वैक्रमोऽब्दः सुप्रतीत एव ।

अस्य वाचने श्रावणे चाधिकारिणस्तत्रभवन्तः शुक्लमतयो यतय एव, तथैव शास्त्रेभिहितत्वात् । तथा चोपाध्यायविनयविजयपादाः—

"अथ तस्य श्रीकल्पस्य वाचने श्रवणे च अधिकारिणो मुख्यवृत्त्या साधु–साध्व्यस्तत्रापि कालतो रात्रौ विहितकालग्रहणादिविधीनां साधूनां वाचनं श्रवणं च, साध्वीनां च निशीथचूर्ण्याद्युक्तविधिना दिवापि श्रवणम् । तथा श्रीवीरनिर्वाणादशीत्यधिकनवशत ( ९८० ) वर्षातिक्रमणे मतान्तरेण च त्रिनवतियुतनवशत ( ९९३ ) वर्षातिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य समाधिमाधातुमानन्दपुरे सभासमक्षं समहोत्सवं श्रीकल्पसूत्रं वाचयितुमारब्धं, ततः प्रभृति चतुर्विधोपि सङ्घः श्रवणेऽधिकारी । वाचने तु विहितयोगानुष्ठानः साधुरेव ॥"

ये तु पण्डितंमन्या आर्यिकाणामप्यस्य वाचनं श्रावणं श्रमणवत् पट्टमधिरुह्योपदेशदानञ्च समर्थयन्ति श्रद्धया च शृण्वन्ति ते नूनमार्हतसमयरहस्यानभिज्ञा एव वेदितव्याः, पुरुषप्रधानं हि खलु जिनशासनं न तु स्त्रीधर्मप्राधान्यं तत्र, अत एव श्रीमल्लिनाथाधिपत्यमाश्चर्यान्तर्गतमावेदितं तत्त्वज्ञैरिति सुप्रसिद्धमेव । सूरिप्रवराः श्रीदेवसूरयोपीदमेवाधिकृत्य स्पष्टं जगुर्जीवानुशासने ग्रन्थरत्ने । तथाहि—

धारिश्रीहेमचन्द्राचार्यवचनात्सुव्यक्तमेव । मण्डयामासायं मुनिमतल्लिका निरस्तसमस्तदोषान्निष्कलङ्कान्महावीरप्रभोर्द्वितीयशताब्द्यां पुण्यं भूमिभागं पुण्यभरेणात्मीयशरीरेण । एतेन महर्षिधुर्येण श्रेयोनिश्रेयससाधने स्वप्रशस्तजीवनेप्राणार्पितोपकृत्यै विश्वजनताया आवश्यक–दशवैकालिक–उत्तराध्ययन–आचाराङ्ग–सूत्रकृताङ्ग–सूर्यप्रज्ञप्ति–ऋषिभाषित–दशा–कल्प–व्यवहाराणां निर्युक्तयो बृहत्कल्प–व्यवहार–दशाश्रुतस्कन्धाश्चेति सूत्राणि मिलित्वा त्रयोदश ग्रन्थाः । भद्रबाहुसंहितेत्यभिख्याख्यातो ज्योति.स्वरूपो ज्योतिर्ग्रन्थोऽप्येतस्यैव महात्मनः कृतिः । वराहमिहरविहितोपद्रवप्रशमायोपसर्गहरस्तोत्रमेतेनैव महर्षिमूर्द्धन्येन व्यरचीत्यपि नाप्रसिद्धम् । अमुष्य भगवतोऽन्यो व्यतिकरस्तु परिशिष्टपर्वतोऽवसेय. सुधीभि. ।

सन्त्यस्य यद्यपि चूर्णि–टिप्पण–व्यतिरिक्ता अपि बहवो वृत्तय. परं नालं ता निखिलजनबोधाय मोदाय चेत्यतः सफलजन्मिसुबोधायालं सुबोधिकाभिधया सम्प्रत्युपदीक्रियमाणया सुवृत्त्या सनाथीकृतोयं ग्रन्थ उपक्रियाप्रवणैः पण्डितप्रकाण्डैरुपाध्यायश्रीविनयविजयपूज्यपादैः । वावदति चास्या अन्याभ्यो वृत्तिभ्योऽतिरिच्यमानतोपादेयता च त एव मुनिपुङ्गवा.— ॥ १ ॥

"यद्यपि बह्व्यष्टीका, कल्पे सन्त्येव निपुणगणगम्याः । तदपि ममायं यत्न., फलेग्रहिः स्वल्पमतिबोधात् ॥ १ ॥
यद्यपि भानुद्युतयः, सर्वेषां वस्तुबोधिका बह्व्यः । तदपि महीगृहगानां, प्रदीपिकैवोपकुरुते द्राक् ॥ २ ॥" इत्या-

# "उपोद्घातः"



स्याद्वादिने नमस्तस्मै, भेदिने कर्मभूभृताम् । वेदिने वस्तुजाताना-मात्मानन्दाद्भुतश्रिये ॥ १ ॥

नाहिंसातोऽपरो धर्मः, स्याद्वादान्नापरा प्रमा । नात्मानन्दात्परो नन्दः, श्रीवीरान्नापरः प्रभुः ॥ २ ॥

अयि ! समस्तानवद्यविद्यास्तोमपारावारपारीणो विबुधराजशीर्षण्या महान्तो धीमन्तः ! नागोचरचरमेवात्र भवतां धीमतां यत्रत्यब्दं पर्युषणापर्वणि समाकर्ण्यमाणतया कल्पकल्पस्य कल्पसूत्राभिधानस्य सम्प्रत्युपदीक्रियमाणस्यास्य ग्रन्थरत्नस्य कियत्प्राशस्त्यमुपादेयत्वमावश्यकत्वञ्चेति । प्राणायि चायं ग्रन्थग्रामग्रामणीग्रन्थः पावनतरेण प्रासाखिलकलाकलापानवद्यहृद्यपद्यप्रतिपद्यमानामानविद्याधरीकृतविद्याधरेण सततेप्सिततमसाधनानिमेषभूरुहायमाणविद्यावितरणेन अपूर्वपूर्वविस्रवणेन श्रुतकेवलिना श्रीमद्भद्रबाहुस्वामिना छेदसूत्रान्तःपातिश्रीदशाश्रुतस्कन्धस्याष्टमाध्ययनत्वेनोद्धृत्य नवमादनवमात्पूर्वादिति। श्रुतकेवलित्वञ्चास्य महाभागस्य "अथ प्रभवः प्रभुः । शय्यम्भवो यशोभद्रः, सम्भूतिविजयस्तथा । भद्रबाहुः स्थूलभद्रः, श्रुतकेवलिनोहि षट्।" इति समस्ततन्त्रापरतन्त्रकलिकालसर्वज्ञविरुद-

॥ श्रीमद्विजयानन्दसूरिपादपद्मेभ्यो नमः ॥

॥ श्रीआत्मानन्दजैनग्रन्थरत्नमालाया एकत्रिंश ( ३१ ) रत्नम् ॥

॥ उपाध्याय–श्रीमद्विनयविजयगणिविरचितया सुबोधिकाभिधया वृत्त्या समलङ्कृतम् ॥

# ।श्रीकल्पसूत्रम्।

न्यायाम्भोनिधिजैनाचार्यश्रीमद्विजयानन्दसूरिपुरन्दरप्रशिष्यपण्डितप्रकाण्डश्रीमद्–हर्षविजयशिष्यश्रीमद्–वल्लभविजयमुनिमतल्लिकोपदिष्टाणहिल्लपाटक ( पाटण ) नगरवास्तव्यश्रेष्ठिवर्य–"चूनीलाल सांकलचंद" द्रव्यसाहाय्येन

प्रकाशयित्री—भावनगरस्था श्रीजैनआत्मानन्दसभा ।

इदं पुस्तकं मोहमय्यां वल्लभदास–त्रिभुवनदास गांधी "सेक्रेटरी जैनआत्मानन्दसभा भावनगर" इत्यनेन निर्णयसागर मुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र येसू शेडगे द्वारा मुद्रयित्वा प्रकाशितं ।

वीरसंवत् २४४१ । आत्मसंवत् २० । विक्रमसंवत् १९७२ । सन १९१५ ।



U. M. Mangal Pay

Printed by Ramchandra Yesu Shedge "Nirnaya-Sagar" Press,
23 Kolbhat Lane, Bombay.



Published by Vallabhadas Tribhuvandas Gandhi, Secretary,
Shri Jain Atmanand Sabha, Bhavanagar.